भगालम् । न० नृकरोटिकायाम् । नृमस्तके ॥ भनक्ति । भञ्जो चामर्द्दने । बाहुलकात् कालन् । नलोप । न्यङ्क्वादित्वात् कुत्वम् ॥

भगाली । पुं० चन्द्रमौली । सदाशिवे ॥ भगालमस्यास्ति । इनि ॥

भगिनी । स्त्री० सहोदरायाम् ॥ स्वसरि ॥ भग कल्याणम् ० इच्छा वास्त्यस्याः । इनि । ङीप् ॥

भगिनीपति । पुं० आवुत्ते ॥ भामे । । भगिन्याः पति ॥

भगीरथ । पुं० सूर्यवंशीयनृपतिविशेषे । दिलीपात्मजे ॥ योहि गङ्गास्वर्गादानीयभागीरथीतिसञ्ज्ञा चकार ॥

भगोल । पुं० भपञ्जरे । नक्षत्रचक्रे ॥

भगो । अ० ) हेभगवन्०

भगो । अ० ) इतिसम्बोधने ॥

भग्न । त्रि० पराजिते ॥ स्फुटिते । फूटा०इ०भा० ॥ भञ्ज्गे ॥ तोड़ा० इ०भा० ॥ यथा । चिरकालोषितं जीर्णं कीटनिष्कुषितंधनुः । किञ्चित्र यदिरामेणभग्नं क्षत्रियकाम्बिके ॥ भञ्जे : क्त ॥ न०रोगविशेषे । अस्थिविश्लेषलक्षणे ॥

भग्नपादर्क्षम् । न० पुष्कराख्यनक्षत्रषट्के ॥ यथा । पुनर्वसूत्तराषाढाः कृत्तिकोत्तरफल्गुनी । पूर्वभाद्र विशाखर्क्षं चषड्तेपुष्करा स्मृताः ॥ भग्नपादर्क्षसंयोगात्० द्वितीया द्वादशीषष्ठि । सप्तमीचार्कमन्दारि जायतेजारजोध्रुवम् ॥

भग्नपृष्ठ । पुं० सम्मुखे ॥ इ०त्रि० शेष ॥

भग्नसन्धि । पुं० शरीरस्थसन्धिस्थानभग्नरोगविशेषे ॥ तस्यौषधं यथा । अभयात्रिफलाव्योषं सर्वैरेभिः समीकृतैः । तुल्योगुग्गुलुनायोज्योभग्नसन्धिप्रसारकः ॥

भग्नसन्धिकम् । न० घोले ॥

भग्नात्मा । पुं० चन्द्रमसि ॥

भग्नाश । त्रि० हताशे ॥

भग्नी । स्त्री० भगिन्याम् ॥

भङ्गारी । स्त्री० दंशे ॥

भङ्क्ता । त्रि० भङ्गकर्त्तरि ॥ भनक्ति । भञ्जो० । तृच् ॥

भङ्ग । पुं० तरङ्गे । वीच्याम् । स्त्रस्त्योर्म्याम् ॥ भज्यते । भञ्जो० । कर्मणिघञ् ॥ जयविपर्यये । पराजये । भञ्जनम् । घञ् ॥ भेदे ॥ रोगविशेषे ॥ रोगमात्रे ॥ स्फोटने ॥ कौटिल्ये ॥ भये ॥ विच्छित्तौ ॥ जलनिर्गमे ॥ न० खण्डे ॥

भङ्गवासा । स्त्री० हरिद्रायाम् ॥

भङ्गसार्थ । त्रि० कुटिले ॥

भङ्गा । स्त्री० शणाख्यशस्यान्तरे । मा

तुलान्याम् ॥ इन्द्राशने । विजया याम् । भाङ्ग० इ० भा० । भङ्गाक फहरीतिक्ताग्राहिणीपाचनीलघु । तीक्ष्णोष्णापित्तलामोहमदवाग-वह्निवर्द्धनी ॥ भज्यतेऽनया। भञ्जो० । अकर्त्तरिचेतिहलश्चेतिवा० घञ् । टाप् ॥ चित्रतायाम् ॥

भङ्गाकटम् । न० भङ्गारजसि ॥ अला बूतिलेति० कटच् ॥

भङ्गान । पु० मत्स्यविशेषे ॥ दीर्घज ङ्गले । भाङ्गन० इ० गौ० दे० भा०

भङ्गि । स्त्री० भक्तौ ॥ वीच्याम् ॥ विच्छेदे ॥ कौटिल्यप्रभेदे । त्रिभ ङ्ग्याम् ॥ विन्यासे । भङ्गे ॥ व्याजे ॥ छलनिभे ॥नानाविधशब्दरचना वैदग्ध्यविशेषाभङ्गयन्तर्वक्त्यव्याख्या-तार ॥ भङ्गस्यकरणम् । तत्करोतो-तिण्यन्तादिच् ॥

भङ्गिमा । पु० भङ्ग्याम् ॥ यथा । अ धरेकाञ्जनचारुदृशोस्ताम्बूलरङ्गिमा । प्राणनाथकिमेतत्ते वेशविन्यास-भङ्गिमा ॥

भगी । स्त्री० त्रिभङ्ग्याम् । कौटि-ल्ये । अगसनोहरविन्यासे ॥ ना-नाभिमानमलरागिवचोविभगीभ गीशतनयनयोरपिचातुरीच । आ भीरनन्दनमुखाम्बुजसगशसौवशी रवोयदिनमामवशीकरोतीत्युद्भट

भगुर । पु० नद्यावङ्के । त्रि० कुटि ले । वक्रे ॥ नश्वरे ॥ भज्यतेस्वयमे व । भञ्जो० । भञ्जभासीतिघुरच्० कर्मकर्त्तर्येव ॥

भगुरा । स्त्री० अतिविषायाम् ॥ प्रिय ङ्गौ ॥

भङ्ग्यम । न० भागीने ॥ भगायाभव नक्षेत्रम् । विभाषातिलमाषोमाभ ङ्गाणुभ्य इ०पक्षेयत् ॥ भंगार्हे । भ ङ्गमर्हति । दण्डादित्वाद्यत् ॥

भचक्रम् । न० राशिचक्रे ॥ यथा । भमावर्त्तोभचक्रेस्मिन्ध्रुवोनाभौव्य स्थित । आराचक्रेत्विन्दुभौमौशु क्रजीवशनैश्वरा ॥ राहु केतुरग स्त्यचनक्षत्राण्यथराशय । यदादि कुसुश्चासुमेरोर्भूगोलकोद्भवा ॥ छा याभवेत्तदारात्रि स्तात्तद्विरहा द्दिनम् । सूर्येन्द्वोरुपरागस्तुगोलच्छा ययाभवेत् ॥ अन्योन्ययोस्तयोरेवका रणात् । ग्रासमोक्षौतुजायेतेतत्रात पूर्वपश्चिमौ ॥ तत्रपुण्यफलाङ्गाग क्रतोराहोस्तुविष्णुनेत्याद्यौवह्निपुरा णेभेदनामाध्याय ॥ अथभचक्र भ्रमणव्यवस्थामाहसिद्धान्तशिरोम णौ ॥ निरक्षदेशेक्षितिमण्डलोपगौ ध्रुवौनर पश्यतिदक्षिणोत्तरौ । तदाश्रितं खेजलयन्त्रवत्सदाभ्रमद्भ चक्रं निजमस्तकोपरि ॥ उदग्दिशंया तियथायथानरस्तथातथाखान्नतमृक्ष मण्डलम् । उदग्ध्रुवपश्यतिचोन्नत

चितेस्तदन्तरेयोजनजा पलाशका ॥ योजनसङ्ख्याभाश्चे२६०गुणिता कुपरिधिहृता४९६७भवन्त्य शा भूमौकच्छायावाभागेभ्योयोजनानिच व्यस्तम् ॥ इति ॥

भजन् । त्रि० विभजति । भागकर्त्तरि ॥ सेवाकर्त्तरि । सेवति ॥ भजति । भजसेवायाम् । लट शत्रादेश ॥

भजनम् । न० भक्तौ ॥ भाग सेवायाम् ॥ भजेर्भावेल्युट् । दारार्त्ते-येभजनसहायापुत्रार्त्ते येतद्धनकाया । धनमर्पितद्वयेरिभजनार्थैनोर्च्चे देत तत्सर्वंव्यर्थम् ॥

भजमान । त्रि० औपयिके । न्यायागते ॥ शरणागते ॥ भजतेफलमनुवध्नाति । भज० । ताच्छील्येति० चानश्० शानज्वा ॥ भागकर्त्तरि ॥ सेवाकर्त्तरि ॥

भजिष्णु । त्रि० भजनशीले ॥

भञ्जक । पु० त्रि० भञ्जनकर्त्तरि ॥ भनक्ति । भञ्जो० । लट शतृ ॥

भञ्जनम् । न० खडने ॥ भञ्जेर्भावेल्युट् ।

भञ्जनक । पु० मुखरोगविशेषे । यथा । वक्त्रं वक्र भवेद्यस्यदन्तभगश्च जायते । कफवातकृतोव्याधि स भञ्जनकसञ्ज्ञित ॥

भञ्जक । पु० देवकुलोद्भूततरौ । काचिमे ॥

भञ्जा । स्त्री० अन्नपूर्णायाटव्याम् ॥

भञ्जित । त्रि० खण्डिते ॥

भट । पु० योद्धरि । वीरे ॥ पामरविशेषे ॥ म्लेच्छप्रभेदे ॥ मिथ्याभाषिणिसेवके ॥ रात्रिचरे ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वह्नकारात्नटीजातोनटिकावरवारक । इ० प० पु० ॥ भटति । भटभृतौ । पचाद्यच् ॥

भटा । स्त्री० वन्द्रवारुण्याम् । राखालशसा० इ० द० भा० ॥

भटित्रम् । न० शूलाकृते । शूल्य । शलपक्वमांसे । शूला० सू० भा० । भटतिभव्यतेवा । भट० । अशित्रादिति० सूत्र ॥

भटी । स्त्री० भटयोषिति ॥

भट्ट । पु० मीमांसकविशेषे भाट० इ० भा० प्र० वर्णसङ्करजातिविशेषे ॥ तस्योत्पत्तिर्ब्रह्मवैवर्त्ते यथा । वैश्यायाशूद्रवीर्येण पुमानेकोवभूव ह । सभट्टोवावदूकश्चसर्वेषास्तुतिपाठक ॥ अपिच तत्रैव । क्षत्रियाद्विप्रकन्यायाभट्टोजातोनुवाचक । इति ॥ शिविराग्निकिराच्चालस्यवासोदेय । यथा । भट्ट वैद्य पुष्पकारस्यापयेच्छिविराग्निके । इ० ॥

भट्टाचार्य । पु० भट्टाचार्ययोर्मताभिज्ञे ॥ तुतातभट्टमतमीमांसाशास्त्रम् उदयनाचार्यमतन्यायशास्त्रम्०एत

दुभयमतनिष्णातोभट्टाचार्य ॥

भट्टार । त्रि॰ पूज्ये ॥ भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि ॥ भट्ट इच्छतिवा । कर्मण्यण् ॥

भट्टारक । पु॰ नाट्यवाचा॰ नृपे ॥ नाट्योक्ता॰ देवे ॥ तथा॰ तपोधने ॥ त्रि॰ पूज्ये ॥ भटति । भटपरिभाषणे । क्विप् । भट्चासौतारकश्च । पृषोदरादित्वात्॰ ष्टुत्वनिषेधोन ॥ भट्ट स्वामित्वम्॰ इच्छतिवा । कर्मण्यण् । तत स्वार्थेक ॥

भट्टारकवार । पु॰ आदित्यवारे ॥

भट्टि । पु॰ सनामप्रसिद्धे रामकथाश्रयेमहाकाव्ये ॥

भट्टिनी । स्त्री॰ नाट्योक्त्याऽकृताभिषेकायाराजयोषायाम् ॥ ब्राह्मण्याम्

भड । पु॰ वर्णसङ्करजातिविशेषे ॥ सतुलेटात्तीवरकन्यायाजात । यथा । लेटस्तीवरकन्यायाजनयामास षण्नरान् । माल्ल मल्ल मातरञ्च भडकोलस्वकन्दरम् ॥ इ॰ ब्र॰ वै॰ पु॰ ॥

भडाग्नि । पु॰ अग्निविशेषे ॥ भड भडइतिशब्दयुक्तो वह्नी ॥

भडिल । पु॰ शूरे ॥ सेवके ॥ भडइतिसौत्रोधातु । सलिकल्यनिमहिभडिभ डिश डिपि डितु डिकु किभूभ्यइलजिति॰ इलच् ॥

भणित । त्रि॰ कथिते । शब्दिते ॥

भणिति । स्त्री॰ वाचि ॥

भण्टाकी । स्त्री॰ वार्ताक्याम् ॥ भण्यते॰ भण्यतेवा । भटभृतौ॰ भणश्च्देवा । पिनाकादयश्चेतिसाधु ॥ वृहत्याम् ॥

भण्टिका । स्त्री॰ वृन्ताके । भटा॰ भण्टा॰ इ॰ भा॰ ॥

भण्टुक । पु॰ श्योनाकवृक्षे ॥

भण्ड । पु॰ चाटुवटौ । अश्लीलभाषिणिभाण्ड॰ इ॰ भा॰ ॥ भण्डते । भडिकल्याणे॰ पचाद्यच् ॥

भण्डक । पु॰ खञ्जनखगे ॥

भण्डनम् । न॰ कवचे ॥ युद्धे ॥ खलीकाकारे ॥

भण्डहासिनी । स्त्री॰ वेश्यायाम् ॥

भण्डि । स्त्री॰ वीच्याम् ॥

भण्डिका । स्त्री॰ मञ्जिष्ठायाम् ॥

भण्डिर । पु॰ भण्डिले ॥ शिरीषवृक्षे ॥ रलयोरैकत्वम ॥

भण्डिल पु॰ । शिरीषवृक्षे भण्डति । भडिकल्याणे ॰ परिभाषणेवा । सलिकलीति॰ इलच् । त्रि॰ दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री॰ मञ्जिष्ठायाम् ॥ भण्डति । भण्डश्चाभण्डने । पचाद्यच् । गौ॰ ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री॰ मञ्जिष्ठायाम् ॥

भण्डीर । पु॰ कोविदारे । काश

नारे ॥ तण्डुलीयबीजे ॥ शिरीषवृक्षे ॥ भण्डीरोरन् ॥

भण्डीरलतिका । स्त्री० मञ्जिष्ठायाम् ॥

भण्डीरी । स्त्री० मञ्जिष्ठायाम् ॥ भण्डति । भण्डश्रामर्दने । वा० ईरन् गौ० ॥

भण्डील । पु० मञ्जिष्ठायाम् ॥

भण्डुक । पु० मत्स्यविशेषे । भाकुर० ऊ० गौ० दे० भा० ॥

भण्डूक । पु० श्योनाकवृक्षे ॥

भदन्त । पु० सौगतादिबुद्धे ॥ सुतेजसि ॥ मायादेवीसुते ॥ त्रि० प्रव्रजिते ॥ पूज्ये ॥ भदते ॥ भदिकल्याणेसुखेच । भन्देर्नलोपश्चेतिझच् ॥

भदाक । पुं० न० मङ्गले ॥ भन्दते। भदि० । पिनाकादित्वात्साधु ॥

भद्रम् । न० कल्याणे ॥ शर्मणि । सौख्ये ॥

भद्र । पु० शिवे ॥ खञ्जरीटे ॥ वृषभे ॥ कदम्बके । करिजातिविशेषे ॥ मेरुशृङ्गवलान्तर्गतवलदेवे । रामचरे ॥ सुद्यान् ॥ न० मङ्गले ॥ मुस्ते ॥ काञ्चने ॥ त्रि० श्रेष्ठे । भन्दनीये ॥ स्तुत्ये ॥ साधौ ॥ पु० स्त्री० करणान्तरे । विष्टिसञ्ज्ञके ॥ मृणाले ० । भन्दते । भदि० । ऋज्रेन्द्र तिरन् ० भन्देर्नलोपश्चनिपात्यते ॥

भद्रक । पु० देवदारुणि ॥ सुपार्श्वाख्यविष्कम्भशैलमूले० धृतिमन्नामकाननम् ० तत्रत्यह्रदे ॥ न० भद्रमुस्तके ॥ त्रि० मनोज्ञे

भद्रकणट । पु० गोक्षुरे ॥

भद्रकर्ण । । पु० सिद्धस्थानविशेषे ॥ भद्राख्याह्रद्रकर्णके ॥

भद्रकर्णह्रद । पु० तीर्थविशेषे ॥

भद्रकर्णी । स्त्री० गन्धालिकायाम् ॥ ॥ गोकर्णाधिवासिन्यादेव्याम् ॥

भद्रकाली । स्त्री० कात्यायन्याम् । महिषमर्दिन्याम् ॥ औषधीभेदे । गन्धोल्याम ॥ भद्रं कल्याणं कालयति वर्द्धयति । कर्मण्यण् भद्राचासौकालीचेतिवा ॥

भद्रकाशी । स्त्री० भद्रमुस्तायाम ॥

भद्रकुम्भ । पु० पूर्णकुम्भे । भद्रस्य० भद्रोवाकुम्भ

भद्रगन्धिका । स्त्री० मुस्तके ॥

भद्रङ्कर । त्रि० क्षेमङ्करे । शुभङ्करे ॥

भद्रचूड । पु० क्षुद्रीभेदे । लङ्कास्थायिनि ॥

भद्रज । पु० इन्द्रयवे ॥

भद्रतरुणी । स्त्री० कुब्जकवृक्षे ॥

भद्रतुरगम् । न० जम्बूद्वीपस्य नववर्षान्तर्गतवर्षविशेषे ॥ यथा ।

माल्यवज्जलधिमध्यवर्त्तियत् तत्, भद्रतुरगजगुर्बुधा ॥ इ० सिद्धान्तशिरोमणि ॥

भद्रदन्तिका । स्त्री० दन्तीवृक्षप्रभेदे । क्षिप्रकृष्णायाम् । जयावहायाम् ॥

भद्रदारु । पु० न० देवदारुणि ॥ न० सरलवृक्षे ॥ भद्रदारु ॥

भद्रदार्वादिक । पु० औषधगणवि० ॥

भद्रनामा । पुं० काष्ठकुट्टखगे ॥

भद्रनामिका । स्त्री० त्रायन्तीवृक्षे । वहला०गौ० दे० भा० प्र० ॥

भद्रनिधि । पु० महादानविशेषे ॥

भद्रपर्णी । स्त्री० सुभगायाम् ॥ भद्रपतिर्यस्याः ० इतिविग्रहे०नित्यसपत्न्यादिष्विति पतिशब्दस्य नान्तादेशे० नान्तलक्षणोङीप् ॥

भद्रपदा । स्त्री० प्रोष्ठपदासु । पूर्वभाद्रपदोत्तरभाद्रपदनक्षत्रयोः ॥ भद्रपद यासाम् ० ता । अचारो पादकुल ॥

भद्रपर्णी । स्त्री० गम्भार्याम् ॥ भद्राणिपर्णान्यस्याः । पाककर्णेतिङीष् ॥ प्रसारण्याम् ॥

भद्रपीठ । पु० सिंहासने ॥

भद्रबलन । पु० बलरामे ॥

भद्रबला । स्त्री० लताविशेषे । प्रसारण्याम् । कटम्भरायाम् ॥ भद्रबलमस्याः ॥ बलायाम् ॥

भद्रमल्लिका । स्त्री० वेल्लीतिख्यातपुष्पे ॥

भद्रमल्ली । स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज । पु० शरे । वृत्तुवेष्टने । सरकण्डा० इ० भा० ॥

भद्रमुस्त । पु० भद्रमुस्तके ॥ भद्रमुस्तकश्च ॥

भद्रमुस्तक । पु० नागरमुस्तके ॥ भद्रमुस्ताच ॥

भद्रमुस्ता । स्त्री० भद्रमुस्तके । गुन्द्रायाम् ॥

भद्रयवम् । न० कुटजफले । कलिङ्गे । इन्द्रयवे ॥ यवाकारबीजत्वाद्यवम् । भद्रञ्चतद्यव च ॥

भद्ररेणु । पु० ऐरावतहस्तिनि ॥

भद्रवट । पु० भौमतीर्थविशेषे ॥

भद्रवत् । न० देवदारुणि ॥

भद्रवती । स्त्री भद्रपर्ण्याम् ॥ कट्फले ॥

भद्रवर्मा । पु० नवमालिकायाम् । नवाल्याम् । नवारा० इ० भा० ॥

भद्रवल्लिका । स्त्री० गोपवल्ल्याम् । अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली । स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे । शतभीरौ । अष्टापदिकायाम् ।

मदनमालो॰ड़॰ हापरमाली॰ड़॰
च॰गी॰दे॰भा॰ ॥

भद्रश्रयम् न॰ चन्दने ॥

भद्रश्री । पु॰ चन्दनवृक्षे ॥ भद्रा श्रीरस्य ॥

भद्रसोमा । स्त्री॰ गङ्गायाम् ॥

भद्रा । स्त्री॰ रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा । भद्रा तथोत्तरगिरीन् उत्तरांश्चतथाकुरून् । अतीत्योत्तरमम्भोधिमभ्येति परमहा मुने ॥ प्रसारिण्याम् ॥ कटफले ॥ अनन्तायाम् ॥ तिथिभेदे । द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम् । अपराजितायाम् ॥ नील्याम् ॥ बलायाम ॥ शम्याम् ॥ वचायाम ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे । गवि ॥ काकोदुम्बरिकायाम् ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ छायागर्भजात सूर्यकन्यायाम् । श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम् । दुर्गायाम् ॥ यथा । भद्राख्याद्भद्रकर्णी॰इति ॥ विष्ट्याम् ॥ यथा । शुक्ले पूर्वार्द्धेऽष्टमी पञ्चदश्योर्भद्रैकादश्याचतुर्थ्याः परार्द्धे । कृष्णेऽन्त्यार्द्धे स्यात्तृतीयादशम्योः पूर्वेभागेसप्तमीशम्भुतिथ्यो ॥ विहायविषरौद्राणिविष्टि सर्वञ्चवर्जयेत् । विष्टिशेषेचिदगाडे

हिमपृष्ठे कार्य जयावहम् ॥

भद्राकरणम् । न॰ मुण्डने

भद्राक्ष । त्रि॰ शोभननेत्रे ॥

भद्रात्मज । पु॰ खड्गे ॥

भद्रारक । पु॰ अष्टादशक्षुद्रद्वीपान्तर्गतद्वीपविशेषे

भद्रालपत्रिका । स्त्री॰ )
भद्राली । स्त्री॰ ) गन्धाल्याम् ॥

भद्रावती । स्त्री॰ कटफलवृक्षे ॥

भद्राश्वम् । न॰ भुवोनववर्षान्तर्गतवर्षविशेषे । इलावृतवर्षे ॥ भद्राश्वम् माल्यवत्प्राच्यांवर्षं भद्रजनाकुलम् ॥

भद्रासनम् । न॰ नृपासने ॥ भद्रञ्च तदासन च ॥ तृतीययोगाङ्गविशेषे तद्यथा । सीवन्याः पार्श्वयोन्यस्येद्गुल्फयुग्मं सुनिश्चलम् । वृषणाध पादपार्श्वौ पाणिभ्यां परिबन्धयेत् ॥ भद्रासनं समुद्दिष्टं योगिभिः सारकाल्पितम् ॥

भद्रेश्वर । पु॰ कल्पग्रामस्थशिवे ॥ शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्यपार्श्वे शिवलिङ्गे ॥

भद्रैला । स्त्री॰ स्थूलैलायाम् ॥

भद्रोदनी । स्त्री॰ बलायाम् । वरिआरा॰इ॰भा॰ । नागबलायाम् ॥

भन्दम् । न॰ कल्याणे ॥ पचाद्यच् ॥

भन्दिल । पुं॰ दूते न॰ शुभे ॥ क म्पे ॥

भनभुक । पुं॰ भारतवर्षान्तर्गतदे शविशेषे ॥

भपञ्जर । पुं॰ नक्षत्रचक्रे ॥

भपति । सुधांशौ ॥ भानाप ति ॥

भम्भ । पुं॰ धूमे ॥

भम्भरालिका । स्त्री॰ मक्षिकायाम् । द ंशे ॥

भम्भराली । स्त्री॰ मक्षिकायाम् ॥ दंशे ॥

भम्भासार । पुं॰ मगधराजविशेषे । श्रेणिके ।

भयम् । न॰ घोरे । भयङ्करे ॥ कुब्जक प्रसूने ।, प्रतिभये । दरे । त्रासे । भीतौ । भियि । साध्वसे । अना गतप्रतिकूलप्रतिसन्धाने ॥ तल्लक्षणा नियथा । रौद्रशक्त्यातुजनितं चि त्तवैक्लव्यद भयम् । व्याघ्रादिदर्शना धीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु खरूपम् । रागवि षयस्य विनाशके समुपस्थितेतन्निवा रणासामर्थ्यमात्मनोमन्यमानस्य दै न्यात्मकश्चित्तवृत्तिविशेष. ॥ सर्वान् विषयान्परित्यज्य ज्ञानमार्गेकथंजी वितव्यमितित्रास ॥ अनिष्टहेतूपनि पाते तत्परित्यागानर्हताज्ञानम् ॥ परत स्वानिष्टसम्भावनाज्ञानम् ॥ भय द्वितीयाभिनिवेशत स्यात् ॥ यथा व्याघ्राद्बिभेति॰व्याघ्राधीनत्वे नस्वीयमरण सम्भावयतीति ॥बिभे त्यस्मात् । ञिभीभये । अज्विधौ भयादीनामुपसङ्ख्यान नपुंसके क्तादिनिवृत्त्यर्थम् ॥ बिभेत्यनेनेति विग्रहे॰ एरजितिकरणेऽच ॥ भय द्विविधम् । दैवम्॰मानुषञ्च । यथा हकामकन्दक । हुताशनोजलं व्याधिर्दुर्भिक्षं मरण तथा । इतिप ञ्चविध दैव मानुषव्यसन तत ॥ आयुक्तकेभ्यश्चौरेभ्य : परेभ्योराजव ल्लभात् । पृथिवीपतिलोभाच्चनरा णांप चधाभयमिति ॥ आगते भये ॰अभीतवत्स्थातव्यम् । यथा । ता वद्भयस्य भेतव्य यावद्भयमनागतम् । उत्पन्नं तुभयेतीव्रे स्थातव्य तैरभी तवत् ॥ पुं॰ रोगे ॥

भयङ्कर । पुं॰ डुण्डुलपक्षिणि ॥ त्रि॰ भयोत्पादके । भैरवे । दारु णे । भीषणे । भयानके ॥ भय क रोति । मेघर्त्तिभयेषुकृञ्इति खच । मुमागम ॥ पुं॰ याचायो मान्तरे । यथा । एकचगौशुक्लजी वौक्षतामन्योन्यसङ्गगौ । भयङ्क गाख्योयोगोय यातुर्भीति प्रदाय क. ॥

भयडिण्डिम । पुं॰ सङ्ग्रामपट हे ॥

भयद्रुत । त्रि॰ कान्दिशीके । भीत्यापलायिते ॥ भयदुद्रुतवत् । द्रुगतौ । कर्त्तरि क्त । भयात्द्रुत । पञ्चमीतियोगविभागात्समास ॥

भयनाशिनी । स्त्री॰ भयनाशकर्त्र्याम् । त्रिद्यायाम् ॥ त्रायमाणालतायाम् ॥

भयभीत । त्रि॰ त्रासेजातङ्किते ॥ यथा । एकतोभयभीतस्यप्राणिनः प्राणरक्षणम् । जातोगुरुतमोधर्मः कश्चिदन्योस्तिवक्षेदति ॥ वह्निपुराणे शिविराजोपाख्यान ॥

भयभ्रष्ट । त्रि॰ भयद्रुते ॥

भयानक । पुं॰ व्याघ्रे ॥ राहौ ॥ शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसे ॥ त्रि॰ भयानके । भीषणे ॥ विभेत्यस्मात् । ञिभी॰ आनक । भीङ्भियद्भूत्यानकः ॥

भयापह । पुं॰ राजनि ॥ परमेश्वरे ॥ भय स सारजंमुमुक्षूणामपहन्तीति । हन॰ । अन्ये भ्योपिदृश्यतइतिड ः । भयमपवदृध्यातीति । आशिषिहनइतिडः ॥ त्रि॰ भयापहरणकर्त्तरि ॥

भयावह ः । त्रि॰ भयङ्करे ॥

भरः । पुं॰ अतिशये । भरति । भृञ्॰ । पचाद्यच् ॥ भरणं भरः । पुंसीतिघोषा ॥ भरद्वाजचापितत्वेपि ॰पुंस्त्वमेव । वजानकमा ः पुंसीतिवचनात् ॥ भरट ॥ भ भरण भरति । रा॰ क ॥ यजे ॥ भारे ॥ श्रीतधराभराक्रान्तो शिर्ष नाराय णः स्वयम् । लक्ष्मीवन्तोनजानन्ति दुः सहांपरवेदनाम् ॥

भरट । पुं॰ कुम्भकारे ॥ भृतके ॥ विभर्त्ति । डुभृञ्॰ अनिदेश्यादिना॰ रटच् ॥

भरणम् । न॰ वेतने ॥ भृतौ । मूल्ये ॥ भ्रियते ऽनेन । भृञ्॰ ल्युट् ॥ पोषणे ॥ यथा । भरणं पोष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नरकं पीडनेचास्यतस्माद्यत्नेन तं भरेत् ॥ पुं॰ भरणीनक्षत्रे ॥

भरणी । स्त्री॰ द्वितीयनक्षत्रे । यमदैवते ॥ तत्रजातस्यफलम् । यथा । सदापकीर्त्तिर्हि महापवादोनानाविनोदै रजिनीतकालः । जले विलासीचपलः खलः स्यात् प्राणिप्रणीतोभरणीषु जातः ॥ प्राणिप्रणीत. प्राणिनि निपुणः ॥ घोषके ॥ टित्त्वान् ङीप् ॥

भरणीभू । पुं॰ राहुग्रहे ॥

भरणीय ः । त्रि॰ पोष्ये । भरणयोग्ये ॥

भरण्ड ः । पुं॰ स्वामिनि । स्वामी ॥ नृपे ॥ वृषे ॥ भरति । भृञ्॰ । भयाण्डन् । कृमभृञ्ः । वृत्पण्डन् ॥

भरण्डा । स्त्री॰ भूमौ ॥

भरण्यम् । न॰ वेतने । मूल्ये ॥ भरणेसाधु । तत्रसाधुरितिय त् ॥

भरण्यभुक् । त्रि॰ वैतनिके । कर्मकरे । मूल्येनकर्म्मकुर्वंति ॥ भरण्य वेतनभुङ्क्ते । क्विप ॥

भरण्या । स्त्री॰ वेतने ॥

भरण्याह्वा । स्त्री॰ रामदूतीतिगौ॰दे॰ ख्यातायापूर्व्वपुष्प्याम् ॥

भरण्यु । पु॰ शरण्ये ॥

भरत । पु॰ नाट्यशास्त्रे ॥ अलङ्कारादिशास्त्रस्यसूत्रकारे॰मुनौ ॥ रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरतात्मजे ॥ देवर्षिविशेषे ॥ तन्तुवाये ॥ नटे ॥ भरतस्यमुनेशिष्य । तस्येदमित्यण् । संज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वा । विभर्तिस्वाङ्ग । डुभृञ्॰ । भृमृदृशीत्यतच् ॥ चन्द्रवंशीयनृपविशेषस्यदुष्यन्तस्यपुत्रे । शाकुन्तलेये । दौष्यन्तौ । सर्वदमने ॥ निरुक्तिश्चास्यश्रीभागवते। माताभस्त्रापितुः पुत्रोयेनजाता सएवसः । भरस्वपुत्रदुष्यन्तमावमस्थाः शकुन्तलाम् ॥ इति ॥ ऋषभदेवादिन्द्रदत्तजयन्त्याकन्यायामुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥ यथा ॥ अथाहभगवानृषभदेव स्ववर्षंकर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनाधर्मानानुशिक्षमाणोजयन्त्यामिन्द्रदत्तायामुभयविधकर्मसमाम्नायमभियुञ्जन्नात्मजानामात्मसमानानाशतंजनयामास । येषांखलुमहायोगीभरतोज्येष्ठः श्रेष्ठगुणआसीत् येनेदंवर्षंभारतमितिव्यपदिशन्तीति ॥ पावकस्यपुत्रे ॥

भरतखण्डम् । न॰ भारतवर्षान्तर्गतकुमारिकाखण्डे ॥

भरतज्ञ । त्रि॰ नाट्यशास्त्रज्ञे ॥

भरतपुङ्गव । पु॰ गाङ्गेये । भीष्मे

भरतपुत्रक । पु॰ शैलूषे । नटे ॥

भरतप्रसू । स्त्री॰ कैकय्याम् ॥

भरताग्रज । पु॰ श्रीरामचन्द्रे ॥

भरथ । पु॰ लोकपाले ॥ विभर्त्ति । डुभृञ्॰ । भृञशिदिभ्योथ ॥

भरद्वाज । पु॰ मुनिविशेषे ॥ व्याघ्राटे । भारदूः॰गौ॰दे॰भा॰प्र॰पक्षिणि । भर्दुल॰दू॰भा॰ ॥ गुरोः पुत्रे । उतथ्यपत्न्याम्ममतायांबृहस्पतेर्वीर्याज्जातेमुनिविशेषे ॥ अस्य नामनिर्वचनयथाविष्णुपुराणे । मूढेभरद्वाजमिमं॰भरद्वाजंबृहस्पते । यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयम् ॥ इति ॥ भरन्धारकोवाजोऽस्य ॥ यद्वा । भरद्वाजस्यापत्यम् । ऋष्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव ॥

भरवान् । पु॰ शिवे ॥ भरस्त्रीसृष्ट्य

स्य । मतुप् ॥ भरसहित्यौ ॥
भरिणी । स्त्री० हरिद्वर्णे । हरा०इ०
भा० ॥
भरित । पु० हरिद्वर्णे ॥ त्रि०तद्वति
॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा०
इ०भा० ॥ भर सञ्जातोस्य । ता०
इतच् ॥
भरिता । स्त्री० हरितायाम् ॥
भरिमा । पु० भरणे ॥ कुटुम्बे ॥ भर
ति०बिभर्त्ति वा । भृञ्०डुभृञ्०
वा । हृभृधृसृस्तृश्रृभ्यइमनिच ॥
भरु । पु० स्वर्णे । कनके ॥ हरे । -
शिवे ॥ भर्त्तरि । स्वामिनि । भर-
ति०बिभर्त्ति वा । भृञ्०डुभृञ्
वा । भृमृशीतृचरित्सरितनिधनि
मिमसजिभ्यउः ॥
भरुज । पु० चुद्रश्रृगाले ॥
भरुटम् । न० निष्क्वाथपक्वमांसे ॥
भरुटकम् । न० भृष्टामिषे ॥
भर्ग । पु० स्मरहरे । शिवे ॥
भजते । भृजीभर्जने । प० घञ्
। न्यङ्क्वादित्वात्कुत्वम् ॥ भृज्य
न्ते कामादयोऽभ्मेर्नेतिवा । हलश्चे
तिघञ् ॥ भृज्यते० पच्यते जगद
नेतिवा ॥ सवितृमण्डलगतादि
त्यरूपे पुरुषे ॥ चिन्तयामोवय
भर्ग धियोयोन प्रचोदयात् । च
र्थार्थकाममोर्चषु बुद्धिवृत्ती
पुनः पुन ॥ अपिच । भस्ज
पाकेभवेद्धातुर्यस्मात् पाचयते ह्य
सौ । भ्राजते दीप्यते यस्माज्जगच्चा
न्ते हरत्यपि ॥ कालाग्निरूपमास्था
यसप्तार्चिः सप्तरश्मिभिः । भ्राज
तेयत् स्वरूपेणतस्माद्भर्ग उच्य
ते ॥ भेतिभीषयते लोकान् रेति
रञ्जयते प्रजा । गत्यागच्छत्यजस्र
योभगवान् भर्ग उच्यते ॥ इतियो
गियाज्ञवल्क्य ॥
भर्ग । न० तेजसि ॥ भर्जते ।
भृजीभर्जने । अञ्च्यञ्जियुजिभृ
जिभ्यः कुश्चेत्यसुन्० कवर्गश्चा
न्तादेशः । भर्गसी० इत्यादि ॥
स्वरूपभूते तेजसि ॥
भर्ग्य । पु० शिवे ॥ भजते । भृ
जी० । ऋहलोर्ण्यत् । चजोरिति
कुत्वम् ॥
भर्जनम् । न० भृष्टौ । भूजना०
इ० भा० ॥
भर्ज्जित । त्रि० दग्धे ॥ भृजी० ।
क्त ॥
भर्त्तव्य । त्रि० भरणीये । पोषणीये
॥ वृद्धौचमातापितरौसाध्वीभार्या
सुत शिशु । अप्यकार्य्यंशतं
कृत्वाभर्त्तव्यामनुरब्रवीत् ॥
भर्त्ता । पु० स्वामिनि । नाथे । पत्यौ ।
। परिवृढे । भेतरि ॥ विष्णौ ॥
प्रपञ्चस्याधिष्ठानत्वेभरणात् ॥
विभर्त्ति स्वाध्यस्तं सर्वमधिष्ठान

तयाधारयति सत्तास्फूर्त्तिप्रदाने नपोषयतिवेति विभर्त्ति धारणपो षणार्थात् तृच् ॥ त्रि० धातरि । धारके ॥ सुखसाधनप्रदातरि ॥ देहेन्द्रियमनोबुद्धीनांस्वतानां० चैतन्याभासविशिष्टानां० स्वसत्तया स्फुरणेन धारयितरि ॥ बिभर्त्ति भरतिवा । डुभृञ्० भृञ्०वा । तृच् ॥

भर्तृदारक । पु० नाट्योक्त्यायुव राजे । ध्रियते । दृङ् आदरे० तुदादि । ण्वुल् । भर्तूराज्ञो दारक ॥

भर्तृदारिका । स्त्री० नाट्योक्तौराज कन्यायाम् ॥ भर्तूराज्ञोदारि का ॥

भर्तृप्रपञ्च । पु० औपनिषद्ग्रन्थे वेदान्तानाव्याख्यातृविशेषे ॥

भर्तृस्थानम् न० तीर्थविशेषे ॥ यत्रकार्त्तिकेयस्तिष्ठति ॥

भर्तृहरि । पु० व्याकरणकारिका कर्त्तरिकविविशेषे ॥ स्वनाम्नाप्र सिद्धेकाव्यकर्त्तरिराजविशेषे ॥ सचविक्रमादित्यराजभ्राता ॥

भर्त्सनम् । न० अपकारगिरि । चौ रोसित्वघातयिष्यामित्वामित्याद्य पकाराथवचने ॥ भर्त्स तर्जसन्तर्ज ने । ल्युट् ॥

भर्त्सपत्रिका । स्त्री० महानील्या म् ॥

भर्म्मित । त्रि० अधिक्षिप्ते ॥

भर्मम् । न० ॥ स्वर्णे ॥ भृतौ ॥ नाभौ ॥

भर्म्मकम् । न० रोगविशेषे ॥ विड ङ्गे ॥ कलधौते । सुवर्णे ॥

भर्म्मण्या । स्त्री० गणिकाशुल्के ॥

भर्म्म । न० भारे ॥ काञ्चने ॥ भृतौ । भरणे । पोषणे । कुमारभृत्या कुशलैरधिष्ठितेभिषग्भिराप्तैरथ गर्भभर्म्मणीति रघु । अत्रगर्भेति प्रभृतिषुइतिमल्लिनाथधृत शाश्वत ॥ नाभौ ॥ धुस्तूरे ॥ बिभर्त्ति० भरतिवा । भ्रियतेऽनेनवा । डुभृ ञ्०भृञ्० । मनिन् ॥

भलता । स्त्री० प्रसारण्यामोषधौ । राजवलायाम् ॥

भलन्दन । पु० कान्यकुब्जदेशीय नृपविशेषे ॥

भलूक । पुं० भालुके ॥ भलते । भलभल्लपरिभाषणहिंसादानेषु ॥ उलूकादयश्चेतिसाधु ॥

भल्ल । पु० भल्लूके । कटले ॥ पु० न० अस्त्रप्रभेदे । भाला० इ०भा० ॥ वाणविशेषे ॥ स्नुहीदलफलो भल्लइतियादवः ॥ भल्लते । भल्ल० । पचाद्यच् ॥ न० भद्रे । शिवे ॥ इ० वि० शे ० ॥

भल्लक । पुं० भल्लूके ॥ स ञ्जाया

कान् ॥
भल्लपुच्छी। स्त्री० गवेधुकायाम् ॥
भल्लाट । पुं० न० यशिध्वजराजपुरे
भल्लात:। पुं० भल्लातके ॥
भल्लातक'। पुं० अग्निमुख्याम्। प
रुष्करे। शोथकृति। भावा०
द्र० भा० ॥ भल्लातकफलंपक्वं स्वा-
दुपाकरसंलघु। कषायपाचनंस्निग्ध
तीक्ष्णोष्णं छेदिभेदिनम्।मेध्य वह्नि
करंहन्तिकफवातव्रणोदरम्॥ कुष्ठा
र्शोग्रहणीगुल्मशोफानाहज्वरक्रिमी
न् ॥ तन्मज्जामधुरोवृष्योबृंहणोवा
तपित्तहा। वृन्तमारुष्करस्वादुपित्त
घ्नं केश्यमग्निकृत् ॥ भल्लातकः।
कषायोष्णः शुक्रलोमधुरोलघुः'।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीग
दान् ॥ हन्तिगुल्मज्वरश्वित्रवह्निमा
न्द्यक्रिमिव्रणान् ॥ भल्लइवातति
अत०। कुन् ॥
भल्लातकी। स्त्री० वीरवृक्षे। अग्निमु-
ख्याम्। भल्लातके ॥ गौरादित्वा-
न्ङीष् ॥
भल्लिका। स्त्री० ) भल्ला
भल्ली। स्त्री० )तके ॥
भल्लु:। पुं० भल्लुके ॥ भजते। भज०
बाहुलकादु: ॥
भल्लुक:। पुं० दुर्वीचौ। कपौ। रीछ
भालू० इ० भा० सप्तायाकन् ॥
भल्लूक:। पुं० कपौ। भल्लुके ॥ भल्ल

ते। भल्ल०। उलूकादित्वात्साधु।
॥ श्योणाकप्रभेदे ॥ कुक्कुरे ॥
भव:। पुं० ईशे। शिवे। शङ्करे।
हरे ॥ क्षेमे। श्रेयसि ॥ सम्भवे ॥
यस्यावतारोभूतानांक्षेमायचभवा-
यच ॥ संसारे ॥ अपामार्गलतेवाय
विरुद्धफलदोभव। प्रत्यग्गृह्याविं
मोक्षायसंसाराथपराग्गृह्याम् ॥ स
त्तायाम् ॥ प्राप्तौ। भद्राप्तौ ॥ उत्पत्ति
। जन्मनि ॥ सम्भादेकादशी ॥ भव-
ति० भवतीवासर्वम्। भूप्राप्तौ।
पचाद्यच्। अन्तर्भावितण्यर्थोवा ॥
जन्मनितु०भावे०ऋदोरप्।। न०
फलविशेषे। भव्ये। चालता० इ०
गौ० दे० भा० चि० क्षेमान्विते ॥
भवघस्मर। पुं० दावानले ॥
भवच्छिद्। चि० संसारनिवर्तके ॥ भ
वछिनत्ति। छिदिर्०। सत्सूद्विषे
त्यादिना० क्विप् ॥
भवान्। चि० युष्मदर्थे। भाति। भादी
प्तौ भातेर्डवतु: ॥ लिंगत्रयेरूपन्तु
। भवान्० भवती०भवदिति॥ पूज्ये
॥ सति। विद्यमाने ॥ भवतेर्डवतु:
शपादेशे। भवन्० भवन्तीभवत्०
इतित्रिलिंगेरूपंबोध्यम् ॥ आयमा
ने ॥
भवती। स्त्री० विषाक्तबाणे ॥ पूज्या
याम् ॥ दीप्तमत्याम् ॥ उगितश्चे ति
ङीप् ॥

भवदारु । न० देवदारुवृक्षे ॥

भवदीय . । वि० भावत्के ॥ भवताम यम् । भवतष्ठक्छसाविति० छस् ॥

भवनम् । न० अगारे । मन्दिरे । गृहे । भावे ॥ भवनम्त्यव । भू० । ल्यु ट् ॥ राशौ ॥ क्षेत्रे ॥

भवनाशन । पुं० आत्मबोधे ॥

भवनाशिनी । स्त्री० सरयूसरिति ॥

भवनीय । वि० भवितव्ये ॥ उत्पत्त्ये ॥

भवन्त । पुं० कालसामान्ये ॥ वर्तमानकाले ॥ भवति० भूयाद्वा ॥ भू० । तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेति० झच्० सच चित् ॥

भवन्ति । पु० वर्तमानकाले ॥ भवति । भू० । भुवोझिच् ॥

भवन्ती । स्त्री० पूर्वाचार्याणालट संज्ञायाम् ॥ यथा । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ शित्वान्ङीष् ॥

भवभावन । वि० संसारकारणे । भवः संसारस्तस्यभावनयेन ॥ उत्पत्तिकर्त्ते ॥

भवभूति : । पुं० भोजराजस्यसभास्थे कविविशेषे । मालतीमाधवादिना टकाकर्त्तरि । भूगर्भे ॥ महादेवसं ज्ञके ॥

भववत् । पुं० प्रेतपटहे ॥

भवापनाशिनी । स्त्री० गङ्गायाम् ॥

भवात्मजा । स्त्री० मनसादेव्याम् ॥

भवादृश । वि० भवादृशे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर् प्रेक्षणे । त्यदादिष्विच्च० कोपि वाच्यइति० क्स. । आसर्वनाम्न इत्यत्र० दृग्दृशवतुष्वितिवार्तिकादाकारोन्तादेश ॥

भवादृक् । वि० भवादृशे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर्० । त्यदादिष्वितिक्विन् । आसर्वनाम्न ॥

भवादृश । वि० युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर्० त्यदादिषुदृशोनालोचनेकञ्चेति० कञ् । आसर्वनाम्न इत्याकारोन्तादेश ॥

भवानी । स्त्री० पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना० ङीषानुकौ ॥ परदेवतायाम् ॥ एकैवशक्ति . परमेश्वरस्य भिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु कोपेषुकाली समरेषुदुर्गा ॥ चट्टलपीठवासिन्यामम्बायाम् ॥

भवानीगुरु : । पु० हिमालये ॥

भवानीपति । पु० महादेवे ॥

भवापवर्ग । पु० मोक्षे ॥ भवस्यअपवर्गः नाशः ॥

भवाभीष्ट । पु० गुग्गुलौ ॥

भवाब्धि । पुं० संसाररूपसमुद्रे ॥ भवाब्धितरणोपाय . कुलमार्गोहि- नापर ॥

भवायना । स्त्री० गङ्गायाम् ॥

भविकम् । न० भव्ये । कुशले ॥ भवो- भद्रास्मिन्नस्ति । अतइनिठनाविति ठन् ॥ त्रि०तद्वति ॥

भवित . । त्रि० अतीतोत्पत्तिके । भूते ॥

भवितव्यम् । त्रि० भवनीये ॥ भवितव्य मृभवत्येवमारिकीलफलाम्बुवत् । ग जाख्यं गतमित्याहुर्गजभुक्तकपित्थव- त् ॥

भवितव्यता । स्त्री० नियती । भाग्ये । अर्थानामनर्थानामवश्य भावित्वे । आत्मभार्यायाम् ॥

भविता । त्रि० भविष्णौ ॥ भवनशील. भू० । तृन्निति तृन् ॥

भविल : । त्रि० काव्यकर्त्तरि ॥

भविल : । पुं० भव्ये ॥ भवति । भू० । सलिकल्यनौत्यादिना०इलच् ॥ त्रि लृगौ । विटूषके ॥

भविष्णु । त्रि० भवितरि । भूष्णौ ॥ भवनशील : । भुवश्चेति०भवतेरि- ष्णुच् ॥

भविष्यम् । न० पञ्चशताधिकचतुर्दश सहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा । चतुर्दश भविष्यं स्यात् तथा पञ्चशतानिचं तिश्रीभागवतम् ॥ अपिच । चतुर्दशसहस्राणितथा पञ्चशतानिच । भविष्यंपरिसंख्या त मुनिभिस्तत्वदर्शिभिरितिदेवी भागवतम् ॥ त्रि० भविष्यत्का ले ॥

भविष्यत् । त्रि० आगामिकाले । वर्त्त मानप्रागभाव प्रतियोगिनिकाले- ॥ वर्त्तमानकालोत्तरकालीनोत्प त्तिकत्वे । अनागते । उत्पत्स्य ने ॥

भव्य । पुं० कर्मरंगतरौ ॥ न० अ स्थिनि ॥ फलविशेषे चालता० इ० गौ० दे० प्र० । अभेदच्छायोधने ॥ भव्यंस्यादुष्णमाम्ल च्छमास्य विशोधनम् । तदेवपक्वं दीपनं गुरु वातविषापहम् ॥ पुं० न० रस भेदे ॥ त्रि० शुभे ॥ सत्ये ॥ योग्ये ॥ भाविनि ॥ उनिष्यमाणे ॥ भवति० भाव्यमनेनवा । भव्य गेयप्रवचनीयोपस्थानीयजन्याप्ला व्यापात्याविति ० कर्त्तरि० भावे वायतासाधु . ॥

भव्या । स्त्री० उमायाम् । करिकणा याम् ॥

भष । पुं० कुक्कुरे ॥ भषति । भष० । अच् ॥

भषक : । पुं० कुक्कुरे । शुनि ॥ भषति । भषणेशुन्यें । ण्वुल् ॥

भषणम् । न० कुक्कुरे । शब्दे ॥

भष॰ल्युट् ॥

भषा । स्त्री॰ स्वर्णचीर्याम् ॥

भषी । स्त्री॰ शुन्याम् ॥ भषतिपान्य म् । भषभर्त्सने । पचाद्दौ ॰ भष डितिपाठात् ॰ टिड्ढ़ेतिङी प् ॥

भसद् । स्त्री॰ भास्वरे । योनौ । जघने ॥ काले ॥ मासे ॥ कारण्ड वखगे ॥ प्लवे । भेलके । बभस्ति । भसभर्त्सनदीप्त्यो । शृदृ भसोदि ॥

भसन । पुं॰ भ्रमरे ॥

भसन्त । पु॰ काले ॥

भसितम् । न॰ भस्मनि ॥

भसूचक । पु॰ दैवज्ञे ॥

भस्त्रका । स्त्री॰ चर्मप्रसेविका याम् ॥

भस्त्रफला । स्त्री॰ ओषधिविशेषे ॥ भस्त्रेवफलान्यस्या । पाककर्णेति प्राप्तङीष वाधित्वा॰सम्भस्त्राजिने तिटाप् । ङ्यापोरितिह्रस्व ॥

भस्त्रा । स्त्री॰ अग्निदीपकचर्मनिर्मितयन्त्रविशेषे । चर्मप्रसेविकाया म् ॥ जलादिनीयते येनलौहादि ध्मायते तथा । चर्मणोविकृतिः सावेभस्त्राशास्त्रेप्रकीर्त्तिता ॥ भस्यतेऽनया । भसदीप्तौ । हुयामा श्रुभसिभ्यस्त्रन् । तितुत्रे तिनेट् । । अजादित्वाट्टाप् ॥

भस्त्राका । स्त्री॰ भस्त्रिकायाम् । भस्त्रा या ॥

भस्त्रिक । त्रि॰ भस्त्रयाजलादिहरणक र्त्तरि । भिस्त्री॰ह॰भा॰ ॥ भस्त्रया हरति । भस्त्रादिभ्य । ष्ठन् ॥ स्त्री॰- भस्त्रिकी । षित्वान्ङीष् ॥

भस्मक । पुं॰ रोगविशेषे ॥ तस्य निदानसम्प्राप्तिपूर्वक लक्षण । य था । कट्वादिरूक्षान्नभुजानराणांक्षी णे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्ध पवनान्वितोऽग्नि र्भुक्तं क्षणाद्भस्म करोतियस्मात् ॥ तस्मादसौभस्मक स ञ्ज्ञकोऽभूदुपेक्षितोऽय पचते च धा तून् ॥ भस्यसोपद्रवमरिष्टंयथा । तृट्स्वेददाहमूर्च्छादीन्कृत्वे व्याध्य ग्निसम्भवान् । पक्त्वान्नमाशुधात्वा दीन्सक्षिप्र नाशयेद्ध्रुवम् ॥ इ॰

भस्मकार । पुं॰ रजके ॥

भस्मगन्धा । स्त्री॰ रेणुकायाम् । हरे णौ ॥

भस्मगन्धिका । स्त्री॰ हरेण्वाख्यामोषधौ । रेणुकायाम् ॥ भस्मनोगन्ध । भस्म गन्धोस्त्यस्या । अतइनि । ठनावि- तिठन् । टाप् ॥

भस्मगन्धिनी । स्त्री॰ रेणुकायाम् । ह रेण्वाख्यौषधौ ॥ गन्धद्रव्यमेतदिति स्वामी ॥ भस्मगन्धोस्त्यस्या । अत इनिठनावितीनिः । ङीप् ॥

भस्मगर्भ । पुं॰ तिनिशद्रुमे ॥

भस्मगर्भा । स्त्री॰ कपिलवर्णपुष्पायां शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । ओषधिभेदे ॥ भस्मगर्भेयस्याः शुक्लसारत्वात् ॥

भस्मतूलम् । न॰ ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न॰ काष्ठादेरग्निकृतेविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ ॥ बभस्ति । भसभर्त्सनदीप्त्योः । सर्वधातुभ्योमनिन् ॥ विनाभस्मत्रिपुण्ड्रेणविनारुद्राक्षमालयः । पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः ॥ भस्मरीविकारे ॥

भस्मरोहा । स्त्री॰ दग्धारुहवृक्षे ॥

भस्मवेधक । पुं॰ कर्पूरे ।

भस्मसात् । अ॰ भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकार्त्स्न्ये॰ इतिसातिः प्रत्ययः ॥

भस्मस्नानम् । न॰ सप्तविधस्नानान्तर्गतान्नेयस्नाने ॥ यथा । आग्नेयभस्मनास्नानवायव्यं गोरजः स्मृतम्

भस्माह्वयः । पुं॰ कर्पूरे ॥

भस्मित । त्रि॰ दग्धे ॥

भा । स्त्री॰ भाति । प्रभायाम् । छवौ । दीप्तौ । रोचिषि । ज्ञाने । चैतन्यरूपे ॥ यथा । प्रभारूपस्यविप्रस्यभानंभासन्निधेर्विना । कदाचिन्नावकल्प्येतभाचाद्वैतेनसर्वगः ॥ भाति भादीप्तौ । इग्निद्यत्वात्॰ अः ।

टाप् ॥

भाकुट । पुं॰ भेकुटी॰ इ॰ मी॰ दे॰ भा॰ प्र॰ मत्स्ये ॥

भाकूट । पुं॰ शैलप्रभेदे ॥ झषविशेषे । भेकटी॰ इ॰ भा॰ ॥ भाकूटो मधुरः शीतोवृष्यः श्लेष्मकरोगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरः स्मृतः ॥

भाक्षोष । पुं॰ सूर्ये ॥

भाक्त । त्रि॰ औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ अन्नेनपोष्ये । भाक्तिके ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्याम् इत्यण् । न॰ शालिधान्ये ॥ भक्ते साधु । भक्ताणः इतिण ॥

भाक्तिक । त्रि॰ अन्नेनपोष्ये । भाक्ते ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भाग । पुं॰ अंशे । वण्टके । स्त्रीलिङ्गसमानांशे । रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागानाम् ऋक्षर्यादिचक्रसमूहोवा । घञ् ॥ राशिषु त्रिंशभागेकभागे ॥ त्रिंशांशकस्तथाराशेर्भागइत्यभिधीयतेइत्युक्तेः ॥

भागत्याग । पुं॰ अजहल्लक्षणायाम् । विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री॰ अजहल्लक्षणायाम् । अंशान्तरपरित्यागेन

शान्तरलक्षणायाम् ॥

भागधेय । पु॰ करे । राजस्वे । ग्रामादेराजग्राह्ये षष्ठभागादौ ॥ दायादे ॥ भागएव । भागरूपनामभ्यो धेयइतिस्वार्थे॰ धेयप्रत्यय ॥ न॰ भाग्ये । प्राक्तनेकर्मणि । दैवे ॥

भागलक्षणा । स्त्री॰ भागत्यागलक्षणायाम् ॥

भागलेख्यम् । न॰ भागपत्रे ॥ भागायलेख्यम् ॥

भागवत । पु॰ भगवद्भक्ते ॥ यथा । सर्वदेवान्परित्यज्यनित्यं भगवदाश्रय । एतसदीयसेवायांसभागवतउच्यते ॥ शङ्खीयस्यगृहेनास्तिघण्टावागरुडान्विता । पुरतोवासुदेवस्यनसभागवत कलौ ॥ उत्तमभागवतस्तु । सर्वभूतेषुयपश्येद्भगवद्भावमात्मन । भूतानिभगवत्यात्मन्येषभागवतोत्तम ॥ नयस्यस्वपरवृतिर्वित्ते ष्वात्मनिवाभिदा । सर्वभूतसम शान्त सवैभागवतोत्तम । गृहीत्वापीन्द्रियैरर्थान्योनद्वेष्टिनहृष्यति । विष्णोर्मायामिदं पश्यन्सवैभागवतोत्तम ॥ शिवेचपरमेशानेविष्णौचपरमात्मनि । समबुद्ध्याप्रवर्त्तन्तेतेवैभागवतोत्तमा ॥ भगवतोयम् । अण् ॥

भागवतम् । न॰ अष्टादशपुराणान्तर्गतेअष्टादशसहस्रश्लोकात्मकेउपपुराणविशेषे ॥ महापुराणविशेषे ॥ तत्राष्टादशाध्यायोत्तरत्रिशताध्यायात्मक देवीभागवत नाममहापुराणम् अपि शद्ध्यायाधिकत्रिशताध्यायात्मक विष्णुभागवतमितिविवेक ॥ अष्टादशसहस्र वैपुराणं भागवत किलेतिदेवीभागवतम् ॥ आत्मतत्त्वदीपकेज्ञाने ॥ भगवताप्रोक्तम् । तेनप्रोक्तमित्यण् ॥ भगवत्यामायोपाधिकब्रह्मरूपिण्या प्रातिपदिक॰ सर्वं खल्विदमेवाहं नान्यदस्तिसनातनमित्यर्धश्लोकात्मकसूत्रभूतमेवसर्ववेदसारं सर्वं खल्विदं ब्रह्मनेहनानास्तिकिञ्चनेतिसर्ववेदतात्पर्यार्थप्रतिपादकवाक्यार्थाभिलापक पुराणं मन्त्ररूपं भगवत्यावटपत्रशयानायविष्णवे प्रकटीकृतं यत् तत् । भगवत्याप्रोक्तम । तेन प्रोक्तमित्यण् ॥

भागिकम् । त्रि॰ भाग्ये । सवृद्धिकमुद्रादौ ॥ भागोरूपकस्याधिकं वृद्धिरूपत्वात् ॥ भागो ऽस्मिन्वृद्ध्यायलाभशुल्कोपदावाऽस्मिन्दीयते । भागिक शतम्॰ भागिकाविंशति । भागाद्यश्चेतिठन् ॥

भागी । त्रि॰ अंशिनि ॥ वाशिनि ॥ सम्पृचेत्यादिना॰ भजेर्घिनुण् ॥

भागिनेय: । पुं० भगिनीपुत्रे । स्वस्रीये ॥ भगिन्या: अपत्यम् । स्त्री भ्योढक् ॥

भागिनेयी । स्त्री० भगिन्यास्त्व्यपत्ये । भानजी ० इ० भा० ॥ टिड्ढेति ङीप् ॥

भागीरथी । स्त्री० गङ्गायाम् ॥ भगीरथस्येयम् । तस्येदमित्यण् । ङीप् ॥

भागुरि: । पुं० स्मृतिव्याकरणकर्त्तरिमुनिविशेषे ॥ मार्कण्डेयपुराणप्रसिद्धे मुनौ ॥ कविविशेषे । यत लुम्पके० इति जटाधर: ॥

भाग्यम् । न० प्राक्तनशुभाशुभकर्म्मणो: । नियतौ । दैवे । दिष्टे । फलोन्मुखी भूतपूर्वदेहिकशुभाशुभकर्म्मणि । अज्ञानामविवेकानामशूराणामपिप्रभो । भागभोग्यानिराज्यानिसन्त्यनीतिमतामपि ॥ भज्यतेऽनेन०भजते वा । भज सेवायाम् । ऋहलोर्ण्यत् । चजोरितिकुत्वम् ॥ त्रि० भागिके ॥ भागोवृध्यादिरस्मिन्दीयते । भाग्य शतम् ० भाग्यावि शति: । भागाद्यच्चेति०यत् ॥ भागार्हे ॥ भागमर्हति । दण्डादित्वाद्यत् ॥

भाग्ययोग: । पुं० ग्रहादिमाकारे । पञ्चमेश्चोरविषष्ठेवर्ग तिष्ठेत्स्वयमीयुक् । भाग्ययोगाभिधेयोगेनिस्तारेण(?) रिपांसदा ॥

भाग्यवान् । त्रि० भाग्ययुक्ते ॥ भाग्यवतांसर्वं श्रेयसेभवति ॥

भाग्याख्या । स्त्री० तुष्टिविशेषे ॥ यथा । यातुनप्रकृतेर्ज्ञानान्नाप्युपादानाद्विवेकख्यातिरपितुभाग्यादेव०अतएवमदालसाऽपत्यानिमतिबालानिमातुरुपदेशमात्रादेवविवेकख्यातिमन्तिमुक्तानिबभूवु: ० तस्माद्भाग्यमेवहेतुर्नान्यदितिउपदेशेतुष्टि: साभाग्याख्यातुष्टिरुच्यते ॥

भाङ्गीनम् । त्रि० भङ्ग्ये । भङ्गायेषे ॥ भङ्गायाभवनम्क्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्य इतिपक्षेखञ् ॥

भाजक । पु० गैरिके ॥

भाजनम् । न० पात्रमात्रे ॥ योग्ये ॥ य: स वादयतेनित्यं योऽतिवादीस्तितिष्ठति । यस्तत्रोमतपतिश्रेष्ठ सोऽयं स्वभजनम् ॥ आढकपरिमाणेइतिवैद्यकपरिभाषा ॥ भाजयति । भाजपृथक्कर्म्मणिल्युट् ॥

भाजित: । त्रि०पृथक्कृते । विभक्ते । न०भागे ॥

भाजी । स्त्री० आयायाम् । पञ्चायाम् । ॥ आणपदेतिङीष् ॥

भाज्य । चि० भागार्हे । भाजनीये ॥

भाटक । पु० न० व्यवहारार्थं दत्त गृहशकटादिलभ्यधने । भाडा० इ० भा० ॥

भाट्ट । पु० आत्मनश्चिदचिद्रूपत्व-वादिनिभट्टाचार्यमतानुसारिणि-मीमांसके ॥ गूढं चैतन्यमुत्प्रेक्ष्य द्रव्यबोधस्वरूपताम् । आत्मनोब्रुवतेभाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥ जडोभूत्वातदाऽस्मार्षमितिजाड्यस्मृतिस्तदा । विनाजाड्यानुभूतिनकथं चिदुपपद्यते ॥ द्रष्टुर्दृष्टेरलोपश्चश्रुतः सुप्तोततस्त्वयम् । अप्रकाशप्रकाशाभ्यामात्माखद्योतवद्युतः ॥

भाण । पु० नाटकादिदशरूपकान्तर्गतरूपकविशेषे ॥

भाण्ड । पु० गर्दभाण्डवृक्षे ॥

भाण्डम् । न० पात्रे । घटकलशादि-भाजनमात्रे ॥ पण्यद्रव्ये । वणिङ्मूलधने ॥ भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यते । भणशब्दे । अमन्ताड्डः ॥ भणतिवा । डः । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखे च । अच् । पृषोदरादिः ॥ भण्डक-त्ती । भंडीमा० इ० भा० ॥

भाण्डपुट । पुं० नापिते ॥ भाण्डे-पुटाः यस्य स ॥

भाण्डपुष्प । पुं० सर्पविशेषे । कौक्कुटिकन्दले ॥

भाण्डागारम् । न० गृहविशेषे । अन्नादिद्रव्याणांगृहे ॥ भाण्डानामागारम् ॥ धनागारे ॥

भाण्डागारिक । चि० भाण्डागारे-नियुक्ते । भण्डारी० इ० भा० ॥ अगारान्ताट्ठन् ॥

भाण्डागारी । चि० भाण्डारिणि । भाण्डागारवति ॥ भाण्डागारमस्या-स्ति । इनि ॥

भांडारी । पु० भाडागाराध्यक्षे । स्वनामेवप्रसिद्धे ॥ यथा क्षुधितस्तृषितः कामीविद्यार्थी कृषिकारक । भाडारीचप्रवासीचसप्तसुप्तान्प्रबोधयेत् ॥

भाण्डि । पुं० नापितक्षुराद्याधारे ॥

भाण्डिल । पुं० ) नापिते ॥

भाण्डिवाह । पुं० )

भाण्डीर । पु० वटवृक्षे ॥ व्रजमण्डलान्तरेषोडशवटवनमध्ये द्वितीयवटवने ॥

भातम् । न० प्रभाते ॥ भा० । क्त ॥ दीप्ते ॥ चि० तद्वति ॥

भाति । स्त्री० शोभायां ॥

भातु । पु० आदित्ये । सूर्ये ॥ भाति । भादीप्तौ । कमिगमीतितुः ॥

भाद्र । पु० नभस्ये । प्रौष्ठपदे । भा

द्रपदेमासि ॥ भाद्रीपौर्णमास्यस्मि
न् । सास्मिन्पौर्णमासीत्यण् ॥
अत्रजातस्यफलम् । नभस्यमासिखलु
जन्मयस्यधीरोमनोज्ञस्ववराङ्गनाना
म् । रिपुप्रमाथीकुटिलोऽतिमर्माप्र
पन्नभर्तासभवेत्सहासः ॥ अत्रगौ
प्रसवेनारद: । भानौसिंहगते चै
वयस्यगौ समप्रसूयते । मरणात
स्यनिर्दिष्ट षड्भिर्मासैर्नसंशय. ॥
प्रसूतांतत्प्रणादेवतांतांविप्राय
दापयेत् । पश्चाच्छान्ति प्रकुर्वीत तथा
गिरिणाप्नोक्तवत्म नेति ॥
भाद्रपद । पुं॰ वर्षर्तुद्वितीयमासि
। भाद्रे ॥ भद्रपदाभिर्युक्तापौर्णमा
स्यस्मिन् । सास्मिन्पौर्णमासीत्य-
ण् ॥
भाद्रपदा । स्त्री॰ प्रोष्ठपदासु । भद्रप
दासु । पूर्वभाद्रपदानक्षत्रे॰उत्तर
भाद्रपदानक्षत्रेच ॥ भद्रमेव॰ ॥ भा
द्रम् । भाद्र पदयासां॰ता ॥
भाद्रमातुर । पुं॰ सतीतनये ॥ भद्र
मातुरपत्यम् । मातुरुत्सङ्ख्यास
भद्रपूर्वाया ॥
भामम् । न॰ आभासे ॥ प्रतीतौ ॥
प्रकाशे । साक्षात्कारे ॥ नहिभाना
दतिसत्त्व मर्तेमानचितोऽचित: ।
चित्सर्वदीपिका ध्यासादतीतेमाह
मदय. ॥ भाति । भा॰ । ल्युट् ॥
भानु । पुं॰ किरणे । मयूखे । चं-

द्रौ । करे ॥ रवौ । सूर्ये । क्रमे ।
सहस्रांशौ ॥ दिने भाति । भा॰
। दाभाभ्यानु ॥ यद्वा । भाति॰
चतुर्दशभुवनमध्ये अन्यादित्यप्र
काशेभ्य अधिकदीप्यतेवा । पूर्व
वत् ॥ अर्कवृक्षे ॥ प्रभौ ॥ राजनि
॥ वृत्तार्हत्पितृविशेषे ॥
भानु । स्त्री॰ भानुमत्याम् ॥
भानुफला । स्त्री॰ रम्भायाम् । कद
ल्याम् । भानुरिवफलान्यस्या ।
अजादि ॥
भानुमान् । पु॰ सूर्ये ॥ भानवोविद्य
न्तेऽस्य । मतुप् ॥ त्रि॰ दीधिति
युक्ते । सकिरणे ॥
भानुमती । स्त्री॰ विक्रमादित्यनृपस्य
पत्न्याम् ॥ यथा । देवगुरो प्रसादे
नजिह्वाग्रे मेसरस्वती । तेनाहंनृपता
नामिभानुमत्यास्तिलयथेतिवररुचि
भानेमि : । पु॰ गभस्तिहस्ते । सूर्ये ॥
भाभ । त्रि॰ मत्तकान्तौ ॥ भस्याभे
वाभायस्यायस्य. ॥
भाम : । पु॰ क्रोधे ॥ रवौ ॥ दीप्तौ
रुचौ ॥ पुञ्जे ॥ भगिनीपतौ ॥
यथा । यशोभगिन्यशोभाममया
वाक्तपापमना । पुत्रघातकपापस्य
सुदृढोहिसिता सुता ॥भाति । भा॰
भतिस्तुसुकुकक्षुत्तिभाया।मापह्निय
त्रिमीथ्योमन्निनितिमन् ॥ भामते ।
भामक्रोधे । अच्‌वा

भामक । पु॰ भगिनीपतौ ॥ स्वार्थेक ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्यय मितिपूर्वपदलोप ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम ॥ यव श्य भामते । भाम॰ । आवश्यकी णिनि । ग्रह्यादिणिनिर्वा ॥ स्त्री मार्थ ॥

भामिनीविलास । पु॰ जगन्नाथमि श्रपण्डितराजकृते विलासचयात्मके ग्रन्थविशेषे ॥

भार । पु॰ वीवधे । विष्णौ । विश तितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विशूपा गोग्यु द्वाहता । तामेवभारजानी याद्वाशोभारचतुष्टयम् ॥ भियते । भृञ् भरणे । अकर्त्तरि चकार कैस ञ्ज्ञायामितिघञ् ॥

भारंड : । पु॰ उत्तरकुरुदेशजग्रकुन्त पक्षिणि ॥

भारत । पु॰ छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुने शिष्य । अण् ॥ भरतात्मजे । भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोय म । तस्येदमित्यण् । सङ्ग्रामवि शेषे ॥ भरतानांयोद्धारोऽस्मिन्सङ्ग्राम म् । सङ्ग्रामेप्रयोजनयोद्धृभ्यश्च्छ

ण् ॥ त्रि॰ ज्ञानभिरते ॥ भाज्ञा नम् ॰ तत्ररत . ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोका त्मकमहाभारतसञ्ज्ञे॰ इतिहासे ॥ तस्यश्रवणादिफलयथा । भारत श्रु णुयान्नित्य भारत परिकीर्त्तयेत् । भारत भवने यस्यतस्य हस्तगतोज य ॥ योगोशत कनकशृङ्गमय द दातिविप्रायवेदविदुषे चबहुश्रुताय । पुण्यांश्चभारतकथाश्रु णुयाच्चनि त्य तुल्य फल भवतितस्यचतस्यचै व ॥ नवनीत यथादधनोद्विपदांब्रा ह्मणोयथा । ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठाचतुष्पदाम । यथैताना तिहासानातथाभारतमुच्यते ॥ य श्चैन श्रावयेच्छ्राद्धे ब्राह्मणानृपादम ततः । अक्षय्यमन्नपान वै पितृ स्त स्योपतिष्ठते ॥ इतिहासपुराणा भ्यांवेद समुपवृंहयेत् । बिभेत्य ल्पश्रुताद्वेदोमामय प्रहरिष्यति ॥ कार्ष्णं वेदमिम विद्वान्श्रावयित्वा र्थमश्नुते । भ्रूणहत्याकृतञ्चापिपा प जह्यादस शयम् ॥ इति ॥ जम्बु द्वीपनवमांशैवर्षविशेषे ॥

भारतवर्ष । पु॰ न॰ जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाह्व दक्षिण वर्ष भरतायददौ पिता । तस्माच्चभारत वर्ष तस्यना म्ना महात्मन . ॥ तस्यनवभागाख्या

भारतस्यास्य वर्षस्य नवभेदान्निशामय
मे। समुद्रांतरिता ज्ञेयास्ते त्वगम्या
परस्परम् ॥ इन्द्रद्वीप कशेरुमान्
स्ताम्रपर्णो गभस्तिमान्। नागद्वीपस्तथा
सौम्यो गान्धर्वो वारुणस्तथ । अयन्तु
नवमस्तेषां द्वीप . सागरसंवृत .
। योजनानां सहस्रं वै द्वीपोऽयं दक्षि
णोत्तरात् । पूर्वे किराता यस्यान्ते
पश्चिमे यवनाः स्मृता । ब्राह्मणा
क्षत्रिया वैश्या . शूद्राश्चान्त : स्थि
ताद्विज ॥ इज्यायुद्धवणिज्याद्यै '
कर्मभिः कृतपावना ' । तेषां
स व्यवहारश्च एभि कर्मभिरिष्यते
॥ स्वर्गापवर्गप्राप्तिश्च पुण्य पाप च-
वै तथा । महेन्द्रो मलय सह्य
शुक्तिमानृक्षपर्वत : ॥ विन्ध्यश्च-
पारियात्रश्च सप्तैवात्र कुलाचला .
तेषां सहस्रशश्चान्ये भूधरा ये समीप
गा ' ॥ विस्तारोच्छ्रायवैरम्या विपु
लाश्चित्रसानव . । कोलाहल : स
वैभ्राजो मन्दरो दर्दुराचल : ॥ वा
तन्धमो वैद्युतश्च मैनाक ' सुरसस्त
था । तुङ्गप्रस्थो नाम गिरिर्गोधन .
पाण्डुराचल . ॥ पुष्पवीर्यजयन्तौ
रैवतोऽर्बुद एव च । ऋष्यमूक
सगोमन्त : कूटशैल . कृत . स्मर
॥ श्रीपर्वतश्चकोरश्च शतशोऽन्येऽत्र
पर्वता ' । तैर्विमिश्रा जनपदा म्ले
च्छाश्चार्याश्च भागश: । तै : पीय



न्ते सरिच्छ्रेष्ठा यास्ता सम्यङ्निबो
धमे । गङ्गा सरस्वती सिन्धुश्चन्द्रभा
गा तथापगा । यमुना च शतद्रुश्च वि
तस्तैरावती कुहू । गोमती धूतपा
पा च बाहुदा च दृषद्वती ॥ विपाशा
देविका च चुविंशाला गण्डकी तथा
। कौशिकी चापरा विप्र हिमवत्पाद
निः सृता ॥ वेदस्मृतिर्वेतसि
नीरा चित्र गौसिन्धुरेव च । वेणा च
स्यन्दना चैव सदानीरा मही तथा ॥
पारा चर्मण्वती लूपी विदिशा वेत्रव-
त्यपि । शिप्रा ह्यवन्ती च तथा पारिया
त्राश्रया : स्मृता ' । शोणो महान
दश्चैव नर्मदा सुरसा क्रिया । मन्दा
किनी दशार्णा च चित्रकूटा तथापगा ॥
चित्रोत्पला च तमसा करतोया पिशा
चिका । तथान्या पिप्पलश्रोणी वि
पाशा वञ्जुला नदी ॥ सत्सन्तजा शुक्ति
मती मञ्जुली पिदिशा क्रतु : । ऋक्ष-
पादप्रसूता वै तथान्या वेगवाहिनी ॥
शिप्रा पयोष्णी निर्विन्ध्या तापी च नि
षधावती । वेणा वैतरणी चैव सिनी
वाली कुमुद्वती । तोया चैव महागौ
री दुर्गा चान्त शिवा तथा । विन्-
ध्यपादप्रसूतास्ता नद्य . पुण्यजला-
श्शुभा : । गोदावरी भीमरथी कृष्णा-
वर्णा तथापगा । तुङ्गभद्रा सुप्रयोगा-
बाह्या कावेरी चापगा ॥ सह्यपादवि
निष्क्रान्ता इत्येताः सरिदुत्तमा' ॥

कृतमालाताम्रपर्णी पुष्पजात्युत्प
लावती । मलयाद्रिसमुद्भूतानद्य:
शीतजलास्त्विमा ॥ पितृसोमर्षि
कुल्याचइक्षलाचित्रिदिवालया । ला-
ङ्गूलिनीवंशकरामहेन्द्रप्रभवा स्मृ
ता ॥ ऋषिकाचकुमारीचमन्दगा
मन्दवासिनी । कृपापलाशिनीचै-
वशुक्तिमत्प्रभवा स्मृता ॥ स-
र्वा पुण्या सरस्वत्य सर्वागङ्गा-
समुद्रगा । विश्वस्यमातर सर्वा
सर्वा. पापहरा स्मृता ॥ अ
न्या सहस्रशश्चोक्ता. क्षुद्रनद्यो-
द्विजोत्तम । प्रावृट्कालवहा स-
तिसर्वकालवहाश्चया. ॥ मत्स्या
कुशूला. कुल्याश्चकुन्तला काशि
कोशला ॥ अर्बुदाश्चकुलिङ्गाश्चस-
मकाश्चवृकै सह । मध्यदेशजनप-
दा: प्रायशोमीप्रकीर्त्तिता. ॥ सह्य
स्योत्तरेषं वयत्रगोदावरीनदी ।
पृथिव्यामपिकृत्स्नाया सप्रदेशोम-
नोरम. ॥ गोवर्द्धनपुर रम्य भार्ग-
वस्यमहात्मन. ॥ बाह्लीकावाटधा
नाश्चआभीरा कालतोयका ॥
अपरान्ताश्चशूद्राश्चपह्लवाश्चर्मखण्डि-
का । गान्धारायवनाश्चैवसिन्धु
सौवीरमद्रका. ॥ शतद्रुवालिल्या
श्चपारदाहारमूषिका । माठरार-
श्चतका: कैकयादशमानिका ॥
क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानि



च । काम्बोजादरदाश्चैवबर्बराश्च-
ङ्गलौकिका ॥ चीनाश्चैवतुषारा-
श्चपह्लवावाह्यतोदरा । आत्रेया
सभरद्वाजा प्रस्थलाश्चदशेरका ॥
लम्पका. सूनकाराश्चचूलिकाजा-
ङ्गलै सह । अपगाश्चालिमद्राश्च-
किरातानाञ्चजातय: ॥ तामसाह
समार्गाश्चकाश्मीरास्तङ्गनास्तथा ।
चूलिकाहुडकाश्चैवजर्यादावस्ति-
शैवच ॥ एतेदेशाह्युदीच्यास्तु प्रा-
च्यान्देशान्निबोधमे । अन्ध्रवाका
मुद्गरकाअन्तर्गिरिवहिर्गिरा ॥ त
थाप्रवङ्गावङ्गेयामलदामलवर्त्तिका
ब्रह्मोत्तरा प्रविजया भार्गवाङ्गेय
मर्द्दका । प्राग्ज्योतिषाश्चमद्रा-
श्चविदेहास्ताम्रलिप्तका । मल्वा-
मगधगोमेदा प्राच्याजनपदा
स्मृता ॥ अथापरेजनपदादक्षिणा
पथवासिन । पाण्ड्याश्चकेरलाश्चै
वचोला कुल्यास्तथैवच ॥ सेतुका
मूषिकाश्चैवकुमारावानवासिका ।
महाराष्ट्रामाहिषिका कलिङ्गाश्चै
वसर्वश ॥ आभीरा सह-
चैषीकाआटव्याशवराश्चये । पु-
लिन्दाविन्ध्यमालेया वैदर्भादण्ड-
कै. सह ॥ पौरिकामौलिकाश्चैव
अश्मकाभोगवर्द्धना: । नैलिका.
कुन्तलाश्चन्ध्राउद्भिदानालकारका
॥ दाक्षिणात्यास्त्विमेदेशा. अपरा

नृतानृनिशीधमे । सौर्यारका का
लनदादुर्घास्तालीयकै सह । का
रस्कारलोहजङ्घावानेयाराजभद्र-
का । तोसला कोशलाश्चैवचैपु
राविदिशास्तथा ॥ तुषारास्तुम्बरा
श्चैवपाटवोनैषधै सह । पुलिन्दा-
श्चसुमीनाचरूपमांसामसै सह ।
तथाकुरुमिनचैवसवेचैवकरस्करा॥
नासिकाख्याश्चयेचान्ये येचैवान्तर-
नर्मदा ॥ मानकच्छा समाहेया
सर्वसारस्वते सह । कच्छीयाश्च-
सुराष्ट्राश्चआवन्तलाचार्बुदैः सह ॥
इत्येतेह्यपरान्ताश्च शृणुविन्ध्यनिवा
सिन । मलजाश्चकरूशाश्चमेकला-
श्चोत्कलैः सह । उत्तमर्णादशार्णा
श्चभोजा किष्किन्धकैः सह ।
अनूपास्तुण्डिकेराश्चवीरहोत्राह्यवन्त
य ॥ एतेजनपदाः सर्वे विन्ध्य
पृष्ठनिवासिनः ॥ अतोदेशान्प्रव
क्ष्यामिपर्वताश्रयिणश्चये ॥ निर्हारा
हंसमार्गाश्चकुपथास्तङ्गणाः खशाः
। कुत्सा प्रावर्णाश्चैवऊर्णादर्वा
सहूहुका ॥ त्रिगर्तामालवाभै
वकिरातास्तामसै सह । कृतचे
तादिकश्चात्रचतुर्युगकृतोविधिः ॥
एततुभारतवर्षंचतु संस्थानसंस्थि
तम् । दक्षिणे परतोह्यस्यपूर्वेचैवम
होदधिः ॥ हिमवानुत्तरेणास्यकार्मुकस्ययथागुणः । तदेतद्भारतं



वर्षसर्वबीजद्विजोत्तम ॥ देवत्वमम
रेशत्व देवत्वं मर्त्यतांतथा । मृगपशुव
न्यचरायोनीश्चाहतृसरीसृपा ॥स्था
वराणाञ्चसर्वेषामतोब्रह्मन्शुभाशु
भे । प्रयान्तिकर्मभूर्ब्रह्मन्नान्य
लोकेषुविद्यते । देवानामपिविप्रर्षे
सदैवैषमनोरथ ॥ अपिमानुषमा
प्स्यामोदेवत्वात्प्रच्युताः क्षितौ ।
मनुष्याः कुर्वतेतत्तुयन्नशक्यं सुरा
सुरैः ॥ स्वकर्मनिगडग्रस्तै स्वकर्म
क्षपणोन्मुखैः । नकिञ्चित्क्रियते
कर्मसुखलेशोपवृंहितैः ॥ इतिश्री
मार्कण्डेयपुराणे भारतखण्डवर्णन
नामाध्याय ॥

भारति । पु॰ दशनामसन्यासिनां
मध्ये सन्यासिविशेषे ॥ यथा । ना
मापास्ते ययोविष्णोनामाकर्मविशा
रद । सदेष्टदेवीभाविनभावयेच्यो
हिथावखाम् । सएवभारतिर्वीरोम
हाज्ञानीजितेन्द्रिय इति ॥

भारती । स्त्री॰ वचने ॥ सरस्वत्याम् ।
अर्थपरिज्ञानफलाभिभारती गरुत्मो
भिनिपक्षिविशेषे । भार॰ इ॰ गौ॰
दे॰ भा॰ प्र॰ ॥ ब्राह्मयोषधौ ॥
नाट्यवृत्तिप्रभेदे ॥ शृङ्गारेकौशिकी
वीरेसात्वत्यारभटीपुन. । रसेरौद्रे
चबीभत्से वृत्तिः सर्वत्रभारती ॥
भारतीवृत्तिस्तुसंस्कृताप्रायोवाग्व्या
पारोनराश्रय. ॥ बिभर्ति । बुभुज

भूमृद्दयिग्गीत्यतद्। तत प्रज्ञादित्वात्। ङीप्॥

भारद्वाज . । पु॰ बृहस्पते पुत्रे॥ व्याघ्राटाख्यविहङ्गमे द्रोणाचार्ये॥ ऋषिविशेषे॥ मङ्गलग्रहे॥ भारद्वाजस्यगोत्रापत्यम्। विदाद्यञ्॥ अगस्त्यमुनौ॥

भारद्वाजी । स्त्री॰ वनकार्पास्याम्॥ भरद्वाजस्य मुनेरियम्। तेननिर्म्मितत्वात्। तस्येदमित्यण्। ङीप्॥

भारभूति । पु॰ पुण्यस्थानविशेषे॥ भारभूतौभवेद्भूतिरितिभागवतम्॥

भारय । पु॰ भरद्वाजपक्षिणि॥

भारयष्टि स्त्री॰ उभयतोबद्धशिक्यस्कन्धवाह्यकाष्ठे। विहङ्गिकायाम्॥ भारस्ययष्टिः॥

भारवम्। न॰ ज्यायाम्। गुणे॥

भारवाह । त्रि॰ भारिके॥ भारवहति। वह॰। कर्मण्यण्॥

भारवाहक । त्रि॰ भारवहनकर्त्तरि॥ भारम् वहति। वह॰। ण्वुल्॥ भारस्यवाहकोवा॥

भारवाहण । त्रि॰ उष्ट्रादौभारवाहके॥ वहेर्ण्यन्तात्कर्त्तरिल्युट्। भारस्यान्नादेर्वाहन। वाहनमाहिता दित्वणत्वम्॥

भारवाही । पु॰ धुर्य्ये॥

भारवाही । स्त्री॰ नील्याम्॥

भारवि .। पुं॰ किरातार्जुनीयकाव्यकर्त्तरिकविविशेषे। शतान्यमेद्रलिचिकाख्येशेष।

भारवृक्ष । पु॰ काक्षीनामकगन्धद्रव्ये॥

भारशृङ्ग । पु॰ रुरुनामकहरिणजातौ। वारसिंगा॰ इ॰भा॰॥

भारहर । पु॰ भारिके॥ हरति। हृ अच्। अच्। भारस्यहरः॥

भारहार । पु॰ भारिके॥ भार हरति। हृञ्। कर्म्मण्यण्॥

भाराक्रान्त । त्रि॰ भारवाहे॥ भारेणाक्रान्त॥

भाराक्रान्ता । स्त्री॰ अत्यष्टिवृत्तिप्रभेदे॥ भाराक्रान्तामभनरसलागुरुश्रुतिषड्हयैः॥ यथा। भाराक्रान्तामतनुरिय गिरीन्द्रविधारणात्॰कम्पं धत्तेश्रमजलकणतथापरिस्रुति। इत्यावृत्त्वनञ्जयतिजलदश्यामाकुलवल्लवीस प्रोत्य स्मरविलसित विलोक्यगुरु हरि॥

भारिक .। पु॰ भारवाहे॥ भारोस्ति वाह्यत्वेनास्य। अतइनिठनाविति ठन्॥

भारि । पुं॰ सिंहे॥

भारिट .। पु॰ पक्षिविशेषे। श्यामचटके। शेशिरे। कणभक्षके॥

भारी । पु॰ भारवाहके॥ त्रि॰भारपीडिते॥ भारयुक्ते॥ भारोऽस्त्यस्य॰ अस्मिन्वा। इनि॥

॥ शाकविशेषे ॥ रोहितमत्स्ये ॥ महालक्षणसम्पन्नपुरुषे ॥ कच्छपे ॥ हरे ॥

भालुक । पु॰ ऋक्षे । अच्छभल्ले । भल्लूके ॥ भलति । भलहिंसायाम् । बाहुलकादु । सञ्ज्ञायांकन् । प्रज्ञाद्यण् ॥

भालूक । पु॰ भालुके ॥ भलते । भलपरिभाषणादौ । उलूकादित्वात्साधु । प्रज्ञाद्यण् ॥

भाल्लवेय । पु॰ कुन्दस्थुननामनि ऋष्यन्तरे ॥ भल्लवेरपत्यम् भाल्लवि । तस्यापत्यम् । शुभ्रादेराकृतिगणत्वात् ढक् ॥

भाल्लुक । पु॰ भल्लूके ॥)

भाल्लूक । पु॰ )

भाव । पु॰ सत्तायाम् । सत्वे ॥ परमार्थसत्तारूपे ॥ स्वभावे ॥ मानसधर्मे ॥ उपसनोपायसाधके ॥ यथोक्तं श्रीमहानिर्वाणतन्त्रे । पशुवीरदिव्यभाव देवतामन्त्रसिद्धिदा इति । तत्रापि । पशुभाव । कलौ नास्तिदिव्यभावोपिदुर्लभ । वीरसाधनकर्माणिप्रत्यक्षाणिकलौयुगे इति ॥ अपिच । श्रृणु भाव त्रय देविदिव्यवीरपशुक्रमात् । दिव्यस्तु देववत् प्रायोवीरश्चोद्धतमानस ॥ सत्यत्रेताद्वापर्यन्त दिव्यभावविनिर्णय । चेताद्वापरपर्यन्त वीरभावश्चोरितम् ॥ मद्य मत्स्य तथा मांस मुद्रामैथुनमेवच । स्मशानसाधन भद्रे चितासाधनमेवच ॥ एतत्ते कथित सर्व दिव्यवीरमत प्रिये । दिव्यवीरमत नास्ति कलिकाले सुलोचन इतिकालीविलासतन्त्रम् ॥ अभिप्राये ॥ आत्मनि ॥ चेष्टायाम् ॥ प्रकृतिजन्यबोधविषयप्रकारे ॥ क्रियायाम् ॥ लीलायाम् ॥ पदार्थे ॥ विभूतौ ॥ नाट्योक्त्या विदुषि । बुधे ॥ जन्तौ ॥ मानसविकारे॰ रत्यादौ ॥ योनौ ॥ उपदेशे ॥ श्रृङ्गारादिकारणे ॥ शब्दप्रवृत्तिहेतौ ॥ गौरविते ॥ अभिनयान्तरे ॥ धात्वर्थे ॥ संसारे ॥ भवने । भावनायाम् । चिन्तने ॥ सद्भावे ॥ परमार्थतत्त्वाग्रहरूपे प्रेम्णि ॥ भक्तौ । अनुरागे ॥ तत्तादात्म्ये ॥ भू॰ विभाषाग्रहश्रुल्यच॰ भवतेश्च ति॰ काशिकावचनात् ॥ भावयतिकरोतिरसान् । भावयति॰ परिभावयतिवा । पचाद्यच् ॥ भवनं वा । श्रियोभुवोनुपे तिघञ् वा ॥ भावाबुद्धिगुणाधर्मज्ञानवैराग्यभूतय । सात्त्विकाव्यत्ययेनैते रागमुख्यतामसा ॥ धर्मज्ञानवैराग्यैश्वर्याख्या बुद्धिगुणा भाव सञ्ज्ञया विज्ञेया । एतेचसात्त्विकावीद्धव्या । व्यत्यये

नन्तरितसजातीयप्रत्ययप्रवाहरूपा याम् ॥ भावनातिङ्प्रत्ययवाच्येति मीमांसका ॥ उत्पादनायाम् ॥ ० उत्पत्त्यर्थाद्भवतेर्ण्यन्तात् ० युच् । त्रिविधाभावनायथा । त्रिविधाभावनाविप्रविश्वमे तन्निबोधमे । ब्रह्माख्याकर्मसञ्ज्ञाच तथाचैवोभयात्मिका ॥ ब्रह्मभावात्मिकाह्येका कर्मभावात्मिकापरा । उभयात्मिकातथैवान्यात्रिविधाभावभावना ॥ सनन्दनादयोब्रह्मभावभावनयायुता । कर्मभावनयाचान्येदेवाद्या स्थावराश्चरा ॥ हिरण्यगर्भादिषुचब्रह्मकर्मात्मिकाद्विधा । बोधाधिकारयुक्तेषुविद्यतेभावभावना ॥ इति विष्णुपुराणे ६ अंशे ७अध्याय ॥ त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेणत्रिविधाभावनेत्युच्यते।एतद्धिहरे स्थूलरूपम । अत परकपप्राप्त्युपायत्वात्० तत्प्रथममनसन्धार्यमितिभाव : । भावनानाम ज्ञानविशेषजावासना । तात्रिविधामपिसञ्ज्ञामादिशति०ब्रह्माख्येति । तामेवविषयत्रैविध्येनविविनक्ति० ब्रह्मभावनात्मिकेति ॥ । भावभावना०भावोवस्तु०तद्विषयाभावनात्रिविधा । तत्रवयंब्रह्मैवभावयाम । । वयकर्मैवकुर्म । । वयन्तूभयमिदमनुसन्दध्मइत्येवत्रिविधाभावना । भावनायुक्तान्जीवानुदाहरति०सनन्दनादयइतिद्वाभ्याम् । इतितट्टीका ॥

भावबोधक । पु० अनुभावे ॥ भावस्यरत्यादेर्बोधक सूचकोगुण क्रियादिरनुभाव । अनुभाव्यतेप्रतीतियोग्यतानीयतेरत्यादिरनेनेति० अनुभाव । घञ् । तत्ररतेरनुभावा लोचनचातुर्यभ्रूक्षेपादय । हासस्यच कपोलाकुञ्चना ०नासोत्फुल्लनादयोऽनुभावा ०एवमन्यत्रानुमन्तव्यम् ।

भावरूपम् । न० दृश्ये ॥

भाववृत्त । पु० ब्रह्मणि । भाव सृष्टि ० तत्रवृत्त प्रवृत्त ॥

भाववृत्ति । स्त्री० घटाद्याकारवृत्तौ ।

भावशुद्धि । स्त्री० अन्त करणशुद्धौ ॥ कलिकल्मषयुक्तानासर्वदास्थिरचेतसाम् । निद्रालस्य प्रसक्तानाभावशुद्धि कथ भवेत्इतिमहानिर्वाणत च ॥

भावसशुद्धि । स्त्री० हृदयस्थकामक्रोधलोभादिमलनिवृत्तौ पुनरशुद्ध्युत्पादराहित्येनसाम्यत्वेनविशिष्टायाम् ॥ परे सद्व्यवहारकालेमायाराहित्ये ॥

भावसरोरुहम् । न० हृदयकमले ॥

भावाट । पु० भावके ॥ साधुनिवेशे ॥ कामुके ॥ नटे ॥

भावानुगा । स्त्री० छायायाम् ॥

भावार्थ । पुं॰ सत्तारूपे । परमार्थे ।
भावालीना । स्त्री॰ छायायाम् ॥
भावाट । त्रि॰ विप्रलम्भानरि ॥ भावा न्॰ अवति । अव॰ । कर्मण्यण् ॥
भावावबोध । पु॰ अभिप्रायपरिज्ञाने ॥ यथा । भावावबोधकलुषितोन दुनोतिदोषव्रुति ॥
भाविकम् । न॰ अलङ्कारविशेषे ॥ यथा । प्रत्यक्षाद्रवयद्भावा . क्रियन्ते भूत भाविन . । तद्भाविकम् ॥ भूताश्च भाविनश्चेतिद्वन्द्वः । भाव : कवेरभिप्रायोऽस्तीति॰ भाविकम् । उदाहरणम् । आसीदञ्जनमत्रे तिपश्यामितवलोचने । भाविभूषणसम्भारांसाक्षात्कुर्वेतवाकृतिम् ॥ अत्राद्ये भूतस्य॰ द्वितीयेभाविनोद र्शनम् ॥
भावित : । त्रि॰ वासिते । सस्कृते । प्राप्तित्ड् व्यादिगन्धे व्यञ्जनादौ ॥ प्राप्ते ॥ चिन्तिते ॥ भाव्यतेस्म । भूप्राप्तौ । आधृषाद्वेतिवाणिजन्त : । क्त ॥ भुवोवकल्कनद्भतिणन्ता- त्॰क्तोवा ॥ सम्पादितेशुद्धे ॥
भावितत्त्वम् । न॰ ससक्तत्वे ॥
भावितात्मा । त्रि॰ शुद्धचित्ते ॥
भावित्रम् । न॰ त्रैलोक्ये ॥ भवति । भू॰ । भूवादिगृभ्योणित्रन् ॥
भावी । त्रि॰ भविष्यति ॥ भविष्यत्का ले । वर्त्तमानप्रागभावप्रतियोगिनि उत्पत्तिके ॥ भू॰ । भुवश्चेति॰ इनि- णित् ॥ भवितु योग्ये ॥
भाविनी । स्त्री॰ नारीविशेषे ॥ भाव . शृङ्गारचेष्टाविशेषोविद्यतेऽस्या : । अतइनि । ङीप् ॥ वर्त्तमानप्रा- गभावप्रतियोगिन्याम् ॥
भावुक . । पु॰ भाव्यौक्त्याभगिनीप तौ ॥ न॰ भविके । कल्याणे । म- ङ्गले । शुभे ॥ श्रीकम् । भूप्राप्तौ । लषपतपदेत्युकञ् ॥ त्रि॰ भवन- वति ॥ रसविशेषभावनाचतुरे । उत्पत्तिशीले । भवनाश्रये ॥ भवति य . । कर्त्तरि॰ उकञ् ॥
भाव्यम् । त्रि॰ कार्ये ॥ विभावनीये । भवितव्ये ॥ भवति । भू॰ । णाद् लकात्कर्त्तरिण्यत् । यथा । कृत- स्यकरणं नास्तिदैवाधिष्ठितकर्मणः । भावीत्यवश्य यद्भाव्य तत्प्रत्याप्य- वाधकम् । इति ॥ न॰ अवश्यभवि तव्ये ॥ पौरावश्यके । इतिण्यत् ॥ साध्ये ॥ भावयतीतिभवतेर्ण्यन्ता त्कर्मणिण्यत् ॥
भाषणम् । न॰ कथने ॥ यथा । स ल्लापोभाषणमिति ॥ भाषव्यक्तायां वाचि । ल्युट् ॥ नन्दिग्राहिप्रचा मिषु . सर्वसम्भाषेत ॥
भाषा । स्त्री॰ व्याहारे । उक्तौ । वच ने ॥ भाष्यते प्रयोज्यप्रयोजकवृद्ध- व्यवहारे या प्रयुज्यते । भाष॰ । गु-

भाषा

रीस्वे त्यप्रत्यय । टाप् । शास्त्रीया
ष्टादशभाषायथा । संस्कृता१ प्राकृता
२ उदीची ३ महाराष्ट्री ४ मागधी
५ मिश्रार्द्धमागधी ६ शकाभीरी ७
अवन्ती ८ द्राविडी ९ ओड्रीया १०
पाश्चात्या ११ प्राच्या १२ बाह्लिका
१३ रन्तिका १४ दाक्षिणात्या १५
पैशाची १६ आवन्ती १७ शौरसे
नी १८ । एतासांलक्षणोदाहरणा
निप्राकृतलङ्केश्वरव्याकरणे द्रष्टव्या
नि ॥ अथभाषाविभाग . । पुरुषा
णामनीचानांसंस्कृतं स्यात् कृता
त्मनाम् । शौरसेनीप्रयोक्तव्यातादृ
शीनाञ्चयोषिताम ॥ आसामेवतु
गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्तामागधीभाषा राजान्त पु
रचारिणाम् । चेटानाराजपुत्रा
णाञ्श्रेष्ठिनाञ्चार्द्धमागधी । प्राच्या
विदूषकादीनांधूर्त्तानांस्यादवन्तिका
॥ योधनागरिकादीनांदाक्षिणात्या
हिदीव्यताम । शकाराणांशकादी
नांशाकारींसम्प्रयोजयेत् ॥ बाह्
लीकभाषोदिच्यानांद्राविडीद्रविडा
दिषु । आभीरेषु तथाभीरीचाण्डा
लीपुक्कसादिषु ॥ आभीरीशावरी
चापिकाष्ठपत्रोपजीविषु ॥ तथैवा
ङ्गारकारादौपैशाचीस्यात्पिशाच
वाक् । चेटीनामप्यनीचाना
मपि स्याच्छौरसेनिका ॥

भाषा

बालानांषण्डकानाञ्चनीचग्रहविचा
रिणाम् । उन्मत्तानामातुराणांसैव
स्यात्संस्कृतंक्वचित् ॥ ऐश्वर्येण
प्रमत्तस्यदारिद्र्योपप्लुतस्यच । भिक्षु
बन्धधरादीनांप्राकृतसम्प्रयोजयेत् ॥
संस्कृतसम्प्रयोक्तव्यलिङ्गिनीषूत्तमा
सुच । देवीमन्त्रिसुतावेश्यास्वपिकै
श्चित्तथोदितम् ॥ यद्देशनीचपात्र
न्तु तद्देशतस्यभाषितम् । कार्यतश्चो
त्तमादीनांकार्योभाषाविपर्ययः ॥
योषित्सखीबालवेश्याकितवाप्सर
सांतथा । वैदग्ध्यार्थंप्रदातव्य स
स्कृतञ्चान्तरान्तरा ॥ एषामुदाह
रणान्याकरेषु बोद्धव्यानि । भाषाल
क्षणानिभाषार्णवे ॥ इतिसाहित्य
दर्पणे ६ परिच्छेद ॥ संस्कृतप्रा
कृतभूतभाषाऽपभ्रंशइत्याख्यागिर । ना
टकेनियता.शस्ताएताभाषारसाव
हा ॥ भाषाविभाषाभेदेनप्राकृतन्तु
चतुर्दश ।मागध्यवन्तिकाप्राच्याशौ
रसेन्यर्द्धमागधी ॥ बाह्लीकादाक्षि
णात्याचभाषा सप्तचप्राकृते ॥ श
काराभीरचाण्डालशबरद्रविडोड्र
जा । वनौकसीविजातीनांविभाषा.
सप्तकीर्त्तिता . ॥ कैकेयीशौरसेनी
चकाञ्चीपाञ्चालमागधी । द्राविडीपा
ण्ड्यदेशीचभूतभाषाप्रकीर्तिता . ॥
॥ वैदर्भीमागधीलाटीकाञ्चीजीचोप
नागरी । पाञ्चालीषड्पभ्रंशभाषा

स्युर्दैशभेदतः ॥ इतिसङ्गीतदामोद
र ॥ भाषामुदाहरणमुरारेरनर्घराघ
वे॰ भवभूतेरुत्तरचरिते॰ कालिदा
सस्याभिज्ञानशाकुन्तलेऽवलोकनी
यम् ॥

भाषापाद । पुं॰ चतुष्पाद्व्यवहारा
न्तर्गतप्रथमपादे ॥ तल्लक्षणंयथा ।
धर्मधर्मसंयुक्तं परिपूर्णमनाकुलम्
। साध्यवद्वाचकपदंप्रक्रान्तार्थानुब
न्धिच ॥ प्रसिद्धमविरुद्धंचनिश्चि
तसाधनक्षमम् । संक्षिप्तं निखिला
र्थञ्चदेशकालाविरोधिच ॥ वर्षर्तुमा
सपक्षाहोवेलादेशप्रदेशवत् । स्थाना
वसथसाध्याख्या जात्याकारवयोयुत
म् ॥ साध्यप्रमाणसङ्ख्यावदात्म
प्रत्यर्थिनामच । परात्मपूर्वजानेक
राजनामभिरङ्कितम् ॥ क्षमाशि
क्षात्मपीडावत्कथितावत्र्दायकम्
। यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते
॥ इतिमिताक्षरा ॥ अस्यविवरण
भाषाशब्दे कल्पद्रुमेद्रष्टव्यम् ॥

भाषितम् । न॰ वचने । वचसि ॥
यथा । आचारः कुलमाख्यातिव
पुराख्यातिभोजनम् । सन्तति पु
त्रमाख्यातिदेशमाख्याति भाषित
मिति ॥ भाषणम् । भाष॰ । भावे
क्तः ॥ त्रि॰ कथिते । उक्ते । अ-
भिहिते ॥ भाष्यतेस्म । भाषि : कर्म
णिक्त ॥

भाष्यम् । न॰ सूत्रार्थे ॥ सूत्रोक्तार्थ
प्रपञ्चके । सूत्रानुसारिभिर्वाक्यैः
सूत्रार्थस्स्वपदानांचोपवर्णनपरे॰
ग्रन्थविशेषे ॥ तथाचभरतः । सूत्रा
र्थोवर्ण्यतेयत्रपदैः सूत्रानुसारिभि
। स्वपदानिचवर्ण्यन्तेभाष्यं भाष्यवि
दोविदुरिति ॥ त्रि॰ कथनीये ॥

भाष्यकार । पुं॰ श्रीमच्छङ्कराचार्ये ॥
महाभाष्यकर्त्तरिमुनौ । गोनर्दीये
। पतञ्जलौ । चूर्णिकृति ॥ अस्यभा
ष्यकारसकुमारीयधियाबुभौ । नैव
शब्दाम्बुधेः पारंकिमन्ये जडबुद्ध
यः ॥ भाष्यं करोति । कृञ् ।
कर्मण्यण् ॥

भाष्यकृत् । पुं॰ भाष्यकारे ॥

भा । स्त्री॰ प्रभायाम् । दीप्तौ ।
प्रभावे ॥ मयूखे ॥ छायायाम् ॥
भामते । भासदीप्तौ । भावभासेति
क्विप् । भा॰ भासौ॰ भासः ॥

भास । पुं॰ प्रभायाम् ॥ विहगविशे
षे । शकुन्ते गृध्रे ॥ कुक्कुटे ॥
गोष्ठे ॥ व्याप्यव्यापकतादिप्रतिभा
से ॥

भासनम् । न॰ दीप्तौ ॥ प्रकाशने ॥
सतस्तावदिदंजगत्चिच्छोभयात्म
कंभासते । यथापिण्डस्यघटादिकस्य
स्वभासमानेन्द्रियादिकदृष्टाभितथा
पिशतस्य॰ चित्तगतव्यवहारस्य॰
स्वपादान्तस्यावृतत्त्वं पूर्वंकालेनजडं

भासते । तथासति • पश्चात्
ससमानस्यजडस्यप्रथमतोभा समाम
चैतन्य मेवभासव रूप मिति नि
श्चित्य•जडमुपेक्षन्चिन्मात्रंचित्तेवा
सयेदितिजीवन्मुक्तिप्रकरणम् ॥
भासन्त । पुं• भासपक्षिणि । शकुन्ते
॥ सूर्ये । भे । नक्षत्रे ॥ चन्द्रे
त्रि• रम्ये । सुन्दराकारे ॥ भासते।
भास• । तृभूवह्विवसिभासिसाधीति
भच्चित् ॥
भासन्तो । स्त्री• नक्षत्रे ।' ङीष् ॥
भासमान । त्रि• प्रकाशमाने ॥
भासित । त्रि• प्रकाशिते ॥
भासु । पु• सूर्ये ॥
भासुर । पु• स्फटिके । वीरे ॥
प्रमाणनिरपेक्षतयैवभासनशीले•
आत्मनि ॥ न• कुष्ठौषधे ॥ त्रि•
भासनशीले । दीप्तियुक्ते ॥ भासते
तच्छील । भास• । भञ्जभासमि
दोघुरच् ।
भासुरपुष्पा । स्त्री• वृश्चिकाख्या
म् ॥
भास्कर । पुं• आदित्ये । प्रभाकरे
॥ यथा । सदाप्रजन्मियज्ञेनसदा
दान ददन्तिच । सदाचशायुभक्ता
स्ते निश्च येऽर्चन्तिभास्करमितिभ
विष्यपुराणम् । अग्नौ । वह्नौ ॥
भा करोति । दिवाविभेतिट
। कस्कादिषुपाठात् । तेवविसर्ज
नीयजिह्वामूलीयौसकारस्यनभवत
वीरे । अर्कवृक्षे ॥ न• सुव
र्णे ॥
भास्करवर्षम् । न• प्रयागे ॥
भास्करप्रिय । पुं• पद्मरागमणौ । पु
न्नौ•कृतिकचित् ॥
भास्करेष्टा । स्त्री• आदित्यभक्ताया
म ॥
भास्मन । त्रि• भस्ममये । भस्मनो
विकार । अण । अन्नितिप्रकृति
भावान्नतद्धितकृतिटिलोपोन ॥
भास्वान । पुं• सूर्ये । अर्कवृक्षे ॥
दीप्तौ । प्रभायाम । भास सन्त्य
स्य । तदस्यास्तीतिमतुप ॥ त्रि•
भास्वरे । दीप्तिविशिष्टे । प्रकाश
वति ॥
भास्वर । पुं• दिने । न• कुष्ठौष
धौ । कूट• ई• भा• ॥ त्रि• प्रका
शवति । भासनशीले । भासते•
तच्छील । भासदीप्तौ । स्थेशभा
सपिसकसोवरच् ॥
भिस्सटा । स्त्री• भिस्साटायाम् ॥
भिक्षा । स्त्री• भृतौ । याञ्चायाम् । अर्थ
नायाम् । सेवायाम् । भिक्षितवस्तुनि ।
ग्रासप्रमाणा भवेद्भिक्षा...ताल-
म. । सर्वत्रवेष्वधिकमपिदेयमिति•
भिक्षाश्चभिक्षवेदद्याद्विधिवद्ब्रह्मचा
रिणे•कुलवन्तुप्रभृ . ॥ यद्वैव
यतिग्रासप्रमाणोविषयीतिस्कन्देव•

ते । भिदिर्० । ञाम् ॥ प्रदेशे ॥ प्रशस्ते ॥ मलह्निकोद्भमिश्राः स्युः प्रकाशस्थालभित्तयइतिगय रत्नमहोदधिः ॥

भित्तिका । स्त्री० भित्ती ॥ पल्लिकायाम् । पल्ल्याम् ॥ भिनत्ति० भित्तेवा । भिदिर् ० । क्वतिभिदिल तिभ्य, किदिति० तिकन् ॥

भित्तिचौर पु० चौरविशेषे । कुड्य च्छेदिनि । सींधचोर० इ० भा०

भित्तिपातन : पुं० महामूषके । घूंस० इ० भा० ॥

भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । तच्छीलादिषु० अन्यतोपिह श्यतइतिक्विप् ॥ त्रि० भेदकर्त्तरि ॥

भिदक । पुं० खड्गे ॥ न० वज्रे ॥

भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाडा० फाटा० फाडना० इ० भा० ॥ भेदनम । भिदिर्० । भिदादयश्च । टाप् ॥ अन्याकौ ॥

भिदि । पुं० वज्रे ॥ भिनत्ति । भिदिर्० । कुगुग्गुकुटिभिदिछिदिभ्यश्चेति० इ: सचकित् ॥

भिदिरम् । न० वज्रे ॥ भिनत्ति । भिदिर्० । इषिमदीत्यादिनाकिरच्

भिदु । पु० मणौ ॥ वज्रे ॥ भिनत्ति । भिदिर्० । पृभिदिव्यधीतिकु : ।

भिदुरम् । न० कुलिशे वज्रे ॥ भिनत्ति । भिदिर्० । विदिभिदिच्छिदेःकुरच् । न० प्लक्षवृक्षे । त्रि० भिन्ने ॥

भिदेलिम । त्रि० भेत्तव्ये ॥ भिद्यते कर्मविभिदे केलिमर ॥

भिद्य । पु० नदे । भिनत्तिकूलम् । भिदिर ० । भिद्योद्धयौनदे० इति० ह्यपवाद कर्त्तरिक्यप्निपात्यते ॥

भिद्रम् । न० शतधारे । वज्रे भिनत्ति । भिदिर० स्फायीतञ्चीत्यादि नारक् ॥

भिन्दि । स्त्री० क्षपाविकायाम् ॥ भिन्दति । भिदिश्चवयवे । सर्वधातुभ्य इन् ॥

भिन्दिपाल । पुं० स्वनामख्याते । स्तुगे । गोफण० इ० भा० ॥ भिभिन्द पालयति । पालरक्षणे । कर्मण्यण्

भिन्नः । त्रि० भेदविशिष्टे । दारिते । भेदिते । खण्डितावयवे । अन्यतमसङ्गतौ ॥ फुल्ले ॥ विकृते भिद्यतेस्म॥ भिदिर् ० । क्त । रदाभ्यामिष्ठातो न पूर्वस्यचदइति०दकारतकारयो र्नौ ॥ न० अन्यार्थवचने । पुं० न० क्षतरोगविशेषे ॥ तल्लक्षणं यथा । यस्मिन्कुक्षौ प्रखरशस्त्रविघातक्षतौ भिन्नमित्यभिधीयते ॥ आम च : कोष्ठः ॥

भिन्नक । पुं॰ क्षपणे । बौद्धे । त्रि॰ ईषद्भिन्ने ॥ अनन्तरत्वनगतीत्यादि तिकन् ॥

भिन्नगाचिका । स्त्री॰ कर्कटीविशेषे । फूट॰ इ॰ भा॰ ॥ भिन्न गात्रमस्या

भिन्नदर्शी । त्रि॰ अज्ञे । कुतार्किके । अविद्यामोहितात्मान . पुरुषाभि न्नदर्शिन ॥ भिन्न द्रष्टुशीलयस्य । णिनि ॥

भिन्नधी । त्रि॰ अ सितमती ॥

भिन्नभिन्नात्मा । पु॰ चणके ॥

भिन्नयोजनी । स्त्री॰ पाषाणभेदवृक्षे ॥

भिन्नार्थक । त्रि॰ अन्यस्मिन् ॥ भि न्नार्थकाअन्यतरएकत्वान्यतरापि इत्यमर ॥ भिन्न अर्थोयस्यस ॥

भिया । स्त्री॰ भये ॥ ञिभीभये । भि दाद्यङ्ङियङ् । टाप् ॥

भिरिण्टिका । स्त्री॰ श्वेतगुञ्जायाम ॥

भिल्ल । पुं॰ म्लेच्छजात्यन्तरे । भील इ॰ भा॰ ॥ यथाह । हेमचन्द्र । मालाभिल्लाकिरातास्वसर्वेपिम्ले च्छ जातय इति ॥ सचब्राह्मणकन्याया तीवराज्जात । यथा । पुलिन्द मेदभिल्लाश्चपुल्लोमल्लसधावक । कु न्दकारोडोखलोवामृतपोहस्तिपस्त था ॥ एतेवैतीवराज्जाता ' कन्या यांब्राह्मणस्यचे तिप॰ पद्धति ॥

भिल्लगवी । स्त्री॰ गवय्याम् ॥

भिल्लतरु पुं॰ लोध्रे ॥

भिल्ली । स्त्री॰ लोध्रे ॥

भिषक्पाश । पु॰ निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ॥

भिषक्प्रिया । स्त्री॰ गुडूच्याम् ॥

भिषक्जितम् । न॰ औषधे ॥

भिषग्भद्रा । स्त्री॰ भद्रदन्तिकायाम् ॥

भिषङ्माता । स्त्री॰ वासके ॥

भिषक् । पु॰ वैद्ये ॥ हेतौलिङ्गेप्रश मनेरोगाणामपुनर्भवे । ज्ञानचतु र्विधयस्यसराजार्होभिषक्तम ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्र स्तुयस्यव्याधेरतत्ववित् । रोगिभ्यो ऽर्थसमादत्ते सदण्ड्यश्चौरवद्भिषक् ॥ भिषजोन्नस्याभोज्यत्व यथा । शूद्रा न्नब्राह्मणोभुक्त्वातथारङ्गावतारिण, । चिकित्सकस्यक्रूरस्यतथास्त्रीमृग- जीविनाम् ॥ शौण्डिकान्न सूति कान्न भुक्त्वामासंव्रतीभवेत् । व्र- तीयावकेन । तच्चधेनुद्वयमितिप्राय श्चित्तविवेक ॥ अपिच । पूयचि कित्सकस्यान्न पुंश्चल्यास्त्वन्नमिन्द्रिय म् । विष्ठावार्धुषिकस्यान्नशस्त्रविक्र यिणोमलम् ॥ इतिमानवे ४ अध्या य . ॥ भिषज्यति । भिषज् रुग् जये । कण्ड्वादि । क्विप् ॥ बिभेतिवा । ञिभी॰ । भिय . षुगागमस्सश्चल्य जि ॥

भिखाटा । स्त्री॰ दग्धिकायाम् । दग्धा न्ने ॥ भिखांटीकते । टीकृगती ।

न्यभ्योपीतिङ. । ज्ञापोरितिह्र स्व ॥

भिक्षा । स्त्री० अन्ने । चोदने । भक्ते ॥ बभस्ति । भसदीप्तौ । बाहुलकात्म छन्दसिवहुलमितीत्वम् । आह्व भिक्षे तिभाष्यप्रयोगाल्लोकेपि ॥ य द्वा । भेदनम् ०भित् । सम्पदादि त्वात्क्विप् । भिदस्यति । ओऽन्त कर्मणि । आतोनुपे तिक. । पृषो दरादि: ॥

भिक्षाण्डम् । न० भालूके । भसौक्ष० ड्० भा० प्र० कान्दे ॥

भी । स्त्री० भये ॥ ञिभीभये । सम्प दादित्वात्क्विप् ॥

भीतम् । न० भये वि० भययुक्ते । वि भेति । ञिभी० क्त ० ॥

भीतभीत: । वि० अतिशयेनभीते। भीतप्रकारे ॥

भीति: । स्त्री० भये ॥ ञिभीभये । क्तिन् ॥ कम्पे ॥

भीम. । पुं० अम्लवेतसे ॥ शिवे ॥ पीठविशेषे ॥ यथा । भीमेश्वरोभी मपीठे शिवाभीमेश्वरीतयेत्यागम. ॥ सर्वसम्प्रतिपन्नपराक्रमेपाण्डुतन ये । वृकोदरे ॥ वि०भयङ्करे । घो रे ॥ भयानके ॥ बिभेत्यस्मात् । भी माद्योऽपादाने० भिय: षुग्वेति मक् ॥

भीमकर्मा । पुं० भीमसेने ॥ भीमं० हिडम्बवधादिरूपकर्मास्य ॥

भीमनाद । पुं० सिंहे ॥

भीमनिर्ह्रादि. । पुं० राक्षसान्तरे ॥

भीमपूर्वज । पुं० भीमाग्रजे । युधि ष्ठिरे ॥

भीमरथ: । पुं० तामसमनुवंशजाता सुरविशेषे ॥ हरिवंशकूर्मरूपेणहतो भीमरथोऽसुरइतिमार्कण्डेयपुराणा त्तम्ये ८६ ऽध्याय ॥

भीमरथी । स्त्री० अवस्थाविशे षे ॥ यथा । सप्तसप्ततितमेवर्षे सप्तमेमासिसप्तमी । रात्रिर्भीमरथी नाममराणामतिदुस्तरा ॥ नराणां दुरितक्रमेतिचपाठ. ॥ तामतीत्यन रोयोसौ दिनानि यानिजीवति । क्रतुभिस्तानितुल्यानिसुवर्णांशतदक्षि णे ॥ गति. प्रदक्षिणविष्णोर्भस्य नमस्यभावयम् । ध्यानंनिद्रासुधा नानु भीमरथ्या. पातश्रुति: ॥ न दीविशेषे ॥

भीमविक्रान्त: । पुं० भारिमाचले । सिंहे ॥ भीमश्चासौविक्रान्त: ॥ वि० भयानकविक्रमवति ॥

भीमशासन: । पुं० यमे ॥ भीमंशास नमस्य ॥

भीमसेन: । पुं० मध्यमपाण्डवे । भी मेवृकोदरे ॥ कर्पूरभेदे । भीम सेनोकपूरइतिभाषा ॥ यथा । पी तासोभीमसेनस्तदनुघितसार: स्या

रावासकत्र । पांशु पिष्टोऽल्प सारस्तदनुहिमयुतावालुकाजूटिका च। पश्चादस्यास्तुषारस्तदुपरिसहिम शीतल पत्रिकाख्याक् रसेतिभे दागुणरसमहत्त्वावैसदृश्यं नदृश्या ॥

भीमसुता । स्त्री० दमयन्त्याम् ॥

भीमा । स्त्री० दुर्गायाम् ॥ रोचनाख्य गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । भीमादेवी । स्त्री०) दुर्गायाम् ॥

भीमास्थानम् । न० तीर्थविशेषे ॥

भीमेश्वरी । स्त्री० भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री० माघशुक्लैकाद श्याम् ॥ भैम्याम् ॥

भीर । त्रि० भयदे ॥ भियराति । रा । क ॥

भीरु । पु० इक्षुप्रभेदे ॥ यथा । भीरु श्च प्रकर स्वादुरविदाहीगुरु स्मृत इति ॥ व्याघ्रे ॥ शृगाले ॥ त्रि० भार्त्ते । कातरे ॥ भीरुकी । चक्री । दरपोक० इ० भा० ॥ रणे भीरो स्वर्गाभाव ॥ बिभेति । ञिभीभये । भिय । क्रुक्लुकनावि ति०क्रु ॥ स्त्री० भयशीलायाम् । वरयोषिति ॥ कण्टकार्याम् ॥ श- तावर्याम् ॥ अजायाम् ॥ छाया याम् ॥ स्त्रीमात्रे ॥

भीरुक । पुं० इक्षुप्रभेदे । भोरुरी० इ० दे० भा० प्र० ॥ वातपित्तप्रश मनोमधुरोरसपाकयो । सुशीतोबृंह णोबल्य पौण्ड्रकोभीरुकस्तथा ॥ पेचके ॥ न० वने ॥ त्रि० भयशीले । भीलुके । चक्री ॥ बिभे ति । ञिभी० । क्रुकन् ॥

भीरुहृदय । पु० मृगे ॥

भीरू: । स्त्री० भयशीलायांयोषिति ॥ ऊङुतइत्यूङ् ॥

भील । पु० भिल्ले ॥ भियलाति । ला० क० ॥

भीलभूषणा । स्त्री० गुञ्जायाम् ॥

भीलुक । त्रि० भयप्रकृतिकेजने । चक्री ॥ बिभेति । ञिभी० । भिय क्रुक्लुकनावितिक्लुक न् ॥

भीषण । पु० भयानकरसे ॥ शल्ल- क्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि० गाढे ॥ दारुणे ॥ भीरुरसान्विते ॥ भीषयते । ञिभी० । नन्द्यादि त्वाल्ल्यु । भियोहेतुभयेषुगिति षुक् ॥

भीष्म । पु० गाङ्गेये । पाण्डवाना पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भया नकरसे ॥ त्रि० भयहेतौ । भयङ्क रे ॥ बिभेत्यस्मात् । ञिभी० । भिय षुग्वेति०मक्० षुगागमश्च

भीष्मक । पु० रुक्मिण्या पितरि ॥

भीष्मजननी । स्त्री० गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्त्तिकशुक्लपक्षी यैकादश्यादि पूर्णिमान्तपञ्चतिथि कर्त्तव्यव्रतविशेषे ॥

भीष्मरत्नम । न० हिमालयोत्तरदेश जातशुक्लवर्णप्रस्तरविशेषे । भीष्म पाषाणे ॥

भीष्मसू . । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । सूङ्० । क्विप् ॥ शान्तनो- र्मन्त्रिणीभूत्वाभीष्म सूतवतीयत । तस्मात्साभीष्मसू प्रोक्तागङ्गात्रै लो क्यपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् ॥ तत्रभीष्मस्यतर्पणकर्त्तव्यम् ॥

भीसटम् । न० श्मिमान्सके ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त, भुक्तान्नाक्षया वृत्यवतुभुक्तमेषामस्तीत्यकारोमत्व र्थीयोनतुकर्त्तरिक्त . । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ यद्वोत्तर पदलोपोत्रद्रष्टव्य । भुक्तान्नाभु क्ता । अत्रान्नस्यभुक्तत्व ब्राह्मणे षूपचर्य्यते ॥

भुक्तसमुज्झित । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात्समुज्झितम् । पूर्वकालैकेतिसमास ॥

भुक्ति ' । स्त्री० भोजने ॥ भोजनम् । भुजपालनाभ्यवहारयो :। स्त्रियां क्तिन् ॥ भोगे ॥ यथा । भुक्तिस्त्रिपु रुषोसिध्य दिति ॥

भुक्तिप्रद । पु० मुद्गे ॥ त्रि०भोगदातरि ॥

भुक्तोज्झित । त्रि० फेलायाम् ॥ पूर्वंभुक्तम्०पश्चादुज्झितम् । पूर्व कालेकेतिसमास ॥

भुग्न । त्रि० रोगादिनाकुटिलीकृते रुग्णे ॥ भग्ने ॥ भुज्यतेस्म । भुजो कौटिल्ये । क्त । ओदितश्चेति नत्वम् ॥ भुजतिस्मवा । गत्यर्थेति क्त ॥

भुज । पु० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । कक्षाश्च त्वद्लाश्चेछासुगन्धिन्यूर्ध्वरोमिका । अन्यथाश्चर्यहीनानामसौनि स्वस्य रोमशौ ॥ निर्मांसौचैवभग्नाल्यौस्थि ष्ठौचविपुलौभुजौ । आजानुलम्बि नौवाङ्कस्तौपीनौनौनरेश्वरे ॥ नि स्सामौरोमशौह्रस्वौश्वेछौकरिकरप्रभौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयो . । भुजन्युब्जौ पाण्युपतापयोरितिसाधु ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुप- धेतिक ॥ चतुष्कलेशिषगुरुसंज्ञायाम् ॥ ० ॥ पु० ॥

भुजकोटर . । पु० कक्षे ॥

भुजग . । पु० सर्पे ॥ भुज. सन्गच्छ ति । अन्यत्रापीतिड ॥ भुजैःकौ टिल्येनगच्छतिवा ।

भुजगदारण । पु० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराज । पु० शेषाहौ ॥ भुजगानांराजा । टच् ॥

भुजगशिशुभृता । स्त्री० वृहतीछन्द प्रभेदे ॥ भुजगशिशुभृतानौम । यथा । दृढ़तटनिकटक्षोणीभुजगशिशुभृतायासीत् । मुररिपुदलिते नागेन्द्रजनसुखदासाऽभूत् ॥

भुजगान्तक । पु० गरुडे ।

भुजगाभोजी । पु० मयूरे ॥

भुजगाशन । पु० पक्षिसिंहे । गरुडे ॥ भुजगानश्नाति । अश० । ल्यु । भुजगाश्चशन यस्यवा ॥

भुजङ्ग । पु० अहौ । सर्पे ॥ षिड़गे ॥ भुजं नकौटिल्यं नगच्छति । गमेः सुपिखच् खच्चडिद्वावाच्यः इतिडित्वपक्षे टिलोप । ॥ सौसके ॥

भुजङ्गघातिनी । स्त्री० सर्पाच्याम् । चुल्कर्यांम् । बड़ाजिका० हू० गौ० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्द प्रभेदे ॥ भुजङ्गप्रयात चतुर्भिर्यकारैः ॥ यथा । सदारात्मजज्ञाति भृत्योविहायत्वमेत दृढ़ जौवित लिप्सतान । मयाक्लेशित । काखिमेत्थ कुरुत्व भुजङ्गप्रयात द्रुतझागराय ॥

भुजङ्गभुक् । पु० मयूरे ॥ भुजङ्गभुङ्क्ते । भुज० । क्विप् ॥ गरुडे ॥

भुजङ्गभोजी । पुं० राजसर्पे ॥

भुजङ्गम । पु० सर्पे । भुजंनकौटिल्येनगच्छति । गमे सुपिवाच्यइतिखच् । खच्चडिद्वावाच्यइति डित्भावे टिलोपाभाव ॥ न० सौसके ॥

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृतिच्छन्द प्रभेदे ॥ वसौशाश्वैश्छेदोपेत ममतनयुगलसजजगैर्भुजङ्गविजृम्भितम् ॥ यथा । शैलोद्यन्यञ्चतपादप्रकटविकटनटनभरोरवात्करतालकस्वारुप्रेङ्खत्चूडावर्हश्रुतितरलनवकिशलयतरङ्गितश्रुक् । वस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुग कृतस्तुतिरच्युत । पायान्नश्छिन्दन्कालिन्दीहृदकृतनिजवसतिन्नह्भुजङ्गविजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० वृहतीछन्द प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ॥ यथा । तरलातरङ्गरिङ्गितैर्यमुनाभुजङ्गसङ्गता । कथमेतिव-

स्वचारकस्यपल ' सद्देवताहरि ॥

भुजङ्गहा । पुं॰ श्रीकृष्णस्यन्दन ध्वजे । गरुडे ॥

भुजङ्गाक्षी । स्त्री॰ रास्नायाम् ॥ भुजङ्गान् अत्ति । अत्तूव्याप्तौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोक्षियस्या । अक्ष्णोदर्शनादित्यच् । जातेरिति॰ गौरादित्वाद्वा॰ङीष् । भुजङ्गशब्द स्य भुजङ्गाक्षिसदृशीलक्षणा ॥

भुजङ्गाख्य । पुं॰ नागकेसरे ॥

भुजशिरः । न॰ स्कन्धे ॥ भुजस्यशिर ॥

भुजा । स्त्री॰ बाहौ ॥ करे ॥ भुजाद्टाप् ॥

भुजाकण्टः । पुं॰ कामाङ्घ्रि । नखे॥

भुजादल । पुं॰ हस्ते ॥ भुजान्तरम् न॰ क्रोडे ॥ भुजयोरन्तरम् ॥

भुजि । पुं॰ वह्नौ ॥ भुनक्ति॰ भुज्यतेवा । भुज॰ । भुजे . किच्चेति॰ इ ॥

भुजिष्य । पुं॰ स्वतन्त्रे ॥ हस्तसूत्रे । दासी ॥ भुङ्क्ते॰ स्वाम्युच्छिष्टम्॰ भुज्यतेवा । भुज॰ । रुचिभुजिभ्या किष्यन् ॥

भुजिष्या । स्त्री॰ दास्याम् ॥ गणिकायाम् ॥ टाप ॥

भुज्यु । पुं॰ भोजने ॥ अग्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यायुक्त्युकाविति युक् ॥ भोजनंवा ॥ भावने ॥ कर्मणिवि शे ॥

भुञ्जन् । त्रि॰ भोगकर्तरि । भुञ्जाने॥ भुजे॰लट शतृ ॥

भुञ्जान । त्रि॰ भुङ्क्ते । यथा । त्रिपुधामसुयद्भोज्य भोक्तायश्चप्रकीर्तित । वेदैतदुभयंयस्तुसभुञ्जानो नलिप्यत इति । त्रिषुधामसुजाग्रदादिषु ॥ भुजो . कर्त्तरिलट शानच् ॥

भुविक् । स्त्री॰ पृथिव्याम् ॥ बिभर्त्ति॰ भरति मनुष्यादीन् । डुभृञ्॰ । भृञउच्चेति॰ कुन्प्रत्यय

भुवनम् । न॰ सलिले । जले ॥ गगने । जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानियथा । भूर्भुवः स्वर्महश्चैव जनश्चतप एवच । सत्यलोकश्चसप्तैतेलोकास्तु परिकीर्त्तिताः ॥ अतलसुतलञ्चैव वितलञ्चगभस्तिमत् । महातलंरसातलम्पातालंसप्तमं स्मृतम् ॥ इति ॥ भवन्त्यस्मिन्भूतानि॰ इति भुवनमयलोक ॥ भूयते । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति॰ उत्पद्यन्तेऽनेनकर्मणिल्युट् । सत्तापूर्वकत्वादुत्पत्ति भाव ॥

भुवनकोष । पुं॰ भूगोले ॥

भुवनकोषवित् त्रि॰ । चतुर्दशभुवना

निवसन्ति० इतितात्पर्य्यार्थाभिज्ञे ॥ कल्पनामात्रमेतत् । तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम् । तेषांमिथोविप्रतिपत्तिदर्शनात ॥

भुवनेश्वर । पुं० एकाम्बरे ॥

भुवनेश्वरी । स्त्री० महाविद्याविशेषे। साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम्॥ यथा । पाशाङ्कुशधराभीतिधरादेवीं चिदात्मिकाम् । वन्देसमन्दहसितामणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाध करमारभ्यदक्षिणाध करपर्य्यन्तम् । तदुक्तं महासमोहनतन्त्रे । दक्षिणेचाङ्कुशदद्याद्वामेपाशप्रदापयेत् । अभयदक्षिणेदद्याद्वरवामेप्रदापयेदिति । इत्थमपिभुवनेशीध्याने । दक्षेङ्कुशाभयेप्रोक्तेवामेपाशमथेष्टदमिति॥

भुवन्यु । पुं० भानौ ॥ सूर्य्ये ॥ ज्वलने । वह्नौ ॥ शशलाञ्छने । शशिनि ॥ भवति । भू० । कन्युच् क्षिपिशेति० बाहुल० कन्युच् ॥

भुवर्० । अ० अन्तरिक्षे । गगने ॥ अ
व्ययान्तप्रतिरूपकमव्ययम् । भवति । भू० । भूरञ्जिभ्याङ्किदित्यसुन् । उवङ् ॥

भुवर्लोक । पुं० भूरादिसप्तलोकान्तर्गत द्वितीयलोके॥ यथा । भूमिसूर्य्यान्तरयत्रसिद्धादिमुनिसेवितम्। भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच । तिथिलत्तोभुवर्लोकोभ्रुवप्राप्तोमहीतलात् ॥ भूपृष्ठादारभ्यध्रुवप्राप्तइति० ज्योतिश्चक्रावलम्बनभूतध्रुवपर्य्यन्तपञ्चदशलक्षक्रोशोच्छ्रायोभुवर्लोकइत्यर्थः ॥

भुवि । न० अब्धौ । समुद्रे ॥ भवन्त्यस्मिन् । भू० । भुव किदिति० इसन् ॥

भुशुण्डी । स्त्री० अस्त्रान्तरे । अग्नियन्त्रे ॥ यथा । उड्डीयोड्डीयचप्राप्यनदन्तीदशकट्टका । क्रमतेचानतात्रयीयासाभुशुण्डीनिगद्यते ॥

भू । अ० रसातले ॥

भू । स्त्री० स्थानमात्रे ॥ एकाङ्के ॥ व्याहृत्यन्तरे ॥ धरण्याम् । भूमौ ॥ दृष्टात्मविजयन्ययाम्नृपान्हसति भूरियम् । अहोमाविजिगीषन्तिमृत्योः क्रीडनकानराः ॥ भवति० भवनवा । भू० सत्तायाम् । कर्त्तरिभावेवाक्विप् ॥ भवन्त्यस्यांसर्वमित्यधिकरणेबहुलवचनाद्वाक्विबित्येके । भवन्त्यस्याभूतानीत्यपादानेवाक्विबित्येके ॥ उत्पत्तौ ॥

भूक । पुं० न० काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू० । सृवृभूशुषिमुषिभ्यः कक ।

भूकदम्ब । पुं० अलम्बुषवृक्षे । कोकसिम० श० गौ० दे० भा० ॥

भूकदम्बक । पु० यवान्याम् ।
भूकदम्बिका । स्त्री० महाश्रावणिका याम् ॥ मुण्डाम् ॥
भूकन्द । पु० महाश्रावणिकायाम् ॥
भूकम्प । पु० उत्पातविशेषे ॥ स-यथा । यामद्वमात्रभूकम्पोद्दिजादीनामनिष्टद । अनिष्टद क्षितीशानांसन्ध्ययोरुभयोरपि ॥ इतिवशिष्ट ॥ यदाविजृम्भतेनन्तोमदाघूर्णितलोचन । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुव कम्पो भूकम्प ॥ मेषेवृश्चिकभे गज प्रचलतिव्यासादिभि . कथ्यते चापे मीनकुलीरभेचवृषभेसम्य चलेत्कक्ष्मप । युक्तेकुम्भधरेमृगेन्द्रमिथुनेकन्यामृगेपन्नगस्तेषामेकतमोयदि प्रचलतिक्षोणीतदाकम्पते ॥ काश्यपेमरणञ्चयमरण चापिपन्नगे ।,सर्वंचमुखदश्चैवपृथिव्या चलितेगजे ॥ प्रथितनरेश्वरमरणव्यसनान्याग्नेय मारुतयो . । क्षुद्भयमतिवृष्टिभिरुपपीडान्तेजनाश्चापि ॥ त्रिचतुर्थपञ्चमदिनेमासेपक्षेत्रिपक्षके। भवतियदाभूकम्प प्रधाननृपनाशनंकुरुते।सचायभूमिजोत्पातविशेष ॥यथा । चरस्थिरभवभौमभूकम्पमपिभूमिजम्। जलाशयानांवैकृत्यं भौमतद्पिकीर्तितम् ॥ भौमंयाप्यमल्पश्चेयचिरेणपरिपच्यते ॥ अपिच । चितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवंचान्ये ॥ अनिलोऽनिलेनचिहत क्षितौपतन्सस्वनंकरोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्येप्राहुराचार्या ॥ गिरिभि पुरासपक्षैर्वसुधाप्रपतद्भिरुत्पतद्भिश्च । आकम्पितापितामहमाहामरसदसिसव्रीडम् ॥ भगवन्नाममनैतत्त्वयाकृतयदचलेतितन्नतथा । क्रियतेऽचलैश्चलद्भि शक्ताऽहंनास्यखेदस्य । तस्या सगद्गदगिरकिञ्चित्स्फुरिताधरविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपितामह प्राह ॥ मन्युहरेन्द्रधात्या क्षिपकुलिशशैलपक्षभङ्गाय । ममभैरीतिगुलकृत्वा माभैरीरितिवसुमतीमाह ॥ किन्त्वनिलदहनसुरपतिवरुणा . सदसत्फलाववोधार्थम् । प्राग्द्वित्रिचतुर्भागेषुदिननिशो का म्पयिष्यन्ति ॥ अतोविशेषोद्रष्टव्योवाराहोक्तसुविस्तरै ॥
भूकर्बुदार । पुं० ) क्षुद्रश्लेष्मातके ।
भूकर्बुदारक । पुं०) भूशेलौ । छोटा लसोडा॰ इ॰ भा॰ ॥ भूकर्बुदा रोमधुर ' कृमिशूलापह ' परम् । वातप्रकोपन : किञ्चित्शीतल . रुचिमारक ॥
भूकल । पुं० दुर्विनीताश्वे ॥

भूकश्यप । पुं० वसुदेवे ॥

भूकाक । पुं० स्वल्पकङ्के । क्रौञ्चे । नीलकपोते ॥

भूकुम्भी । स्त्री० भूपाटल्याम् ॥

भूकुष्माण्डी । स्त्री० विदार्याम् ॥

भूकेश । पुं० शैवले ॥ वटे ॥

भूकेशा । स्त्री० राक्षस्याम् ॥

भूकेशी । स्त्री० अवल्गुजे ॥

भूक्षित् । पुं० सूचीरोमणि । शूकरे ॥

भूखर्जूरी । स्त्री० क्षुद्रखर्जूर्याम् । भूयुक्तायाम् ॥ भूखर्जूरीतुमधुरा शिशिरादाहपित्तनुत् ॥

भूगरम । न० विषे ॥

भूगर्भ । पुं० भगवति । भूर्गर्भेयस्य भूः सर्वभूताश्रयभूतागर्भइवान्तर्वर्तिनीयस्य भूसत्तागर्भेऽस्येतिवा ॥ भवभूतिनामनि० कवौ ॥

भूगोल । पुं० ज्योतिश्शास्त्रप्रसिद्धे भुवनकोषे ॥ भोज्य यथासर्वरसविनाज्य राज्य यथाराजविवर्जितञ्च । सभानभातीवसुवक्तृहीनागोलानभिज्ञोगणकस्तथैव ॥ वादीव्याकरणविनैवविदुषाधृष्ट प्रविष्ट सभाजल्पन्नल्पमति स्मयात्पटुवटुभ्रूभङ्गवक्रोक्तिभि । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित् सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभि ॥

भूचर । त्रि० भूमिचारिणि ॥

भूच्छायम् । न० अन्धकारे ॥ भुवश्छाया । छायाबाहुल्ये० इति क्लीवता ॥

भूजन्तु । पुं० भूनागे ॥

भूजम्बू । स्त्री० गोधूमे ॥ विकङ्कतफले ॥ भूमिजम्ब्वाम् ॥

भूत । पुं० दे०योनिविशेषे ॥ सच अधोमुखोर्द्ध्वमुखादिपिशाचभेदोरुद्रानुचरोबालग्रह ॥ कुमारे ॥ कृष्णचतुर्दश्याम् ॥ योगीन्द्रे ॥ शम्भोर्गणविशेषेशिषु । न० क्ष्मादौ । पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पिशाचादौ ॥ जन्तौ । युक्ते । न्याय्ये ॥ वस्तुतत्त्वानुसरणे । त्रि० उचिते ॥ प्राप्ते ॥ वित्ते ॥ ऋते । सत्ये ॥ प्राणिनि ॥ कालविशेषे । वृत्ते । अतीते । गते ॥ परमार्थे ॥ विद्यमानेवस्तुनि ॥ अतीतोत्पत्तिके । जाते ॥ समे ॥ उत्तरपदस्थएव भूतशब्द समार्थइतिशाब्दिका । यथा पितृभूत । देवभूतोयमिति पूर्वमपिविद्यमाने ॥ भवनश्रमिणि ॥ भाव्यते स्म । भूप्राप्तौ । आधृषाद्वेतिणिजभाव पक्षे० क्त ॥ भूमिरस्यास्तिवा । अर्शआद्यच् ॥ अभवद्वा । भुवोगत्यर्थेति ० भूतार्थे क्तः रिक्त ॥ अर्द्धर्चादि ॥

भूतकृत् । पुं० धातरि । द्रुहिणे ।

भूतानि करोति । डुकृञ्० । क्विप । तुक् ॥ रुद्रे ॥ भूतानि कृन्तति० छिनत्ति । कृतीछेदने । क्विप् ॥ कृणोतिहिनस्तिवा । कृञ्० । क्विप तुक् ॥ विष्णौ ॥ रजोगुण समाश्रित्यविरिञ्चिरूपेण ० भूतानिकरोतिद्रूतितथा ॥

भूतकेश । पु० तृणविशेषे । गोलोम्याम् । अल्पकेश्याम् ॥ भूतानाकेशइव । भूत केशोस्य वा ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिन्दुवारे ॥

भूतक्रान्ति । स्त्री० भूतावेशे ॥

भूतगणः । पु० पृथिव्यादिपञ्चके ॥ भूतानागणः ॥

भूतगन्धा । स्त्री० मुरानामगन्धद्रव्ये ॥

भूतग्राम । पु० देहेन्द्रियसङ्घाताकारेणपरिणते पृथिव्यादिभूतसमुदाये ॥ सच० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधोभवति । भूतानांपृथिव्यादीनांग्राम ॥

भूतघ्न । पु० भूर्जद्रुमे ॥ उष्ट्रे ॥ लशुने ॥ त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकाया ॥

भूतचतुर्द्दशी । स्त्री० कार्त्तिककृष्णचतुर्द्दश्याम् । यमचतुर्द्दश्याम ॥

भूतजटा । स्त्री० जटामांस्याम् ॥ गन्धमांस्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वसम्प्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्राह्यायोग्यविशेषगुणवत्त्वे ॥ पृथिव्यादयस्तुजातिविशेषा ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥

भूतद्रुम । पुं० श्लेष्मातकवृक्षे ॥

भूतध्रुक् । पु० भूतानामपकारके ॥ भूतानिद्रुह्यति । द्रुह० । सत्सूद्विषेतिक्विप् ॥ भूतध्रुक्कोलभेतश्रम् ॥

भूतधात्री । स्त्री० भूमौ ॥ भूतानाधात्री ।

भूतनाथ । पु० शिवे ॥ भूतानांनाथ ॥ भूतैर्जन्तुभिर्याच्यते० तानुपतापयति०तेभ्यआशास्ते०तेषामभीष्टमितिनाभूतनाथ ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशन । पु० श्वेतसर्षपे ॥ सर्षपे । भल्लातके ॥ न० रुद्राक्षे ॥ भूतान्नाशयति । णशअदर्शने ल्युट् ॥

भूतपति । पुं० महादेवे ॥ भूतानापति ॥

भूतपत्री । स्त्री० तुलस्याम् ॥

भूतपुष्प । पु० श्योनाकवृक्षे ॥

भूतपूर्णिमा । स्त्री० आश्विनपूर्णिमायाम् । शारद्याम् । कोजागरायाम् ॥

भूतपूर्व । त्रि० अतिक्रान्ते ॥ पूर्वं भूत । सुप्सुपेतिसमास । भूतपूर्वेचरडितिर्निर्देशात्भूतशब्दस्यपूर्वनिपात ॥

भूतप्रादुर्भाव । पु० अतिक्रान्तोत्पत्तौ ॥ भूतस्यप्रादुर्भाव ॥

भूतभावन । पु० सर्वभूतपितरि । ईश्वरे । भूतानिभावयतिजनयति० प्रापयतिवा । भवतेरर्न्तात् युच् ॥

भूतभृत् । पु० विष्णौ ॥ भूतानि बिभर्ति धारयति० पोषयतिवा० । डुभृञ्० । क्विप् । तुक् ॥

भूतभैरव । पु० भैरवविशेषे ॥ शीतज्वरापहचूर्णविशेषे ॥ यथा । एलाजातिफलव्योषत्रिफलाजीरकघन । सविडङ्गसितायुक्तं चूर्णंशीतज्वरापहमिति ॥

भूतमात्रा । स्त्री० शब्दादिषु ॥ पृथिव्यादिषुविषयेषु ॥

भूतमारी । स्त्री० चीडानाम निगन्धद्रव्ये ॥

भूतयज्ञ । पुं० पञ्चमहायज्ञान्तर्गतबलिवैश्वदेवकर्मणिभूतेभ्योबलिहरणे ॥

भूतयोनि । पु० परमात्मनि ॥ भूतानांयोनि ॥

भूतलिका । स्त्री० पृक्कायाम् ॥

भूतवास । पु० कलिद्रुमे ॥ भूतानांवास । भूतानांवासोस्मिन्वा॥

भूतविक्रिया । स्त्री० अपस्माररोगे ॥

भूतवित । पुं० लौकायतिके ॥ सच पृथिव्यप्तेजोवायवस्तत्त्वानि० तानिचत्वारिभूतानिजगत्कारणानीति कल्पयति ॥

भूतविद्या । स्त्री० भूततन्त्रे ॥ यथा । भूतविद्यानाम० देवासुरगन्धर्वयक्षरक्ष पितृपिशाचनागग्रहाद्युपसृष्टचेतसा० शान्तिकर्मबलिहरणादिग्रहोपशमनार्थमितिसुश्रुत ॥

भूतवृक्ष । पु० शाखोटवृक्षे । श्योनाकवृक्षे ॥ कलिवृक्षे ॥

भूतवृक्षक । पु० शाखोटे ॥ बहुवारके लसोडा० इ० भा० ॥

भूतवेशी । स्त्री० श्वेतशेफालिकायाम् । श्वेतसुरसायाम् । श्वेतन्यवारी० इ० भा० ॥ भूतानिविशन्ति । विशप्रवेशने । कर्मण्यण् ॥

भूतब्रह्मा । पु० देवले ।

भूतसञ्चार । पु० भूतोन्मादरोगे । भूतक्रान्तौ । ग्रहागमे ॥

भूतसञ्चारिणी । स्त्री० कृष्णचतुर्दश्याम् ॥

भूतसञ्चारी । पुं० दावानले ॥

भूतसर्ग । पु० भूतसृष्टौ। देवासुरभे
दैनभूतानांसृष्टौ ॥ यथा । ब्राह्म
प्राजापत्यश्चसौम्यऐन्द्रस्तथैवच ।
गान्धर्वोप्यथकौबेरोरक्ष . पैशाचमा
नुषा . ॥ स्थावर पार्थवोमार्ग
सार्प शाकुनिकस्तथा । चतुर्दशवि
धोह्येषभूतसर्ग प्रकीर्तित ॥

भूतसार । पु० श्योनाकप्रभेदे ॥

भूतसृट् । पुं० ब्रह्मणि ॥

भूतहन्त्री । स्त्री० वंध्याकर्कोटक्याम् ।
नीलदूर्वायाम् ॥

भूतहर । पु० गुग्गुलौ ॥

भूतहारि न० देवदारुणि ॥

भूता । स्त्री० कृष्णचतुर्दश्याम् ॥ य
था । स्कान्दे । ब्रह्माण्डोदरमध्ये
तुयानितीर्थानिसन्तिवै । पूजिता
निभवन्तीहभूतायापार्थेत्तते ॥ अ
पिच । शिवरात्रिव्रतेभूताकामवि
द्धाविवर्जयेत् ॥

भूताङ्कुश . । पुं० गौ० दे० स्वनाम्ना
प्रसिद्धे वृक्षे । चवके । मत्स्याक्ष्यै ॥
भूताङ्कुशस्तीक्ष्णगन्ध : कटुरुष्णस्त
थोत्कट . । भूतयक्षादिदोषघ्न क
फवातनिकृन्तन . ॥

भूतात्मा । पुं० देहेपृथिव्यादिभूता-
रब्धत्वात्० भूतान्यंवात्मास्वभावो
यस्यस ॥ परमेष्ठिनि । द्रुहिणे
हिरण्यगर्भे ॥ भूतानांव्यष्ट्युपाधी
नामात्मानिवव्यासमष्ट्युपाधित्वा-
त्० इति ॥ सदाशिवे ॥ जीवात्म
नि ॥ विष्णौ ॥ भूतानांप्राणिनामा
त्माअन्तर्यामी ॥

भूतादि । पु० सर्वजगत्कारणे । ता
मसाहङ्कारे ॥ भूतानामादि ॥ प
रमेश्वरे ॥ भूतानांभवनधर्मकाणा
मुत्पत्तिमतांसर्वेषामादि कारण
कर्त्रुपादानोभयात्मकमितियावत्॥

भूतादिसर्ग पु० भौतिकसर्ग ॥ भू-
तादे सर्ग . ॥

भूतारि । न० हिङ्गुनि० ॥

भूतार्त । त्रि० भूताविष्टे ॥ भतेन
क्ततोदीप्त । क्तेचतृतीयासमास
इतिवृद्धि ॥ भूतेनचार्तोवा ॥

भूतार्थ । पु० सिद्धार्थे ॥

भूतार्थवाद । प० प्रमाणान्तरविरो
धस्तुतिरहितार्थबोधकेवेदवाक्ये ॥
यथा । इन्द्रोवृत्रायवज्रमुदयच्छदि
त्यादि ॥

भूताली । स्त्री० भूपाटल्याम् ॥ मुष
ल्याम् ॥

भूतावास । पु० विभीतकी । वहेडा०
इ०भा० ॥ भूतानामावास ॥ श्म
शानाद्याश्रये०वासुदेवे ॥ भूतान्या
भिमुख्येनवसन्त्यत्र ॥ वसन्तित्वयि
भूतानिभूतावासस्ततोभवान् । इ
तिहरिवंश ॥ काये ॥

भूताविष्ट . । त्रि० पिशाचग्रस्ते ॥ भ

तात्क्रान्ते ॥ भूतादिनारोगग्रस्ते ॥
भूताविश । पुं० आविष्टे । भूतस-
ञ्चारे ॥
भूति । स्त्री० भस्मनि ॥ सम्पत्तौ ॥
हस्तिशृङ्गारे ॥ मांसपाकविशेषे ॥
उत्पाते ॥ शिवस्याणिमाद्यष्टविधै-
श्वर्ये । अणिमामहिमाचैवलघिमा
गरिमातथा । प्राप्तिः प्राकाम्यमीशि
त्व वशित्व चाष्टभूतयः ॥ शम्भुधृ
तभस्मनि ॥ भूत्यां ॥ उत्पत्तौ । जा
तौ ॥ वृद्धिनामौषधे ॥ रोहिषतृणे ॥
विभूतौ ॥ भवनम् भूतिः । स्त्रियां
क्तिन् ॥ भवत्यनया । क्तिञ्चा ॥
भूतिक । पु० यवान्यामोषधौ ॥ न०
कटफलौषधौ । घनसारे ॥ भूनि
म्बे ॥ भूस्तृणे ॥ भवति । भू० ।
क्तिच्क्तौचसञ्ज्ञायामिति० क्तिच् ।
सञ्ज्ञायांकन् ॥
भूतिकाम । पु० ऐश्वर्याभिलाषि
णि ॥
भूतिकील । पुं० भूखाते ॥
भूतिगर्भ । पुं० भवभूतिकवौ ॥
भूतिनिधानम् । न० धनिष्ठानक्षत्रे ॥
भूतिमान् । त्रि० ऐश्वर्ययुक्ते ॥
भूतिकम् । न० भूनिम्बे ॥ यवान्या
म् । कर्पूरे ॥ भूस्तृणे ॥ तृणे ॥
भूतृणम् । न० शष्पतृणे । गन्धखेडे
। रौहिषे ॥ प० रोहिषे । भूति-
के । मालातृणे । सुगन्धरोहिष० इ०

परिमलद्रव्यमिति० इ० नाम प्रभावात्प्र
सिद्धे ॥ भूतृणं कटुकतिक्त तीक्ष्णो
ष्ण रोचन लघु । विदाहिदीपन रूक्ष
मनेल्य मुखशोधनम् ॥ अहृद्य वहुवि
ट्कञ्चपित्तरक्तप्रदूषणम् ।। भुव-
स्तृणम् ॥
भूतेश । पु० शिवे । सर्वभूतनियन्तरि
॥ भूतानाप्रमथादीनांवालग्रहाणां
प्राणिनांवाईशः ॥
भूत्तमम् । न० स्वर्णे ॥ भुविउत्तमम् ॥
भूदरीभवा । स्त्री० आखुकर्ण्याम् ॥
भूदार । पुं० वराहे । सूकरे ॥ भुव
न्दारयति । इ० कर्मण्यण् ॥
भूदेव । पु० ब्राह्मणे । ब्राह्मणोजङ्ग
मामूर्त्तिः श्रीविष्णोः परमात्म-
नः । अतएवहिविख्याताभूदेवा-
स्तेमहारतेः । भुव भुविवादे-
व ॥
भूधन । पु० राज्ञि ॥ कृषीवले ॥
भूधर । पु० पर्वते । महीध्रे ॥ धरति
धृञ् पचाद्यच् । भुवोधरः । य
न्त्रविशेषे ॥ यथा । जलकच्छपपाता
लदोलाभूधरबालुका । वकाद्या
यन्त्रभेदाः स्युरितिशब्दचन्द्रिका ॥
भूधात्री । स्त्री० भूम्यामलक्याम् ॥
भूधात्रीवातकृत्तिक्ताकषायामधु
राहिमा । पिपासाकासपित्तास्रक्
कफकण्डुक्षतापहा ॥
भूध्र । पु० पर्वते ॥ भुवन्धरति । धृ-

ज्ञ० । मूलविभुजादित्वात्क ।

भूनाग । पु० उपरसविशेषे । क्षिति नागे ॥

भूनिम्ब । पु० क्षुपविशेषे । किराततिक्ते । चिरायता० हि० भा० ॥ भुवोनिम्बइव ॥

भूनीप । पु० भूमिकदम्बे । भूकदम्बे । लघुपुष्पे ॥ भिकदम्बा, कटूष्णाश्चवृष्यादोषत्रयहरा हिमा । कषायतिक्ता, पित्तघ्नावीर्यवृद्धिकरा परा: ॥

भूनेता पुं० राज्ञि । भुवोनेतानायकः ॥

भूप : । पुं० राजनि ॥ भुवपाति । पारक्षणे । आतोनुपेतिक । १६ सख्यायाम् ॥

भूपति । पुं० नृपे । राज्ञि ॥ भूभूपत्नीयस्यपत्नीसतुभवतिकथ भूपतौ रामचन्द्र । इतिरामायणे सीतायी वाक्यम् ॥ भुव . पति ॥ ऋषभौषधे ॥

भूपद । पुं० वृक्षे ॥ भुविपदानियस्य॥

भूपदी । स्त्री० मल्लिकायाम् । बेलो० हि० भा० ॥ भुविपदमस्याः । गौरादि ॥

भूपलाश । पु० वृक्षविशेषे । बिशाली हि० गौ० दे० भा० ॥ भुव पलाश ॥

भूपाटला । स्त्री० भूपाटल्याम् ॥

भूपाटली । स्त्री० भूकुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुव पाटली ॥

भूपाल । पुं० राज्ञि ॥ भुवपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्य पालयतेनित्य सत्यधर्मपरायण । निर्जित्यपरसैन्यानिक्षितिधर्मणपालयेत् ॥

भूपुत्री । स्त्री० सीतायाम् ॥ भुव पुत्री ॥

भूपेष्ट । पु० राजादन्यौवृक्षे ॥

भूबदरी । स्त्री० लघुबदर्याम् । क्षितिबदर्याम् । झड़बेरी० हि० भा० ॥

भूभर्त्ता । पुं० नृपे ॥ भुवोभर्त्ता । पत्यर्थभर्तृशब्दस्ययाजकादित्वात्० याजकादिभिश्चेतिसमास । तेन० षष्ठीपूरणाव्यय । भर्त्र्षष्ठ्यानेतिवत् । तृजकाभ्याकर्त्तरीति० नसमासनिषेध ॥

भूभुक् । पु० राज्ञि ॥ भुवभुनक्तिपालयति । भुज० । क्विप् ॥

भूभृत् । पु० महीधरे । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवविभर्ति । डुभृञ् । क्विप् तुक् ॥

भूमा । पु० बहुत्वे ॥ भूमामहान्निरतिशयवस्त्विति पर्याय । इतिभाष्यम् । सकलसांसारिकव्यवहाराभाराभावोपलक्षितेतत्त्वे । ब्रह्मणि ॥ यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमा । यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानातितदल्पम् ॥ नान्यत्पश्यतियस्मिन्वैसभूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृत प्रोक्त सुखनाल्पे विचारय ॥ बहोर्भाव । पृथ्वादित्वादिमनिच् ।

। वक्रोर्लोमोभूत्ववह्नो ॥ त्रि० बहु त्वविशिष्टे ॥

भूमय त्रि० मृदात्मके । भूमिमये

भूमयी । स्त्री० सूर्यपत्नयाम् ॥ छाया याम् ॥

भूमि । स्त्री० स्थानमात्रे वसुन्धरायाम् । क्षितौ । अचलायाम् । रसायाम् । स्थिरायाम् ॥ विष्णुर्भूमिसम्पूज्योवाच । सर्वाधाराभवशुभेस र्वै सम्पूजितासुखम् । मुनिभि र्मनुभिर्देवै सिद्धैस्दानवादिभि ॥ अम्बुवाचीत्यागदिनेगृहारम्भेप्रवेशने । वापीतडागारम्भे चगृहेचकृषि कर्मणि । तवपूजाकरिष्यन्तिमद्वरेण सुरादय । मूढायेनकरिष्यन्तिया स्यन्तिनरकचते । इति ॥ अम्बुवाचीत्यागदिनेगृहारम्भेप्रवेशने । तस्मिन्नदिनेतवपूजाकरिष्यन्तीत्यन्वय ॥ अष्टा गुणामहाभारते मोक्षधर्मे यथा । भूमेस्थैर्यङ्गुरुत्वञ्चकाठिन्य प्रसवार्थता । गन्धोगुरुत्व शक्तिश्चस ङ्घात स्थापनाधृति ॥ इति ॥ अस्यार्थ । स्थैर्यमचाञ्चल्यम् १ । गुरुत्व पतनप्रतियोगीगुण २ । काठिन्यम् ३ । प्रसवार्थता० धान्यादुत्पत्तिस्तदर्थता ४ । गन्ध ५ । गुरुत्त्व पिण्डपुष्टि ६ । शक्ति गन्धग्रहणसामर्थ्यम् ७ सङ्घात ० श्लिष्टावयवत्त्वम् ८ । स्थापना०मनुष्याद्याश्रयत्वम् ९ । धृति पाञ्च भौतिकेमनसियोधृत्यश १० । इति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति भूमिद । उच्छेत्ताचानुमन्ताचता वन्तिनरकवसेत् ॥ योगिनामवस्था विशेषे ॥ यथा । निरुद्धे चेतसिपुरा सविकल्पसमाधिना । निर्विकल्पसमाधिस्तुभवेदत्रत्रिभूमिक ॥ व्युत्तिष्ठतेस्ततस्त्वाद्ये द्वितीयेपरबोधित । अन्ते व्युत्तिष्ठतेनैवसदाभवतितन्मय ॥ एवप्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये । विधेयाभगवद्भक्तिस्तांबिनासानसिध्यति ॥ भवन्त्यस्याभूतानि । भूसत्तायाम् । भुव किदिति० मि ॥

भूमिकदम्ब । पु० कदम्बविशेषे । भूनीपे । भूमिजे । लघुपत्रे । वृत्तपुष्पे । विषघ्ने ॥

भूमिकन्दली । स्त्री० कन्दल्याम् । द्रोणपर्ण्याम् ॥

भूमिका । स्त्री० रचनायाम् ॥ वेशान्तरपरिग्रहे । रूपान्तरस्वीकारे यथा । हहेमचन्द्र । पाचाणिनाद्येऽधिकृतासत्तद्दे शास्त्रभूमिका । इति ॥ ज्ञानिनामवस्थाविशेषे ॥ यथाहु । ज्ञानभूमि शुभेच्छाख्याप्रथमासमुदाहृता । विचारणा द्वितीयास्यात् तृतीयातनुमानसा । सत्त्वापत्तिश्चतुर्थीस्या ततोऽससक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगास्मृतेति भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकाचितयत्रब्रह्मविद्यासाधनमेव० नतुब्रह्मवित्त्वाकोटावन्तर्भाव ० भेदसत्वत्वेर्ब्रह्मत्वात् । यश्चतुर्थभूमिकांप्राप्त सब्रह्मविदित्युच्यते। पञ्चमभूमिर्निर्विकल्पातद्दातस्या स्वयमेवव्युत्तिष्ठति० सोयब्रह्मविद्वर षष्ठभूमौपार्श्वस्थबोधितो व्युत्तिष्ठति० सोयब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानि योगशास्त्राणिसप्तभूमिकाप्राप्तं योगिन्यं वपथ्यं वदन्ति० सोयमीदृशो योगीव्युत्थानरहितोनिर्विकल्पकसमाधिस्थ परमहंस सप्तमभूमौब्रह्मविद्वरिष्ठइतिचोच्यते॥ इति ॥ भूमिकापञ्चकमप्याहु । यथा। क्षिप्त मूढंविक्षिप्तमेकाग्र निरुद्धमिति ॥ तत्र० आसुरसम्पल्लोकशास्त्रदेहवासनानुवर्त्तमानचित्त क्षिप्तभूमिकानिन्द्रातन्द्रादियस्त चित्त मूढभूमिका कदाचिद्ध्यानयुक्त चित्त क्षिप्ताद्विशिष्टतयाविक्षिप्तभूमिका । तत्रक्षिप्तमूढयो समाधिस्वरूपं वनास्ति० विक्षिप्ते तुसमाधिस्वरूपतदितरत्भूमिकाद्वयसमाधि ॥ एकाग्रे मनसिसद्भूतमर्थंप्रद्योतयति० क्लेशाक्षपयति० कर्मबन्धनानिश्लथयति० निरोधमभिमुखीकरोति० इतिसम्प्रज्ञातो योग एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधि ० निरुद्धभूमिकेति ॥

भूमिकूष्माण्डी । स्त्री० लताविशेषे । विदार्याम् ॥

भूमिखर्जूरिका । स्त्री० क्षुद्रखर्जूर्याम् ॥ भूमिखर्जूरिकास्वाद्वीदुरारोहाच्च दुष्करा । अथस्कन्धफलाकाककर्कटौलादुमस्तका ॥ पिण्डखर्जूरिकास्तन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्जूरी । स्त्री० भूमिखर्जूरिकायाम् ॥

भूमिगृहम् । न० वहय,तनाद्गृहे ॥

भूमिचम्पक । पु० पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिवर्ज्ये । द्रुघणे भुँइचाँपा० इ० भा०॥ भूचम्पा० इ० भा० ॥ अस्यमूलव्रणपाककारकम् ॥

भूमिच्छत्रम । न० शिलीन्ध्रे ॥

भूमिज । पु० नरकासुरे । मङ्गारके । कुजे । भौमे । भूमिकदम्बे । मनुष्ये ॥ न० गौरसुवर्णे ॥ भूमेर्भूमौवाजात । अनी० । ड ॥

भूमिजगुग्गुलुः । स्त्री० भागापुरसम्भवे । दैत्यमेदजे । मधिवासुर सम्भवे । भागापुरीगूगुल० इ० भा ॥

तिक्तोसौकटुरुष्णश्च कफवातहरस्तथा। उमाप्रियश्चभूतघ्नोमेध्य सौरभ्यदायकः ॥

भूमिजम्बु । स्त्री॰ भूमिजम्बुकायाम्। नादेय्याम्॥ भूमेर्जम्बु ॥

भूमिजम्बुका । स्त्री॰ क्षुद्रजम्ब्वाम्। नादेय्याम्॥ ह्रस्वत्वात्स्वार्थेकन्॥ यद्वा भूमिलग्नाजम्बुका। शाकपार्थिवादि । भूमिलग्नपत्रत्वात्॥

भूमिजम्बू । स्त्री॰ क्षुद्रजम्ब्वाम्। ह्रस्वफलायाम्। भ्रमरेष्टायाम्। पिकभक्ष्यायाम्। काष्ठजम्ब्वाम्॥

भूमिजा । स्त्री॰ जनकात्मजायाम। सीतादेव्याम्॥ भूमेर्जाता। जनी॰। ड। टाप्॥

भूमिजीवी । स्त्री॰ विशि॥

भूमिदानम् । न॰ दानोत्तमे॥ यथा। इक्षुभि सन्तताभूमियवगोधूमशालिनीम्। ददातिवेदविदुषेसनभूयोभिजायते॥ भूमिदानात्परदान नभूतनभविष्यतीति॥

भूमिदेव । पु॰ ब्राह्मणे। भूदेवे॥ भूमेर्भूमौवादेव ॥

भूमिप । पु॰ राजनि॥

भूमिपक्ष । पु॰ वाताश्वे॥

भूमिपिशाच । पुं॰ तालवृक्षे॥

भूमिपिशाची । स्त्री॰ माधवीलतायाम्॥

भूमिपुत्र । पु॰ चारे। मङ्गले॥ भूमेःपुत्र

भूमिमण्ड । पु॰ अष्टपादिकायाम्। मदनमाली॰ हारमाली॰ इ॰ गौ॰ दे॰ भा॰॥

भूमिमण्डपभूषणा। स्त्री॰ माधवीलतायाम्। अतिमुक्ते। पुण्ड्के॥

भूमिमान्। त्रि॰ भूमिविशिष्टे। यवादित्वाद्वत्व न॥

भूमिरक्षक । पु॰ वाताश्वे॥

भूमिलाभ । पु॰ मृत्यौ॥ भूमेर्लाभोयेन॥ भूमिप्राप्तौ॥

भूमिलेपनम्। न॰ गोमये॥ भूमेर्लेपनंयेन॥ भूमेर्लेपे॥

भूमिवर्द्धन । पु॰ न॰ शवे।

भूमिसम्भवा। स्त्री॰ सीतायाम्॥

भूमिसुत । पु॰ मङ्गलग्रहे। नरकासुरे। भूमे सुत ।

भूमिसुता । स्त्री॰ जानक्याम्॥

भूमिस्पृक्। पुं॰ मानवे॥ वैश्ये॥ चौरविशेषे॥ अन्धे॥ खञ्जे॥ भूमिंस्पृशति। स्पृशस्पर्शने। स्पृशोऽनुदकेक्विन्॥

भूमी। स्त्री॰ भूमौ। क्षितौ॥ भवति। भू॰ भुव किदितिमि॰। कृदिकारादक्तिनइति॰ङीष्।

भूमीन्द्र । पु॰ नृपे। राजनि॥

भूमिरुह । पु॰ वृक्षे॥ यथा। दीर्घास्तापयुताय्यथाविरहिणीश्वासास्तथावासरायामिन्यश्चपलाय्यथाकुलवधू

दृष्टि सरोषाप्रिये । छायावाञ्छा तमानवोढवनितावाग्मीवभूमीरुहा निष्यन्दा मुचिरायायामिलितयो र्यूनोर्मिथोदृष्टय ॥

भूमीसह । पु० द्रुमान्तरे । हारद्रा तौ ॥ भूमीसहस्तुशिशिरोरक्तपित्त प्रसादन ॥

भूम्यामलकी । स्त्री० क्षुपविशेषे । वहु पुष्पायाम् । अडायाम् । अध्यण्डाया म् । तामलक्याम् । भूँइआमला बू० भा० ॥

भूम्यामली । स्त्री० तमाल्याम् चा रुयाम् । भूम्यामलक्याम् । भुइआ मलाइ०गौ०दे०भा० ॥ भरुमेली० बू० भा० ॥

भूम्याहुल्यम् । न० कुष्ठकेतौ । क्षुपे । मार्कण्डीये । महौषधे । भुजित खड० । बू० भा० ॥

भूय । अ० अधिकारे ॥ पुनरर्थे ॥

भूयान् । त्रि० वहुतरे । प्रचुरे ॥ अ- परिमितमहिमनि ॥ अयमनयोर तिशयेनवहु । द्विवचनविभज्योप पदेतरवीयसुनाविति०ईयसुन् । ब होर्लोपोभूचवहो ॥ स्त्री० भूयसी अतिमहत्याम् ॥ ङीप् ॥

भूयिष्ठ । त्रि० प्रचुरे । वहुतमे ॥ अ यमेषामतिशयेनवहु । अतिशायने इष्ठन् । इष्ठस्यपिट्चेति० वहो पर स्य इष्ठस्यलोप ।० यिडागमश्च०वहो

स्थानेभूरादेशश्च ॥

भूयुक्ता । स्त्री० भूमिखर्ज्जूर्याम् ॥

भूयोभूय । अ० वारंवारमर्थे ॥ यथा । भू योभूयोभाविनोभूमिपालान्नत्वान त्वायाचतेरामचन्द्र । सामान्योयं धर्म्मसेतुर्नृपाणां कालेकालेपालनी योभवद्भिरिति ॥

भू' । अ० रेफान्तमव्ययम् । भूर्लोके ।

भूरि । पु० वासुदेवे । हरे ॥ परमे ष्ठिनि ॥ न० सुवर्णे ॥ त्रि० प्राज्ये । प्रचुरे ॥ भवति० भूयतेवा । भुस त्तायाम्० प्राप्तौवा । अदिसदिभूशु भिभ्य क्रिन ॥

भूरिगन्धा । स्त्री० पुरामामनिगन्धद्र- व्ये । गन्धाढ्यायां ॥

भूरिगम' । पु० खरे । गर्दभे ॥

भूरिदावा । पु० वाहुदातरि ॥

भूरिपत्र । पु० उखवालतृणे ॥

भूरिफलितदा । स्त्री० पाण्डुरफल्या म् ॥

भूरिपुष्पा । स्त्री० शतपुष्पायाम् ॥

भूरिप्रेमा । पुं० चक्रवाके ॥

भूरिफेना । स्त्री० सप्तलायाम् । च र्म्मकषौषधौ ॥ भूरय फेनाय- स्या ॥

भूरिवला । स्त्री० अतिवलायाम् ॥ भूरिवलसामर्थ्यं यस्याम् ॥

भूरिभाग । त्रि० महद्भाग्ये ॥

भूरिमल्ली । स्त्री० अम्बष्ठायाम् ॥

भूरिमाय । पु० शृगाले ॥ भूरयो मायायस्य ॥

भूरिरस । पु० इक्षौ ॥ ॥

भूरिश । अ० बहुशब्दस्यार्थे । बह्वर्था च्छस्कारकादन्यतरस्याम् ॥

भूरिश्रवा । पु० चन्द्रवंशीयसोमदत्त पुत्रे ॥ त्रि० बहुयशोविशिष्टे। भूरिप्रचुरश्रवोयशोयस्य ॥

भूरुण्डी । स्त्री० श्रीहस्तिन्याम् । हस्तिकर्णपत्रायाम् ॥ शाकविशेषइतिस्वामी । भुवरुण्डयति० आच्छादयति । कुटिलुटिस्त्येकरणे० इत्यच० माधवीयायावृत्तौ० कडिलुडीत्यपरे० इतिपाठान्तरमुपन्यस्तम । कर्मण्यण् ॥

भूरुट् । त्रि० भूरुहे ॥ भुविरोहयति । रुहजन्मनिप्रादुर्भावे । क्विप् ॥

भूरुह । पु० वृक्षे ॥ रोहति । रुह- ०। इगुपधेतिक । भुविरुह स- प्तमीसमास ॥

भूर्ज । पु० मृदुत्वचि । भूतघ्ने । रक्षापत्रे । भोजनपत्र इतिभाषा भूर्जोभूतघ्नस्त्वकर्णरुक्पित्तरक्तजित् । कषायोराक्षसघ्नश्चमेदोविषहर पर ॥ अर्जनमूर्ज ऊर्जबलप्राणनयो । घञ् । भूअर्जोऽस्य ॥

भूर्जकण्टक । पुं० सङ्करजात्यन्तरे । ब्राह्यांब्राह्मणात्सवर्णायामुत्पन्ने । आवन्त्ये ॥

भूर्जपत्र । पु० ) स्वनामप्रसि-

भूर्जपत्रक । पु० ) द्धे । मृदुत्वचि ॥

भूमि । स्त्री० भूमौ । पृथिव्याम । मरुभूमौ ॥ विभक्ति । डुभृञ्० । घृणिपृश्निपार्ष्णिचूर्णिभूर्णीति० विभर्त्तेरुत्व निप्रत्ययश्च ॥

भूर्लोक । पु० अन्तरीक्षादधोलोके। सप्तद्वीपसमुद्रसन्निवेशविशिष्टे ॥ पृथिव्याम् । मर्त्यलोके ॥ अस्यलक्षणं । यथा । पादगम्यश्चयत्किञ्चित् वस्त्वस्तिपृथिवीमयम् । सभूर्लोक समाख्यातोविस्तारोस्यमयोदित ॥ इ० वि० पु० २ अंश ५ अध्याय । विस्तारोमयोदितइति। सर्वतो लोकालोकावधि पञ्चविंशतिकोटि प्रमाण ॥ भू सच्चकोलोक ॥

भूलग्ना । स्त्री० शङ्खपुष्प्याम् ॥

भूलता । स्त्री० किञ्चुलुके ॥

भूवायु । पु० आवहाभिधेयपवने। भूमेर्वहिर्द्वादशयोजनान्यस्यस्थानमत्र।अम्बुदविद्युदादयश्चरन्तीतिशिरोमणि ॥

भूशय । पु० नकुलगोधादौ ॥ विष्णौ ॥ लङ्काप्रतिमार्गान्वेषणकुर्वन् समुद्र प्रतिव्रताचरणायतदुपकण्ठे भूमौशितेदाशरथिरूपेणेतिभूशय । अधिकरणेशेतेरित्यच्प्रत्यय ॥ तथाचरामायणम् । तत , सागरवेलायादर्भानास्तीर्यराघव , । अञ्ज-

लिप्राङ्मुख कृत्वाप्रतिशिष्यं महीद्यैरिति ॥

भूशैलु । पु॰ भूकर्बुदारे ॥

भूषणम् । न॰ अलङ्कारे ॥ तद्धारणफलं यथा भूषणभूषयेदङ्गं यथाभोग्यविधानतः । शुचिसौभाग्यसन्तोषदायकं काञ्चनस्मृतम् ॥ ग्रहदृष्टिहरंपुष्टिकरदुःखप्रणाशनम् । पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥ माणिक्यं तरणेः सुजात्यममलंमुक्ताफलंशीतगोर्माहेयस्यचविद्रुमोनिगदितः सौम्यस्यगारुत्मतम् । देवेज्यस्यचपुष्परागमसुराचार्यस्यवज्रं शनेर्नीलंनिर्मलमन्ययोश्चगदितेगोमेदवैदूर्य्यके ॥ वासः सुगन्धरत्नानां धारणं प्रीतिवर्द्धनम् । रक्षोघ्नमर्घ्यमोजस्यं सौभाग्यकरमुत्तमम् ॥ भूष्यते ऽनेन । भूषअलङ्कारे । ल्युट् ॥ भूषयतिवा । क्रुधमण्डार्थेभ्यश्चेतिभूषेर्युच् ॥ यत्नोमांभूषणंभ्रान्तसन्तोषोहिहिजन्मनाम् । उच्यमशब्दश्चन्नभूषणंभूतिमिच्छतामिति पारिभाषिकम् ॥

भूषा । स्त्री॰ अलङ्क्रियायाम् । अलङ्कारसाध्यशोभायाम् ॥ भूषणम् । गुरोश्चहलदृत्य : ॥

भूषित । त्रि॰ अलङ्कृते । मण्डिते ॥ भूष्यतेस्म । भूष॰ । क्तः । इट् ॥ भूमावुषिते ॥ भुविउषित स्थित

भूषिता । स्त्री॰ अलङ्कारैरलङ्कृतायाम् । मण्डितायाम् ॥ टाप् ॥

भूष्णु । त्रि॰ भविष्णौ । भवनशील । भू॰ । ग्लाजिस्थश्चग्स्नुः । चाद्भुवः । क्ङितिचेत्यत्रगकारप्रश्लेषाद्गुणाभावः ॥

भूसुत । पु॰ भौमे । मङ्गलग्रहे ॥ नरकासुरे ॥

भूसुता । स्त्री॰ सीतायाम् । जानक्याम् ॥

भूसुर । पु॰ ब्राह्मणे ॥

भूस्तृणम् । न॰ भूतृणे ॥ अस्यपर्यायागुणाश्चयथा । गुह्यबीजश्चभूतीकसुगन्धगोमयप्रियम् । भूस्तृणन्तुभवेच्छत्रामालातृणकमित्यपि ॥ भूस्तृणकटुकंतिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहिदीपनंरूक्षमनेल्यमुखशोधनम् ॥ अवृष्यं बहुविट्कञ्चपित्तरक्तप्रदूषणम् ॥ इति ॥ भुवस्तृणम् । पारस्करादित्वात्सुट् ॥ मालवदेशप्रसिद्धे शाकविशेषे ॥

भूस्पृक् । पुं॰ मर्त्ये । पञ्चजने । मनुष्ये ॥ भुवस्पृशति । स्पृश॰ । क्विन् ।

भूस्वर्ग । पुं॰ सुरपर्वते । सुमेरौ ॥

भूस्वामी । पु॰ भूपतौ ॥ भुवः स्वामी ॥

भृकुंस : । पुं॰ स्त्रीवेशधरनर्त्तके । भ्रकुंसे ॥ पटपुटे तिदण्डकोक्तभाषणार्थंकुसिधातोर्मृगय्वादित्वात्॰

एरच । भ्रुवाकुसोभाषणमस्य । पृषोदरादि ॥
भ्रकुटि । स्त्री॰ भ्रुकुट्याम् । क्रोधादिनाभ्रुव कौटिल्ये ॥ कुटकौटिल्ये । इगुपधात्किदिति॰ इन् । भ्रुवो कुटि । पृषोदरादित्वातऋकार ॥
भ्रकुटी । स्त्री॰ भ्रुकौटिल्ये । क्रोधादिनाललाटसङ्कोचने ॥ कुट॰ । इगुपधादिति॰ इन् । कृदिकारादितिङीष् । पृषोदरादित्वाद् ऋकार ॥
भृगु । पु॰ ब्रह्मणस्त्वचोजाते महर्षिविशेषे । महर्षीणाम्भृगुरहमितिभगवद्वचनाद्भगवद्विभूतौ । मनुपुत्रे ॥ वरुणसनये ॥ अग्नेर्भ्रष्टाद्रेतसउत्पन्नत्वात्भृगु ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतने ऽवलम्बनक्रियाविशेषोनास्ति । तत्पर्यायौ । प्रपात । अतट । इति ॥ भृज्जति॰ तपसा॰ भृज्यतेवा । भ्रस्ज पाके । प्रथिम्रदिभ्रस्जासम्प्रसारणं सलोपश्चेति॰ भ्रस्जे कुप्रत्यय ॰ सम्प्रसारणं भ्रस्जे सलोपश्च न्यङ्क्वादित्वात्कुत्वम् ।
भृगुकच्छ । पुं॰ शककारकवलेजन्मस्थानपत्तनविशेषे ॥
भृगुतुङ्गम् । न॰ तीर्थविशेषे ॥
भृगुपति । पुं॰ परशुरामे ॥
भृगुप्रस्रवण । पु॰ हिमवत पादे ॥
भृगुभवा । स्त्री॰ भार्ग्याम् ॥
भृगुषट्क । पु॰ योगविशेषे ॥ लग्नात्षष्ठेभवेच्छुक्रोभृगुषट्क इतीरित
भृगुसुत । पु॰ शुक्रग्रहे ॥
भृगूणापति । पु॰ परशुरामे ॥
भृङ्ग । पु॰ भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा॰ इ॰ गौ॰ दे॰ भा॰ भृङ्गइवकृष्णत्वात्॰ भृङ्ग ॥ षिङ्गे ॥ न॰ गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्तिं । डुभृञ्॰ । भृञ्‌ किन्नुट्चेति॰गन् ॥
भृङ्गक । पु॰ राजवासनपक्षिणि ॥
भृङ्गजम् । न॰ अगुरुणि ॥
भृङ्गजा । स्त्री॰ भार्ग्याम् ॥
भृङ्गपर्णिका । स्त्री॰ सूक्ष्मैलायाम् ॥
भृङ्गप्रिया । स्त्री॰ वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणाप्रियेव ॥
भृङ्गमूलिका । स्त्री॰ भ्रमरच्छल्याम् लतायाम् ॥
भृङ्गरज । पु॰ भृङ्गराजे ॥ भृङ्गइव

रजोऽस्य ॥

भृङ्गरजा । पु० भृङ्गराजे ॥ भृङ्ग द्रुवरजोस्य ॥

भृङ्गराज । पु० मार्कवे । कुन्तल वर्द्धने । केशरञ्जने । भ गरा०इ० भा० ॥ भृङ्गराज कटुस्तिक्तो रूक्षोष्ण कफवातनुत् । केश्यस् त्वच्य ' क्रमिश्वासकासशोथामपा गड्नुत् ॥ दन्त्योरसायनोबल्य कुष्ठनेत्रशिरोर्त्तिजित् ॥ पक्षिप क्षिविशेषे ॥ भ्रमरे ॥ वृक्षविशेषे ॥ भृङ्गद्रुवराजते । राजृदीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न० भैषज्यर त्नावल्युक्ते चूर्णविशेषे ॥ यथा । अच्योक्तन भृङ्गराजस्यचूर्णं ति लार्द्धका चामलकार्द्धका च । सशर्क र भक्षयते गुडेर्वानतस्यरोगोनजरा नमृत्यु ॥ अध पश्येद्गमनरहि तोमत्तमातङ्गगामीमूकीवाग्मी श्रवण रहितोदूरशब्दानुसारी । नी रुग्मर्त्योभवतिपलितोनीलजीमूत केशोजीर्णादन्ता . पुनरपिनवा स्त्री रगौराभवन्तीति ॥

भृङ्गरिट । पुं०
भृङ्गरिटि । पु० } शिवद्वारपाले ॥
भृङ्गरीट पु०

भृङ्गरील ' । पु० कीटान्तरे । विषस्त्र क्षायाम् । वरोले । हृष्पट्पदे । भीमरुल् इ० गी० भा० ॥

भृङ्गवल्लभ । पु० भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री० भूमिजम्ब्वाम् ॥

भृङ्गसोदर । पु० केशराजे । नाग मारे ॥

भृङ्गानन्दा । स्त्री० यूथिकायाम् ॥

भृङ्गाभीष्ट । पुं० आम्रवृक्षे । रसा- ले ॥ न० आम्रमुकुलफलयो ॥

भृङ्गार । पु० कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराज । मार्कवे ॥ बिभर्त्तिजलम् । डुभृ- ञ० । शृङ्गारभृङ्गाराविति सा धु ॥ न०लवङ्गे ॥ काञ्चने ।

भृङ्गारि । स्त्री० केतकीपुष्पे ॥

भृङ्गारिका । स्त्री० झिल्लिकायाम् ॥

भृङ्गारी । स्त्री० झिल्लिकायाम् । झीं गुरइतिख्याते कीटे । भृङ्गभृङ्ग पमाराति । रादाने । मूलविभुजा दित्वात्क । गौरादि । यद्वा । बिभर्त्ति । डुभृञ्० । शृङ्गारभृङ्गा राविति० भृञ्धारन्०नुम्०गुक्०- ङ्लश्च ॥ यद्वा । रूपेणभृङ्गमृच्छ- ति । ऋगतौ । कर्मण्यण् ॥

भृङ्गाह । पु० जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री० भ्रमरच्छल्याम् ॥

भृङ्गि । पुं० भृङ्गिणि । शिवद्वा स्थे ॥

भृङ्गिणी । स्त्री० वटीवृक्षे ॥

भृङ्गी । पुं० शिवद्वारपालविशेषे । अ स्थिविग्रहे । नाडीदेहे ॥ वटद्री ॥

भृङ्गी । स्त्री॰ अतिविषायाम् ॥ गौरादित्वान्ङीष् ॥

भृङ्गीफल । पु॰ आम्रातकवृक्षे ॥

भृङ्गीश । पु॰ महादेवे । शिवे ॥

भृङ्गेरिटि । पु॰ भृङ्गरीटे । भृङ्गिणि ॥

भृङ्गेष्टा । स्त्री॰ काकजम्बाम् ॥ घृतकुमार्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन । पु॰ न॰ अम्बरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भृस्जपाके । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

भृत । त्रि॰ भरिते । धारिते ॥ वेतनेनक्रीते ॥ भृञ् ॰ । क्त ॥ भरणीये ॥ पुष्टे ॥

भृतक । पु॰ वेतनग्राहिकर्मकर्त्तरि । भृतिभुजि । कर्मकरे । वैतनिके ॥ सचत्रिविध । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल । अधमोभारवाहीस्यादित्येवत्रिविधो भृत ॥ इति ॥ भ्रियतेस्म । भृञ् भरणे । क्त । स्वार्थेक ॥ यद्वा । भृतिकरोति । तत्करोतीतिणिजन्ताक्वुन् ॥

भृतकाध्यापक । पु॰ अपाङ्क्तेये॰-द्विजाधमे ॥ भृतक सन्योऽध्यापक ॥ अयञ्चसर्वानर्थकृत्त्वात् ॥

भृतकाध्यापित । पु॰ वेतन दत्त्वापाठिते । अपाङ्क्तेयेद्विजाधमे ॥ भृतिर्वेतनम् । तद्ग्राहीभृतक । भृतक सन्योध्यापित सतथा ॥

भृति । स्त्री॰ भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्तेकर्मकराअनया । भृञ् भरणे । कर्मणिक्तिन्निति निर्देशात्क्तिन् ॥

भृतिभुक् । त्रि॰ भृतके । वैतनिके ॥ भृति वेतन भुङ्क्ते । भुज॰ । क्विप् ॥

भृत्य । पु॰ किङ्करे । दासे ॥ भृत्याबहुविधाज्ञेयाउत्तमाधममध्यमा । नियोक्तव्यायथार्थेषुत्रिविधेष्वेवकर्मसु । भ्रियते । भृञ् ॰ । भृञोऽसञ्ज्ञायामितिक्यप् ॥ त्रि॰पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री॰ भृतौ । वेतने ॥ भ्रियन्तेकर्मकराअनया॰ भरणवा । भृञ्॰ । सञ्ज्ञायासमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरितिरघु ॥

भृमि । पु॰ वायुविशेषे । घुरन्वायु॰ इ॰ भाषा ॥ जलादिभ्रमणे ॥ भ्रमति॰ भ्राम्यतिवा । भ्रमुअनवस्थाने॰ भ्रमुचलनेवा । भ्रमे सम्प्रसारणञ्चेति॰ इन्॰ कित् ॥ भृमि भ्रमणशीलदरिद्र जनमितिवेदभाष्यम् ॥

भृशम्। न० अतिशये॥ त्रि० अतिश यान्विते॥ भृशति। भृशुभ्रंशुअध पतने। अन्तर्भावितण्यर्थादिगुपधे तिक॥

भृशम्। अ० प्रकर्षार्थे॥ शोभने॥

भृषत्क्‌। पु० पाषाणे॥

भृष्टः। त्रि० अलोपसिक्तेनविनापक्वे॥ भूना० भुजैना० इ० भा०॥

भृष्टतण्डुल। पु० भर्जनविशिष्टधा न्यनिकरे। भूनाचावल० इ० भा० सुगन्धिः कफकारूक्ष. पित्तलोभृ ष्टतण्डुल॥

भृष्टमासम्। न० शूल्ये॥ भृष्टञ्चत न्मासञ्च॥

भृष्टयव। पु० धानासु। बहुरी०इ० भा०॥ भृष्टश्चासौयवश्च॥

भृष्टान्नम्। न० भृष्टतण्डुले॥

भृष्टि। स्त्री० भर्जने॥ शून्यवाटिका याम्॥

भेक। पुं० मण्डूके। वर्षाभ्वि। मेघे॥ त्रि० भीरौ॥ बिभेति। ञिभी भये। इण्भीकितिकन्॥

भेकट। पुं० मत्स्यवि०॥

भेकभुक्। पुं० कुम्भीनसे। सर्पे॥ भेकानभुङ्क्ते। भुज०। क्विप्॥

भेकरावण। पुं० मेघे॥ भेकान्राव यति। रुशब्दे। नन्द्यादित्वाल्- ल्यु॥

भेकन्न। पुं० वनस्पतिविशेषे॥

भेकलि। पुं० मत्स्यविशेषे। भाकून इ० गौ० दे० भा० प्रसिद्धे॥ भेक लिर्मधुर शीतोहृष्य श्लेष्मकारो- गुरु॥

भेकी। स्त्री० भेकस्त्रियाम्। शिल्याम्। गण्डूपद्याम्। वर्षाभ्व्याम्॥ क्षुद्र मण्डूके॥ जातेरस्त्रीतिङीष्॥ म ण्डूकपर्ण्याम्॥

भेड। पुं० मेषे। भेढा० इ० भा० ॥ इतिहे०॥

भेडी। स्त्री० भेडस्त्रियाम्॥

भेडीदुग्धम्। न० आविके॥

भेत्ता। त्रि० भेदकर्त्तरि॥ भिनत्ति। भिदिर्०। तृच्॥

भेद। पुं० उपजापे। शत्रोरमात्या दीनामुपायेन० परतोविश्लिष्यात्म सात्करणे। ऐकमत्येनस्थितानांरा जामात्यादीनांभयजननादिनापृथक्क रणे॥ तद्विशेषायथा। मत्स्थवा च। परस्परन्तुयेदुष्टा क्रुद्धाभीता वमानिता। तेषांभेदंप्रयुञ्जीतभेद साध्याहितेमता.॥ येतुयेनैवदोषे णपरस्मान्नापराध्यति। तेतुतद्दोष पातेनभेदनीयाभृशंततः॥ आत्मी यंदर्शयेद्दोषंपरस्माद्दर्शयेद्भयम्। एव मिदर्शयेदिन्न यथावद्वशमानयेत्॥ संहताहिविनाभेदंशक्रेणापिसुदुःस हाः। भेदमेवप्रशंसन्तितस्मान्नयवि शारदाः॥ स्वमुखेनाश्रयेद्यंभेदंपर

मुखेनच। परीक्ष्यसाधुमन्यन्ते भेद परसुखाच्छ्तम् ॥ भेद्या स्वकार्य मुद्दिश्यकुशलैर्येहिभेदिता ।।भेदिता स्ते विनिर्दिष्टाने वराजार्थवादिभि ।। अन्त कोपोवहि कोपोयचस्था तामहीचिताम्। अन्त कोपोम हॉस्तवनाशक पृथिवीचिताम् ।। सामन्तकोपोवाह्यस्तुकोप प्रोक्तो मनीषिभि । महिषीयुवराजाभ्या तथासेनापतिर्द्दिज । अमात्याम न्त्रिणश्चैवराजपुत्रास्तथैवच। अन्त कोपोविनिर्द्दिष्टोदारुण पृथिवी चिताम् ॥ बाह्यकोपेसमुत्पन्नेसुम हत्यपिप्रार्थिव. । शुद्धान्तस्तुमहा भागशीघ्रमेवजयीभवेत् ॥ अपिश क्रसमोराजाचन्त कोपेननश्यति । अन्त कोपेसमुत्पन्ने तस्माद्रक्ष्य स्महीचिताम् ॥ परत कोपमुत्पा द्यभेदेनविजिगीषुणा। ज्ञातीना भेदन कार्यं परेषाविजिगीषुणा ॥ रक्ष्यश्चैवप्रयत्नेनज्ञातिभेदस्तथा त्मन । ज्ञातय. परितप्यन्ते सत त परितप्ययम् ॥ तथापिते षाकर्त व्य सुग भीरेणचेतसा। ग्रहण दान मानाभ्याभेदस्तेभ्योभयकार ॥ नज्ञातिरनुगृह्णातिनज्ञातिर्दग्धु मिच्छति। ज्ञातिभिर्भेदनीयास्तु रिपवस्तेनपार्थिवे ॥ भिन्नाहि शक्याग्पिव प्रभूता स्वल्पेन

सैन्येननिहन्तुमाजौ। सुसहता नाहितस्तुभेद कार्य रिपूणानय शास्त्रविद्भि. ॥ इतिमात्स्येराज धर्मे १८७ अध्याय ॥ द्वैधे ॥ आपद्यात्मीयानात्मीययोर्भेद ॥ विशेषे ॥ विदारणे ॥ मन्त्रभेदे कार्यहानिरितिविदामतम् ॥ वधे ॥ भिद्यमानभावे॥ भेदनम्। भिदिर्० घञ् ॥ त्रिरेके ॥

भेदकम्। न० व्यावर्त्तके। विशेषणे ॥ त्रि० नाशके ॥ विदारणे ॥ विरेचकौषधादौ ॥ पृथक्कारके ॥ यथा। भेदयति० अन्यपदार्थं पृथक्करोतीतिभेदकम्। नाना। शिव गोत्रेणगार्ग्य । अपिच। भेद्यभेदकयो श्लिष्ट सम्बधोन्यो न्यमिष्यते। द्विष्ठायद्यपिसम्बन्ध षष्ठ्युत्पत्तिस्तुभेदकादितिभर्तृह- रि ॥

भेददर्शी। त्रि० अपराधिनि ॥ यथा। यदस्तितन्नजानातियन्नेहा स्तितदीक्षते। दृश्येवमपरावीक्ष्य विद्यतेभेददर्शिन. ॥ किञ्चजाग्र तृस्वप्नयोरविद्याविद्भ्रान्तेरुपलम्भा त्० सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽ नुपलम्भान्मिथ्यात्वत्वभेदस्यसिद्धमि त्यनुभवाचभेददर्शिनोमिथ्याज्ञादि तृत्वात्सापराधत्वमितिनिश्चय. ॥

भेदनम्। न० विदारणे ॥ भिदेल्युट्

ट्॥ हिङ्गुलि॥ पु० अम्लवेतसे। सूकरे।

भेदनिम्न। त्रि० ससारानुगे॥

भेदित। त्रि० दारिते। भिन्ने॥ भेद्यते स्म। भिदिर्०। चुरादि ण्यन्त। क्त॥

भेदी। पु० अम्लवेतसे॥ त्रि० भेदकर्त्तरि। तद्विशिष्टे च॥

भेदुरम्। न० भिदुरे। कुलिशे॥

भेद्य। त्रि० व्यावर्त्त्ये। विशेष्ये॥ अमानितजने॥ भेत्तुशक्ये। विघट्टनीये। वाच्ये॥

भेर। पु० पटहे॥ बिभेत्यस्मात्। ञिभीभये। स्फायितञ्चीत्यादिना रन्॥ भेर्याम्॥ दुन्दुभौ

भेरि। पु० वाद्यप्रभेदे। करणाल०॥ भा०॥ बिभेत्यस्माद्वात्। ञिभी०। वङ्क्र्यादयश्चेति० क्रिन। बाहुलकाद्गुणः॥

भेरी। स्त्री० बृहड्ढक्कायाम्। आनके॥ वाद्यविशेषे। करणालङ्कृतिख्याते॥ कृदिकारादक्तिन इति पक्षे ङीष्॥ बिभेतेर्क्रन्नितिरन्॥ गौरादित्वान्ङीष्० इति तु रामाश्रम॥ वितस्तिचयदीर्घाताम्रनिर्मिता चर्मच्छन्ना चतुर्विंशत्यङ्गुलवदनद्वया भेरीति कश्चित्॥ अन्नस्त्रीकाढक्का भेरीति स्वामी॥

भेरुण्ड। पुं खगे॥ त्रि० भयानके

भेरुण्डा। स्त्री० देवतान्तरे॥ यक्षिणीविशेषे॥

भेल। पु० प्लवे। डोङ्गा० इ० भा प्र० जलतरणसाधने मुनिविशेषे। त्रि०भीरौ अज्ञे। बुद्धिविवर्ज्जिते। मूर्खे॥ बिभेत्यस्मात्। ञिभी। स्फायितञ्चीत्यादिना रन्। निपातनाल्लत्वम्। चञ्चले॥

भेलक। पु० न० उडुपे। प्लवे। स्वल्पे जलतरणसाधने॥ स्वार्थेक॥

भेषजम्। न० औषधे। जायौ॥ भेषयति। भेष्ट्रभये। ण्यन्त। अच्। भेषरोगं जयतीति। जि०। अन्येभ्योपीति ड॥ भेषजायतिदा। जैत्रे। आतोनुपेतिक॥ भिषजइदम्। तस्येदमित्यण्। अनन्तावसथेतिहभेषजादितिनिर्द्देशात्स्वार्थमित्यन्ये॥ ससाररोगस्वसाक्षात्कार एव भेषजमतभेषजनिवर्तकत्वत्वाभिज्ञात्मज्ञानम्॥

भैषज्याङ्गम्। न० अनुपाने॥

भैक्षम्। न० भिक्षाणिकुरम्बे॥ भिक्षाणांसमूहः। भिक्षादिभ्योण्॥ ब्राह्मणक्षत्रियविशामेवैषुभैक्षमन्वहम्। सजातीयगृहेष्वेवसार्ववर्णिकमेववा॥ सर्वं वापिचरेद्ग्रामपूर्वोक्तानामसम्भवे। अन्त्यवर्ज महाभागशास्त्रेष्वित्य विनिश्चय॥ भैक्षे अवतितिनोवृत्तिरुपवासस्समास्मृता।

भैक्षचर्य्या । स्त्री॰ भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री॰ भिक्षयाजीवनोपाये पैण्डिन्ये ॥ इतित्रिकाण्डशेष ॥

भैक्षभुक् । त्रि॰ भैक्षाशिनि ॥ भैक्षभुनक्ति । भुज॰ । कर्त्तरिक्विप् ॥

भैक्षाण । पु॰ परिव्राजि । प्राणसन्धारणार्थंयथाशास्त्र माधूकरादिभिक्षाकुर्वाणे ॥

भैक्षुकम् । न॰ भिक्षुकवृन्दे ॥ भिक्षूणासमूह । खण्डिकादित्वादञ् ॥

भैमी । स्त्री॰ दमयन्त्याम् ॥ भैमतिथौ । माघशुक्लैकादश्याम् ॥ भैमीक्षलप्सिकाप्रभेदे ॥ यथा । श्रेष्ठगोधूमचूर्णंप्रचुरघृतभृतनालिकेरेणसार्द्धंद्राक्षाखर्जूरशुण्ठीत्वचमरिचयुतशर्करापूर्णगर्भम् । पक्वतास्मैक-टाहेटलविटलटलेपावकेमदृदीप्तौधन्यैर्हेमन्तकालेसुजनपरिवृतैर्भुज्य तैलापनश्री । भीमस्येयम् । अण् । ङीप् ॥

भैरव । पु॰ शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्वतइतिप्रसिद्धे ॥ भैरवास्त्रंभैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि॰ भयानके । भीषणे । भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री॰ देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरवरागपत्न्याम् ॥

भैषजम् । न॰ भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् न॰ औषधे ॥ भेषजमेव । अनन्तावसथेतिहभेषजाञ्ञ्य

भो । अ॰ सम्बोधने ।

भोक्तव्य । त्रि॰ भोजनीये ॥ भोज्ये । यथा॰ । यत्नेनभगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥

भोक्ता । पु॰ पत्यौ ॥ शरीरेन्द्रियमनोभि संयुक्तआत्मनि॰संसारिणि । अवस्थात्रयविशिष्टेजीवे ॥ भोक्तैवात्मानकर्त्तेतिसाङ्ख्या ॥ सुखादिभोगकर्त्ता॰ यथा कर्त्ताच देहीभोक्ताचआत्माभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र॰ वै॰ पु॰ वैश्वानरेग्नौ ॥ सर्वेषायज्ञानातपसाञ्चकर्तृरूपेणदेवतारूपेणचभोगकर्त्तरि ॥ आनन्दमये ॥ बुद्धे सुखदु खमोहात्मकान्प्रत्ययान्स्वरूपचैतन्येनप्रकाशयतीतिनिर्विकारएवोपलब्धरि ॥ त्रि॰ पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतनेदेवदत्तादौ ॥ तस्य प्रकारोयथा । स्नात सुधौतमृदुसुन्दरशुक्लवासास्तत्कालधौतचरण सहपुत्र मित्रै । स्त्रीप्रसन्नहृदयो रसपाकवेद्याभोक्ताविशेषसततद्विसहाग्रवेद्यो ॥ मृदुतूलमयेस्थूलेचासन

स्वावगुण्ठिते । आसनेप्राङ्मुखो-
भोक्तोपविशेद्वाप्युदङ्मुख ॥ भुङ्-
क्ते । भुज० । तृच् ।

भोग । पुं० सुखे ॥ क्षुद्रसुखलवानु-
भवे ॥ सुखसाधनविषय० पञ्चकर्मणि
रथ्यादौ ॥ नह्यनुत्साहवतामननु
तिष्ठतामलसानांभोगप्राप्तिर्लोकेह-
ष्टेतिपूज्यपादा ॥ सुखादियक्षणे ।
सुखदु . खानुभवे ॥ धने ॥ अहे
शरीरे ॥ अहेरितिप्रयोगबाहुल्याभि
प्रायम्०भोगशब्दस्यशक्तिस्तुशरीरमा
त्रे० कृत्याकर . ॥ अहे . फणायाम्
॥ पालने , अभ्यवहारे . योषिदा
दिभृतौ । वेश्यादिवेतने ॥ आदिना
हस्त्यश्वादिकर्मकराणाभृतौभाडा०-
क०भा० ॥ विषये । राज्ये ॥ भोज
नम०भुज्यतेवा। भुजपालनाभ्यवहा
रयो । भुजोकौटिल्ये वा । भावि
कर्म्मणिवाघञ् ॥ योगिनोजी०म-
हैतीभिक्षाव्यापारे० वर्णाश्रमोचि-
तव्यापारेष ॥ यथा । चित्तस्यभो
गैर्हीभागौशास्त्रैर्वैकप्रपूरयेत् । गु
रुशुश्रूषयाभागमव्युत्पन्नस्यसक्रमः ॥
किञ्चिद्व्युत्पत्तियुक्तस्यभागभोगेन
पूरयेत् । गुरुशुश्रूषयाभागौभागशा
स्त्रार्थचिन्तया । व्युत्पत्तिमनुयात
तस्यपूरयेच्चेतसोन्वहम । द्वौभागौ
शास्त्रवैराग्यैर्द्वौध्यानगुरुपूजयेतिव
सिष्ठ . ॥ भूम्यादीनांभोगो यथा ।
विपुरुषभोगमाहव्यास । प्रपिता
महेनयद्भुक्त तत्पुत्रं चविनाचतम् ।
तौविनायस्यपिवाचतस्यभोगस्त्रि
पौरुष ॥ पितापितामहोयस्यजो
वेच्चप्रपितामह । ययाच्याजीवता
भोगोविज्ञेयस्त्वेकपूरुष ॥ नार
द । तथारूढविवादस्यप्रेतस्यव्यव
हारिण । पुत्रेणसोऽर्थ सशोध्यो
नतभोगोंनिवर्त्तयेत् ॥ विभवभे-
दे ॥ म० । कर्त्ताचदेहीभोक्ताचया
त्माभोजयितासदा । भोगोविभव
भेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम । न० वासगृहे ॥

भोगदेह । पु० स्वर्गनरकादिभोगार्थ
सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डी
करणेनर . संवत्सरात्परम् । प्रेतदे
हपरित्यज्यभोगदेहंप्रपद्यते० स्मृति ।

भोगपाल । पुं० अश्वरक्षके ॥ वि०
भोगरक्षके ।

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि । स्त्री० सुखस्थाने ॥ भा
रतवर्षातिरिक्तवर्षे ॥ यथा । तत्रापि
भारतंश्रेष्ठजम्बुद्वीपेमहामुने । य-
तोहिकर्मभूरेषाततोन्याभोगभूम-
य . ॥

भोगवान् । पुं० नक्षी । सर्पे ॥ भोगो
स्त्यस्य । मतुप् । माव्व । वि०
भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगगायाम् ॥ ङीप् ॥ वासुकितीर्थे ॥

भोगसद्म । न० वासगृहे । भोगायसद्म ॥

भोगार्हम् । न० धने ॥ भोगायअर्हम् ।

भोगार्ह्यम् । न० धान्ये ॥

भोगावली । स्त्री० नागपुर्याम् । बन्दिनासस्तुतौ । बन्दिपाठे ॥

भोगावास । पु० वासगृहे ॥ भोगस्थवास ॥

भोगिक । पु० भोगपाले । अश्वरक्षके ॥

भोगिकान्त । पु० काम्पलक्ष्मणि । वायौ ॥

भोगी । पु० जिह्मगे । भुजङ्गे । सर्पे ॥ भोग फणोवक्रगतिर्वाऽस्यास्ति । अतइनिठनावितीनि ॥ ग्रामपात्रे । ग्रामण्याम् । ग्रामाधिपतौ ॥ नृपे । राज्ञि ॥ नापिते ॥ वैयावृत्तिकरे ॥ त्रि०सर्वैभोगोपकरणैरुपेते ।

भोगिनी । स्त्री० महिषीविहायान्यराजयोषिति ॥ अतिशयितोभोगोस्त्यस्या । इन्नन्तान्नान्तलक्षणोङीप् ॥

भोगिवल्लभम् । न० चन्दने ॥

भोगीन्द्र । पुं० )

भोगीश । पु० ) अनते । नागराजे । शेषे ॥ वासुकौ ॥ भोगिनाम् इन्द्रः ईशोवा ॥

भोग्यम् । न० धने ॥ धान्ये ॥ फले ॥ आधिविशेषे । फलभोग्ये ॥ त्रि०भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्हे । भुजेर्ण्यत् ॥

भोग्या । स्त्री० वेश्यायाम् ॥ भोक्तुमर्हायाम् ॥ टाप् ॥

भोज । पु० यादवे ॥ दूरेऽभवन्भोजवलञ्चगच्छतन्नतिमाघ ॥ देशविशेषे ॥ धारानगरीपतौ०कलिप्रसिद्धे नृपविशेषे ॥ देशविशेषे । भोजकटे ॥

भोजकट । पु० रुक्मिनिर्मितपुरे रुक्मिभोजकट नामपुर कृत्वाऽवसत्तदेतिवि०पु० ॥ देशविशेषे ॥

भोजकटीय । त्रि० भोजकटदेशोद्भवे ॥ वृद्धाच्छ. ॥

भोजनम् । न० आहारे । निघसे । जेमने । जीवन०इ०भा० ॥ बहूनापङ्क्तावशने ॥ भुज्यते । भुज० । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ अथभोजनगुणविधानादियथा । भोजनाग्रे सदापथ्य जिह्वाकण्ठविशोधनम् । अग्निसन्दीपन हृद्य लवणार्द्रकभक्षणम् ॥ आयुर्घृतैगुडे रोगोमृत्युर्लौनोविदाहिषु । आरोग्य कटुतिक्तेषु वलमांसिपयस्सु च ॥ अन्नादष्टगुणा पिष्ट पिष्टादष्टगु

मा पय । पञ्चमोऽष्टगुणं मांस मांसा दष्टगुणं घृतम् ॥ घृतादष्टगुणं त ल मर्द्दनान्नचभक्षणात् । आहार प्रीणन सद्योबलकृद्देहधारणं । फलमादौ दिवाऽश्नीयाद्भोजनस्य नरो त्तम । विनामोचाफलं तद्वज्जर्नीयाचकर्कटी ॥ मृणालविसशालुकाकन्दे क्षु प्रभृतीन्यपि । पूर्वमेवहिभोज्यानितुभुक्त्वाकदाचन ॥ याममध्ये नभोक्तव्यं यामयुगम् न लङ्घयेत् । याममध्ये रसोत्पत्तिर्युग्मेऽतीतेबलक्षय ॥ आयुष्यं प्राङ्मुखोभुङ्क्ते यशस्यं दक्षिणामुख । श्रियं प्रत्यङ्मुखोभुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुख ॥ कुर्यादन्नेनभागौद्वावेकं पानेनपूरयेत् । वायो सञ्चारणार्थंस्तु चतुर्थमवशेषयेत् ॥ दन्तावगतं चान्नं शोधनादपहरेज्जलैः । कुर्यादनिर्गतं त द्धिमुखस्यानिष्टगन्धताम् ॥ भुक्त्वापाणितलंघृष्ट्वाचक्षुषोर्यदिदीयते । अचिरेणैवतद्वारितिमिराणिव्यपोहति ॥ भुक्त्वाचस्यकरंवामदत्त्वाकुक्षौततः पठेत् । भुक्तं मयेन्द्रदत्तेन वैश्वानरमुखेनच ॥ गरुडस्यचकण्ठेनसमुद्रश्चवह्निना । वातापिर्भक्षितोयेनपीतोयेनमहोदधिः ॥ यस्मयाखादितंपीतंतदगस्त्योजरिष्यति । पठित्वैतत्सुखासीनः



क्षणंतिष्ठेदनाकुलः । भुक्त्वापादशतंगत्वावामपार्श्वेनसंविशेत् एवंस्यादीर्घगतंचान्नं सुखंतिष्ठतिजीर्यते ॥ भुक्त्वाप्रविश्यत्सुन्दवनमुत्तानशायिनः । आयुः सरलमुत्तमं मूल्यं धावतिधावत ॥ अपिच । ततोभोजनवेलाया कुर्यान्मङ्गलदर्शनम् । तस्यप्रदक्षिणनित्यमायुर्धर्मविवर्द्धनम् । लोकेऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुताशन । हिरण्यं सर्पिरादित्य आपो राजातथाष्टम ॥ पादुकारोहणंकुर्यात्पूर्वंभोजनतः परम् । पादरोगहरंवृष्यं चक्षुष्यं चायुषे हितम् ॥ अश्नीयात्तन्मनाभुक्त्वापूर्वंतुमधुरंरसम् । मध्ये लवणौ पश्चात्कटुतिक्तकषायकान् ॥ विदाहीन्यन्नपानानि यानिभुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थंभोजनान्ते पयः पिबेत् ॥ एवंभुक्त्वासमाचामन्स्नेहयुक्ता पूर्वकम् । भोजनदन्तलग्नानिनिर्हृत्याचमनंचरेत् ॥ दन्तलग्नमनिर्हार्यंलेपमन्ये तदन्तवत् । नतत्रबहुशः कुर्यात्यत्न निर्हरणंप्रति विस्तरस्वनाय ॥ अथातोऽशीमलभुङ्क्तेभक्ष्यपीयूषशोषितम् । भुक्त्वातुक्रमिभुङ्क्ते अदत्त्वा विड्विभोजनम् ॥ अघसकेवलभुङ्क्ते य पचत्यात्मकारणात् । इन्द्रियप्रीतिजनकं

तथापाकविवर्जयेदितिजावालि ॥ बालसुवासिनीवृद्धगर्भिण्यातुरकन्यका । सम्भोज्यातिथिभृत्यांश्चदम्पत्यो शेषभोजनम् इतियाज्ञवल्क्य ॥ नभोजनार्थंस्वेविप्र कुलगोत्रे निवेदयेत् भोजनार्थंहितेश सन्वान्ताशीत्युच्यतेबुधैरितिमनु ॥
भोजनपात्रम् । पु० आहारभाजने ॥ हैमदोषहरपात्र चत्तुष्य राजतशुचि । कांस्य बुद्धिप्रदरम्य पालाशरुचिकारकम् ॥
भोजपति । पु० कंसासुरे ॥ भोजानान्नचियविशेषाणांपति ॥
भोजपुरम् । न० स्वनामाप्रसिद्धे देशवि० ॥
भोजयिता । त्रि०भोजनकारयितरि ॥ भोगप्रयोजके । पु० ईश्वरे ॥
भोजविद्या । स्त्री० ऐन्द्रजालिकविद्यायाम् ॥
भोजाधिप । पु० कंसासुरे ॥ भोजानामधिप ॥
भोज्यम् । न० भोजनीयद्रव्ये । यत्कंवलजिह्वयाविलोड्यनिगीर्यंते सूपौदनादितस्मिन् । पायसादौ ॥ विषयमात्रे ॥ भुज्यते । भुज० । कर्म्मणीण्यत् । भोज्य भक्ष्ये इतिण्यतिकवर्गाभावोनिपातनात् ॥ आहारादधिकभोज्य ब्रह्माण्डविभवेपिन ॥ अभ्युदयार्थंब्राह्मणभोजने ॥ स्वाराज्यसाम्राज्ययोर्भोगभाक्त्वे ॥ सोमे ॥
भोज्यवित् । पु० सूपकारे॥ सूपकारोहिभोज्यवस्तुत्वेनजानाति ॥
भोज्यसम्भव । पु० शरीरस्थरसधातौ ॥
भोज्या । स्त्री० भोजस्यराज्ञोगोत्रापत्ये स्त्रियि ॥ क्रौड्यादिभ्यश्चेत्यत्रभोजक्षत्रिये० इत्युक्तो ष्यङादेश । ष्यङश्चाप् ॥
भोट । पु० भोटाङ्गे । भोटान्ते ॥
भोटाङ्ग । पु० स्वनामाप्रसिद्धे देशविशे० । भोटान्० इ० भा० प्र०॥
भोटान्त । पु० देशविशेषे ॥ यथा । काश्मीरन्तुसमारभ्यकामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशिमानसेशाद्दक्षिणे ॥
भोभो । अ० सम्बोधने ॥
भोलि । पु० वक्रग्रीवे । उष्ट्रे ॥
भो । अ० सम्बोधने विषादे ॥ प्रश्ने ॥ भाति । भा० । बाहुलकात्० डोस् ॥
भौत । पु० देवले॥ भूतयज्ञे ॥ न० भूतसङ्घे ॥ भूतानासमूह । भिक्षादाद्यण् ॥ त्रि० भूतसम्बन्धिनि ॥
भौतिक । पु० स्थाणौ ॥ शिवे ॥ सर्वविशेषे ॥ यथा । अष्टविकल्पोदैवस्तैर्यग्योनिश्चपञ्चधाभवति । मानुष्यश्चैकविध समासतोभौतिक सर्ग ॥ भौतिकाख्यास्सर्गो

सा चैतन्योत्कर्षनिष्कर्षतारतम्याभ्या मूर्ध्वाधोमध्यभावेन च विध्यम् । यथा । ऊर्ध्वं सत्त्वविशालस्तमोविशालश्चमूलत सर्गः । मध्ये रजो विशालो ब्रह्मादिस्तम्बपर्यन्त ॥ न० सुतायाम् ॥ त्रि० भूतसम्बन्धिनि ॥ रूपादिषु ॥ चक्षुरादिषु ॥ शरीरादिषु ॥

भौती । स्त्री० तस्याम् । रात्री । रजन्याम् ॥

भौत्य . । पु० भूतिमुने पुत्रे चतुर्दशमनौ ॥

भौम । पुं० कुजग्रहे । मङ्गले । नरकासुरे ॥ अम्बरे ॥ रक्तपुनर्नवायाम् ॥ न० पानीयविशेषे । भौममभौमनिगदितप्रथम त्रिविधबुधे । आन्तर्लपरमानूर्तत . साधारणंक्रमात् ॥ भौमानामभसांप्रायेणग्र संप्रातरिष्यते । शीतत्व निर्मलत्व स्वयतस्मांमतानुगुणा, ॥ त्रि० भूमिभवे ॥ तत्रे ॥ अन्नमयभूमिकार्ये ॥ भूमेरपत्यम् । शिवादित्वादण् ॥ भूमौभवति शैषिकोऽण् ।। भूमेरिदम् । तस्येदमित्यण् ॥

भौमवार . । पु० पञ्चशराशामाषष्ठाध्यायम् ॥

भौमन । पुं० विश्वकर्मणि ॥

भौमरत्नम् । न० प्रवाले ।

भौमावाश्या । स्त्री० गोसहस्त्रीतिविख्यातायाममायाम् यथा । अमावास्यांभवेद्वारोयदिभूमिसुतस्य च । गोसहस्त्रफलदद्यात्स्नानमात्रेणजाह्नवीतिव्यास ॥

भौमी । स्त्री० सीतायाम् । जानक्याम् ॥

भौरिक । पु० कनकाध्यक्षे ॥ भूरिणि । सुवर्णेनियुक्त । तत्रनियुक्तइतिठक् ॥

भ्रंश । पु० अध : पतने ॥

भ्रस : । पु० भ्रंशे ।।

भ्रकुस . । पु० स्त्रीवेशधारिणिनर्तके । भ्रुकुसे ॥ पटपुटेतिदण्डकोक्तभाषार्थकुसिधातोर्भ्रुरादिष्यन्तादेरच् । भ्रुवाकुसीभाषणमस्य । कोश्व्यङ्गोगालवस्येतिसूत्रे० अभ्रुकुसादीनामितिवार्त्तिकस्यअकारोनेनविधीयतइतिव्याख्यानान्तरात्० अकुंस ॥

भ्रुकुटि । स्त्री० क्रोधादिनाभ्रुवकौटिल्ये । भ्रुकुट्याम् ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवा : कुटि : इकोह्रस्वइत्यत्र० अभ्रुकुसादीनामितिवार्त्तिकेनाकारोविधीयते ॥

भ्रकुटी । स्त्री० भ्रकुटी । कुटिरिन्नन्त० कृदिकारादितिङीष्॥ भ्रुवो. कुटी ॥ इकोह्रस्वइतिसूत्रे० अभ्रकुंसादीनामितिवार्त्तिकस्य०-

भक रोनेनविधीयतद्भूत्यर्थादिकार ॥
भ्रम । पु० भ्रम्नु निर्गमे । प्राकारगृह भित्तिषुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख० इ० भा० भ्रमणे। भ्रान्तौ। मिथ्याज्ञाने। मिथ्यामतौ। व्यसनहेतौ ॥ माविनश्यत्वऽयभोगोवर्द्धतामुत्तरोत्तरम्। माविघ्नाप्रतिबध्नातुधन्योस्माऽस्मादितिभ्रम ॥ भ्रमणम्। भ्रमुअनवस्थाने। भावे घञ् ॥ नद्यादावधस्थलस्योर्द्धनिसरणे ॥ भ्रमन्तिजलान्यनेन। हल श्चेतिघञ्। नोदात्तोपदेशस्येति वृद्ध्यभाव ॥ देहेन्द्रियाद्यध्यासे ॥ न्यायमते० भ्रमस्यनामान्तरमप्रमा। भ्रमोद्विविध । विपर्यास ० स शयश्च। आद्योयथा । देहेआत्मबुद्धि ० शङ्खादौपीततामति । सानिश्चयरूपा ॥ द्वितीयोयथा। किंस्विन्नरोवा० स्थाणुर्वेत्यादिबुद्धि । तस्यकारणम्। पित्तदूरत्वमोहभयादिनानाविधदोष । यथा। अप्रमाचप्रमाचेतिज्ञानद्विविधमुच्यते। तच्छून्ये तन्मतिर्यास्यादप्रमासाद्विरूपिता ॥ ततप्रपञ्चोविपर्यास सशयोपिप्रकीर्त्तित । आद्योदेहेष्वात्मबुद्धि शङ्खादौपीततामति ॥ भवेन्निश्चयरूपासासशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसशय ॥ तदभावाप्रकाराधीस्ततप्रकारातुनिश्चय । सशयोभवेद्याधीरेकत्राभावभावयो ॥ साधारणादिधर्मस्यज्ञानसशयकारणम् । दोषोऽप्रमायाजनकप्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविध स्मृत । इ० भा० प० ॥
भ्रमणम्। न० अनवस्थितौ ॥ गमनविशेषे। पर्यटने ॥
भ्रमणी। स्त्री० कारण्डिकायाम्। जलौकायाम् ॥ अधीशितु क्रीडाव्यायाम्। अधीशितु क्रीडादौ॥
भ्रमत्कुटी। स्त्री० तृणादिच्छत्रे ॥ कावार्याम्। जङ्गमकुट्याम् ॥
भ्रमर । पु० कीटविशेषे। मधुपे मधुव्रते। द्विरेफे। चञ्चरीके ॥ कामुके ॥ वेधनयन्त्रे । वर्मा० इ० भा०॥ भ्रमति। भ्रमु०। अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर ॥
भ्रमरक । पुं० भृङ्गे। मधुलिहि ॥ गिरिके। कालमूषिके ॥ चूर्णकेशे। अलके। ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव। इवेप्रतिकृताविति कन् ॥ भ्राम्यतिवा। भ्रमु० अर्तिकमीत्यर । स्वार्थेकन् ॥
भ्रमरकीट पु० कीटान्तरे। कुम्हारी० इ० भा० ॥
भ्रमरच्छली। स्त्री० लताविशेषे। भृङ्गाह्वायाम् ॥ भृङ्गच्छलीचकटुका

तिक्ताग्निदीपनरोचनीति। रा० नि०

भ्रमरप्रिय । पु० धाराकदम्बे ॥

भ्रमरमारी । स्त्री० मालवदेशप्रसिद्धपु ष्पवृक्षविशेषे । मासपुष्पिकायाम् ।

भ्रमरविलसितम् । न० भ्रमरविलसिता याम् । म्भौ न्लौ ग स्याद्भ्रमरविल सितम् ॥

भ्रमरविलसिता । स्त्री० त्रिष्टुप् ११ छन्दः प्रभेदे । यथा । म्भौगो नौगो भ्रमरविलसिता ॥ य० मुग्धे मा नपरिहरनचिरात्ताकण्यन्ते सफल यतु हरि । फुल्लाबल्लीभ्रमरविलसि ताभावेश्मोभाकलयतिकिमुताम् ॥

भ्रमरा । स्त्री० भ्रमरच्छल्याम् ॥

भ्रमरातिथि । पु० चम्पके ।

भ्रमरानन्द । पु० बकुले । अतिमुक्त के ॥ रक्ताम्लाने ॥

भ्रमरालक । पु० भ्रमरके । कुरुले । ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका । स्त्री० भ्रमरावल्याम् ॥

भ्रमरावली । स्त्री० अतिशर्करीप्रभेदे ॥ भुजसङ्गतपञ्चसुवर्णलसद्वलया० कर पुष्पसुगन्धवतीरसनारुचिरा । कन कद्वयनूपुरचारुतराजयतिभ्रमराव- लिकाभुजगाधिपदुर्ललिता ॥ यथा । सखिसम्प्रतिकम्प्रतिमौनमिदंवि हितम्० मदनेनधनुः सशरसुकरे निहितम् । नतिशालिनिकिंघनमा लिनिमानकथा० रतिनायकसायक

ट्ठ खमुपतिष्ठथा ॥

भ्रमरिका । स्त्री० बालानाक्रीडाविशे षे । येनभूरपिभ्रमतीवभाति । भा र्गीमार्गी० इ० भा० ।

भ्रमरी । स्त्री० भ्रमरयोषिति । भौरी० इ० भा० ॥ षट्पद्याम् ॥ जतुका याम् ॥ पुत्रदात्र्याम् ॥ भ्रामया स्याने ॥

भ्रमरेष्ट । पु० श्योनाकप्रभेदे ॥

भ्रमरेष्टा । स्त्री० भूमिजम्ब्वाम् भार्ग्याम् ॥

भ्रमरोत्सवा । स्त्री० माधवीलतायाम् ॥

भ्रमासक्त । पु० शस्त्रमार्जके ॥

भ्रमि । स्त्री० भ्रमणे ॥ जलनि सरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमण म् । भ्रमु० । इकक्रुष्यादिभ्य ॥ भ्रमे सम्प्रसारणञ्च तीन् । बाहु लकात् सम्प्रसारणाभाव ॥

भ्रमित । त्रि० घूर्णिते । भ्रमणका रिते ॥

भ्रमी । त्रि० भ्रमविशिष्टे ॥

भ्रष्ट । त्रि० गलिते । च्युते । ध्वंसा दित . पतिते ॥ मर्यादाभ्रष्टातीर्थ यात्रान्तुगच्छे तृसस्याद्भ्रष्टोरौरवैत्र जेन्न । योगभ्रष्टः सत्यधृतिम्बग च्छेद्राज्याद्भ्रष्टोमृगयावैव्रजेत ॥

भ्राज । पुं० कात्यायनप्रणीतश्लोके ॥ भाषानामश्लोकाकृतिमत्ताभाष्यम् ॥

भ्राजकम् । न० पित्ते ॥

भ्राजमानः । त्रि० दीप्यमाने ॥

भ्राजिष्णु । त्रि० अलङ्कारादिनादी

भियुक्ते ॥ दीप्तिशालिनि । विभाजि ॥ भ्राजते । तच्छील । भ्राजृ दीप्तौ । भुवश्चेतिचकारात् भ्राजेरपिष्णुच् ॥ स्वप्रकाशचिद्रूपे ॥

भ्राता । पु० सहोदरे ॥ भ्राजते० विभर्ति वा । भ्राजृ डुभृञ् । वा । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ । इतिसाधु ॥

भ्रातरौ । पु० २०० सहोक्त्याभ्रातृभगिन्यो । भ्राताचस्वसाच । । भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेष स्वसाचभ्राताचेतिवा ॥

भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ ॥ ऋतष्ठञ् ॥ ङीपि० भ्रातृकी ॥ भ्रातृयोग्ये ॥

भ्रातृज । पु० भ्रातृपुत्रे ॥ भ्रातुर्जात । पञ्चम्यामितिड ॥

भ्रातृजा । स्त्री० भ्रातुष्पुत्र्याम् । भ्रात्रीयायाम् ॥ टाप् ॥

भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् । प्रजावत्याम् ॥ भ्रातु जाया ॥

भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्रातापतिर्यस्यादितिविग्रहे० नित्य सपत्न्यादिष्विति० भ्रातृपतिशब्दस्य नान्तादेशे० ऋन्नेभ्यइतिङीप् ॥

भ्रातृपुत्र । पु० भ्रातृजे ॥

भ्रातृभगिन्यौ । स्त्री० भ्रात्रौ ॥ भ्राताचभगिनीच ॥

भ्रातृबल । त्रि० भ्रातृमति ॥ भ्राताऽस्यास्ति । अन्येभ्योपिदृश्यतइति० वलच् । सञ्ज्ञामित्यनुवृत्तेर्वलइतिनदीर्घ ॥

भ्रातृव्य । पु० भ्रातृपुत्रे ॥ भ्रातुरपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥ व्यन्सपत्ने ॥

भ्रातृश्वशुर । पु० पतिज्येष्ठभ्रातरि । जेठ० भाशुर० इ० भा० ॥

भ्रातृस्थानम् । न० सहोदरगृहे ॥ लग्नात्तृतीयभवने ॥ भ्रातु स्थानम् ॥

भ्रात्रीय । पु० भ्रातृजे ॥ भ्रातुरपत्यम् । भ्रातुर्व्यच्चेति० चाच्छ ॥

भ्रान्त । पु० मत्तद्विपे ॥ राजधुस्तूरे ॥ न० भ्रमणे ॥ त्रि० भ्रमान्विते ॥ भ्रान्तिमापन्ने ॥ अद्वितीय-ब्रह्मतत्त्वं नजानन्तियदातदा । भ्रान्ताएवाखिलास्तेषांक्वमुक्तिः क्वइहवासुखम् ॥ भ्रमे ' क्तरित्त । अनुनासिकस्यक्विझलो क्ङितीति० इ० दीर्घ ॥

भ्रान्ति । स्त्री० भ्रमे । मिथ्यामती । अतस्मिंस्तज्ज्ञाने ॥ युक्तिहीनप्रकाशत्वाद्भ्रान्तेर्नह्यस्तिलक्षणम् । यदिस्याल्लक्षणंकिञ्चिद्भ्रान्तिरेवनसिध्यति ॥ भ्रान्तिभाजिभवतिक्वविवेक ' ॥ भ्रमणे । अनवस्थितौ ॥ भ्रमणम् । भ्रमु० । क्तिन् । अनुनासिकस्येतिदीर्घ ' ॥

भ्रान्तिदर्शनम् । न० असाधनेसाधनत्व

दुद्धौ ॥ साधर्म्यसाधनत्ववुद्धो ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायारजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान् । त्रि० भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति । मतुप् ॥ ङीपि० भ्रान्तिमती ॥ पु० अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने । तदिति० अन्यद्प्राकरणिकंनिर्दिश्यते० तेनसमानम्धर्मादिद्दप्राकरणिकमाश्रीयते । तस्यतथाविधसदृष्टौसत्यांयदप्राकरणिकतयासंवेदनम्०सभ्रान्तिमान् । नचैवरूपकम्प्रथमातिशयोक्तिवा०तत्रवस्तुतोभ्रमस्याभावात् । रूपवार्थानुगमेनसज्ञाया प्रवृत्तेस्तत्रस्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम् । कपालमार्जार पयइतिकरांल्लेढिशशिमस्तरुच्छिद्रप्रोतान्बिसमितिकरी सङ्कलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहोविप्लवयति ॥

भ्रान्तिहर । पु० मन्त्रिणि ॥ त्रि० भ्रमनाशके ॥

भ्रामक । पु० जम्बुके । फेरौ ॥ धूर्त्ते । सूर्य्यावर्त्ते । अश्मप्रभेदे । चुम्बक० इ० भा० प्र० ॥ त्रि० भ्रमजनके ॥

भ्रामर । पु० चुम्बक० इ० प्र० पाषाणे । भ्रामके ॥ न० शुक्लवर्णमधुनि ॥ भ्रमरैः कृतम् । क्षुद्राभ्रमरेत्यादिनाऽञ् ॥ किञ्चित्सूक्ष्मं प्रसिद्धं च षट्पदेभ्योऽभिनिश्चितम् । निर्म्मलस्फटिकाभं यत्तन्मधुभ्रामरस्मृतम् ॥ भ्रामरंरक्तपित्तघ्नं मूत्रजाड्यकरंगुरु । स्वादुपाकमभिष्यन्दिविशेषात्पिच्छिलंहिमम् ॥ रतबन्धान्तरे । यथा । तत्कटिमभिरूढवल्लभ आघूर्णितपृष्ठस्थितस्थित । चक्रवद्भ्रमतिकुञ्चित त्रिकोभ्रामरंनिगदितममुष्मतम् ॥ नृत्यविशेषे । रासे । मण्डलनृत्ये । हल्लीसे ॥ त्रि० भ्रमरसम्बन्धिनि ॥ अण् ॥

भ्रामरी । त्रि० अपस्मारिणि । इति कुल्लूकभट्टः ॥

भ्रामरी । स्त्री० पार्वत्याम् ॥

भ्रामित । त्रि० आघूर्णिते ॥

भ्राष्ट्र । पु० भर्जनपात्रे । अम्बरीषे । भडसा० इ० भाड० इ० भा० ॥ भृज्यतेऽत्र । भ्रस्जपाके । भ्रस्जिगमिनमिहनिविश्यशाह्विश्वेति० ष्ट्रन्० इति ॥

भ्रियमाण । पु० पोष्यमाणे ॥

भ्रुकुंस । पु० भ्रूकुंसे ॥ भ्रूकुंसे । स्त्रीवेशधारिणिनर्त्तके । नचनिआ० इ० भा० ॥ भ्रुवाकुंसोभाषणमस्य । कुंसोष्ठलोऽङ्ग्योगाणवस्य तिसूत्रे० भ्रूयङ्गवङ्गभाविनाम व्ययानाश्चेति

वक्तव्यमितिनिषेधोत्तरपठितेन ० अभ्रुकुसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्ह्रस्व ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटि । स्त्री० भ्रूकुटौ । भ्रूकुंच्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन । भ्रुवो कुटि । भ्रुकुसरत्प्रक्रिया ॥

भ्रुकुटी । स्त्री० भ्रुकुटौ । भ्रुवो कौटिल्ये ॥ कुटेरिगुपधादितीन् । क्रुदिकारादितिङीष् । भ्रुवो कुटी ॥ अभ्रुकुसादीनामितिवार्त्तिकाद्ह्रस्व ॥

भ्रू । स्त्री० नेत्रोपरिभागस्थरोमराज्यां चिल्लिकायाम् । भौ० इ० भा० ॥ अमु० ।भ्रमेश्चडू । टिलोप ॥यद्वा। भ्रमति । भ्रमुचलने । भ्रमेश्चडू ॥ यद्वा । भ्राम्यति । क्विप् । जङ्ग मादीनामिति० गम ' क्वाविच्यत्र वार्त्तिकेन०मलोपऊङ्चादेश ॥

भ्रूकुस । पु० भ्रूकुसे । भ्रुकुसे । नचनिआ० इ० भा०॥ भाषणा र्थकचुरादिण्यन्तात कुसेरेरच् । भ्रुवाकु सोभाषणमस्य । इकोह्रस्वो ऽङ्योगालवस्येतिसूत्रे०इयङ्०वङ् भाविनाम" धानाम्ग्नेतिवार्त्तिका दुह्रस्व नषेध ॥

भ्रूकुटि । स्त्री भ्रुकुव्याम् ॥ भ्रुवो कुटि इयङ्वङ्भाविनामिति

निषेधाद्ह्रस्वोनभवति ॥

भ्रूकुटी । स्त्री० भ्रकुव्याम् । भ्रुकुटौ ॥ कुटेरिगुपधादितीन् । क्रुदिकारादितिङीष् । भ्रुवो कुटी । इयङ्वङ्भाविनामितिह्रस्व निषेध ॥

भ्रूण । पु० स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके ॥ गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूणते । भ्रूण आशाविशङ्कयो । घञ् ॥

भ्रूणहत्या । स्त्री० गर्भस्थबालकहनने॥ यथा ।त्रिविवाह कृत येनकरोतिचतुर्थकम् । कुलानिपातयेत्सप्त भ्रूणहत्याव्रतञ्चरेत् ॥

भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि ॥ भ्रूणं हतवान् । हन० । ब्रह्म भ्रूणवृत्रेषुक्विप् ॥ ब्रह्महणि ॥ भ्रूणहा० वरिष्ठब्राह्मणहन्तोच्यत इतिव्याख्यानात् ॥

भ्रूभङ्ग । पु० भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोभङ्ग ॥

भ्रेष । पु० अध पाते । यथोचितात्० भ्रंशे ॥ भ्रेषणम् । भ्रेषृच लने । घञ् ॥ चलने ॥

भ्रेषणम् । न० चलने ॥

भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातना त्तकारादेश ॥

+ —*— +

म । पुं० मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे । ब्रह्मणि ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ०ऽऽऽ० ॥

मशिह । त्रि० महनीये । पूजनीये ॥

मकर । पु० नक्रे । याद प्रभेदे । मगर० इतिभाषाप्रसिद्धे ० भगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आलोचिते ॥ लक्ष्याति । कृषि सायाम् । यथा यच् । मनुष्याकार । पृषोदरादि ॥ यद्वा । मकरते । मक्रिमरण्डले । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकराति । राद्दाने । आतोनुपेतिक ॥ दर्पयोऽप्युक्त । सारस्वतकोषे ॥ अदृष्टुर्जे ॥

मकरकुण्डलम् । न० मकराकृतिकाभरणे ॥

मकरकेतन । पु० कामदेवे ॥ मकरकेतनं यस्य ॥

मकरध्वज । पु० कन्दर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्य ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तत्सकारयाप्रकारोव्यवस्थित्वान्नित्यामयौ ॥

मकरन्द । पुं० पुष्परसे ॥ मकरमपि द्यति०कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिक । पृषोदरादि ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्मण्यण् । शकन्ध्वादि ॥ कुन्दपुष्पवृक्षे ॥ न०किञ्जल्के ॥

मकरसुखी । स्त्री० प्रभाख्याम् । पद्मस पद्व्याम् ॥

मकरन्दवती । स्त्री० कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूह । पु० मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्यये मकरव्यूहोभवति । तेनाऽयं भयाभोभयत्वभयेसतिगच्छेत् ॥

मकराकर । पु० समुद्रे ॥ मकराणामाकर ॥

मकराकार । पु० महाकरञ्जे । षड्ग्रन्थे ॥

मकराङ्क । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिप । पुं० शनिवारे ॥ मकरराशिविशेषस्याधिप ॥

मकरालय । पुं० अब्धौ ॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालय ॥

मकरी । पुं० समुद्रे ॥ मकरा सन्त्यस्मिन् । अतइनिठनाविति०इनि ॥

मकुटम् । न० मुकुटे । किरीटे ॥ मकुते ऽनेनवा । मकि० । बाहुलकादुट । आगमशास्त्रस्यानित्यात्वान्नुम् ॥

मकुति । स्त्री० शूद्रशासने ॥

मकुर । पु० मुकुरे । दर्पणे ॥ बकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि० । मकुरदर्दुराविति साधु ॥

मकुल । पु० न० मुकुले ॥ बकुलद्रुमे ॥

मकुष्ठ । पु० वनमुद्गे । मौठ० इ० प्र० व्रीहिविशेषे ॥ मकुष्ठोवातलोग्राहीकफपित्तहरोलघु । वातिजिन्मधुर पाकेक्रमिकृज्ज्वरनाशन ॥ चि० म थरे ॥

मकुष्ठक । पु० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मङ्क्यतेवा । मकि० । बाहुलकादुनुमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुस्थासौस्थकश्च । पूर्वपदादितिष ॥

मकूलक । पु० मुकूलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मकि० । खर्जपिञ्जादिभ्यऊरोलचावितिपिञ्जादित्वादूलच् । स्वार्थेकन् ॥

मक्कल्ल । पु० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोवस्तिशूलमक्कल्लसञ्ज्ञितम् । यवक्षारपिवेत्तत्र मस्तुनोष्णोदकेनवा ।

मक्का । स्त्री० खुराशानाभिधे देशे ॥

मक्कुलम् । न० शिलाजतुनि ॥

मक्केश । पु० ) खुराशानदेशस्थे
मक्केश्वर । पु० ) शिवे ॥

मक्कोल । पु० शिलाधातौ । सितीपले । मक्का० खड़ियामाटी० गोलू० इ० भा० ॥

मक्ष । पु० स्वदोषाच्छादने ॥

मक्षवीर्य्य । पु० पियालवृक्षे ॥

मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० इ० भा० ॥ मशति । मशशब्दे रोषकृतेच । इनिमशिभ्यासिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । कुन्० वा लत्वा ॥

मक्षिकामलम् । न० सिक्थके ॥

मक्षीका । स्त्री० मक्षिकायाम् ॥

मख । पु० यज्ञे ॥ मखन्तिदेवाअत्र अनेनवा । मखइतौ । हलश्चेति० घञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिघुसौतिघ । यद्वा । मह्यते । मह० । नकेर्हलोपस्य० अघ इतिखोहलोपश्च॥

मखत्राता । पु० श्रीरामचन्द्रे ॥ मखानात्राता ॥

मखवह्नि । पु० प्रणीते । यज्ञाग्नौ ॥

मखानल । पु० महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० इ० भा० ॥ मखान्न पद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ।

मखासुहृत् । पु॰ शिवे । मखस्यदत्त यज्ञस्यअसुहृत्॰शत्रु ॥
मगण । पु॰ त्रिगुरौ॰SSS ॥
मगध । पु॰ वन्दिनि ॥ मागधे । वंशपरम्पराशंसके ॥ मगध्यति॰या चते । मगवपरिवेष्टने । कण्ड्वादिर्य गन्त । पच् । यस्यहलइतियलोप ॥ मगधा पु॰भूम्नि॰ कीकटदेशे ॥ यथा । व्यासेश्वरसमारभ्यतसकु गडान्तकं शिवे ।मगधाख्योभवादेशो याचायानर्हिदुष्यति ॥ दक्षोत्तरक्र मेणैवक्रमात्कीकटमागधी ॥ मगधा नानिवासोजनपद ॰ मगधा । निवासे॰जनपदेलुप् । लुपियुक्त वद्भाव ॥
मगधा । स्त्री॰ पिप्पल्याम् ॥
मगधेश्वर । पु॰ जरासन्धनृपे । म गधदेशाधिपमात्रे ॥ मगधानादेश त्रिशेषाणामीश्वर ॥
मगधोद्भव । त्रि॰ मगधदेशजाते ॥
मगधोद्भवा । स्त्री॰ पिप्पल्याम् ॥ मग धेउद्भवोयस्य ॥
मग्न । त्रि॰ जलान्त. प्रविष्टे । आ प्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त । ओदितश्चेति॰निष्ठा नत्वम् । तस्यासिद्धत्वात्॰स्कोरिति सलोप । चो कु ॥
मघ । पु॰द्वीपान्तरे ॥ देशान्तरे । म ग॰नामकन्ने पक्षाने ॥ न॰ पुष्प विशेषे ॥
मघवा । पु॰ इन्द्रे । शक्रे ॥ मह्यतेपू ज्यते । महपूजायाम् । श्वन्नुक्षन् पूषन्प्लोहन्नित्यादिना॰कनिन् कवि रितिमनोरमायाम्पुटम् ॥ निपा तनात्॰हस्यघोवुगागमश्च । मघवा नौ॰मघवान ॥ मघवाबहुलमिति मितित्रादशपक्षेतु॰ मघवान्मघ वन्तौ॰ मघवन्त ॰ इत्यादिबो ध्यम् ॥ जिनानाद्वादशचक्रवर्त्यन्त र्गतचक्रवर्त्ति विशेषे
मघवती । स्त्री॰ इन्द्राण्याम् ॥
मघा । स्त्री॰ दशमनक्षत्रे ॥ अत्रजात स्यफलयथा । कठोरचित्त पितृमातृ भक्तस्तीव्रस्वभावस्त्वनवद्यविद्य च जन्मभ यस्यमघाऽनघ स्यान्मति सदारातिविनाशदक्षा ॥ बहुवचना न्तोप्ययदृश्यते ॥ यथा नवोढवीनवा न्नै पयःशष्पकादनैतथा । पितर स्म श्वयन्त्यत्रमष्टकामुमघासुचे ति । म घायांपिण्डदानेनक्षेत्रपुत्रोविनश्य तीत्यिकाचनात्तोपि ॥ औषधविशे षे ॥
मघाभव । पु॰ शुक्राचार्ये ॥
मघाभू । पु॰ शुक्राचार्ये ॥
मघी स्त्री॰ धान्यविशेषे ।
मघोनी । स्त्री॰ इन्द्राण्याम् ॥
मङ्कुर । पु॰ दर्पणे । मुकुरे । मङ्कते मकि॰ । वाहुलकादुरच् ॥

मङ्क्ति । त्रि॰ शठे ॥ मङ्कते । मङ्कि॰ । वङ्क्यादित्वात्साधु ॥

मङ्खणम् । न॰ लङ्घनाभावे ॥ इति शब्दरत्नावली ॥

मङ्क्षु । अ॰ शीघ्रे ॥ भृशार्थे ॥ मज्जति । टुमस्जोशुद्धौ । बाहुलकात्सु । मस्जिनशोरितिनुम् । स्कोरितिसलोप ॥

मङ्खुणम् । न॰ अङ्घानाभावे ॥ इति त्रिकाण्डशेष ॥

मङ्ग । पु॰ नौमस्तके ॥ मङ्गति । मगिसर्पणे । पचाद्यच् ॥

मङ्गल । पु॰ अङ्गारके । कुजे । इतीयशब्दे ॥ अस्यवारेजातस्यफल यथा । उग्र प्रतापीक्षितिपालमन्त्रीरणप्रियोवक्रवचा सरोष । सत्वान्वित शूरगणप्रणेताकुजस्यवारेप्रभवोमनुष्य ॥ न॰कल्याणे ॥ सर्वार्थरक्षणे ॥ अगर्हिताभिप्रेतार्थसिद्धौ ॥ यत्खलु क्रियमाणमेवमनप्रह्लादन समीहितसाधनञ्चतन्मङ्गलमुच्यतइतिव्याख्याकारा ॥ आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्यालङ्कारिकोक्तेः काव्यादिमुखे क्रियमाणे ॥ यथाहभगवान्भाष्यकार. । मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानिशास्त्राणिप्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिचभवन्तिअध्येतारश्चप्रवक्तारोभवन्ती-तिमङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरण नित्यमप्रशस्तविवर्जनम् । एतद्धिमङ्गल प्रोक्तमृषिभिस्तत्त्वदर्शिभि ॥ लोकेऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुताशन । हिरण्य सर्पिरादित्यआपोराजातथाष्टम ॥ एतानिसतत पश्येन्नोच्चेद्दर्व्यादिना यजेत् । प्रदक्षिणन्तुकुर्वीततथाचायुर्नहीयते ॥ अपिच । रोचन चन्दन हैमसृदङ्गदर्पण मणिम् । गुरुमग्नि तथासूर्यंप्रात पश्येत्सदाबुध ॥ मङ्गति॰दुरदृष्टमनेन । मगिसर्पणे॰ गतौवा । मङ्गेरलच् ॥ अशुभानिनिराचष्टे तनोतिशुभसन्ततिम् । स्मृतिमात्रेणयत्पुसाब्रह्मतन्मङ्गल विदुरितिविष्णुपुराणम् ॥ त्रि॰कल्याणवति ॥

मङ्गलगृहम् । न॰ मेषराशौ ॥ वृश्चिकराशौ ॥ मङ्गलस्यतृतीयग्रहस्यगृहम् ॥

मङ्गलचण्डिका । स्त्री॰ ) दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री॰ ) यथा । प्रधानांशस्वरूपाचदेवीमङ्गलचण्डिका । प्रकृतेर्मुखसम्भूतासर्वमङ्गलदासदा ॥ सृष्टौमङ्गलरूपाचसंहारेकोपरूपिणी । तेनमङ्गलचण्डीसापण्डितै. परिकीर्तितेतिभागवतम् ॥

मङ्गलच्छाय । पुं॰ प्लक्षवृक्षे ॥

मङ्गलपाठक । पु॰स्तुतिपाठके । वन्दिनि ॥

मङ्गलप्रदा । पु॰ दुर्गायाम् ॥ हरिद्रायामितिकश्चित् ॥ त्रि॰मङ्गलदातरि ॥

मङ्गलप्रस्थ । पु॰ भारतवर्षस्थपर्वतान्तरे ॥

मङ्गलमालिका । स्त्री॰ सखीभेदे ॥ मङ्गलायामालिका ॥

मङ्गला स्त्री॰ उमायाम् । काव्यायन्याम् ॥ गयायांमङ्गलास्मृतेतिदेवीगीता ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ ब्रसाहं ब्मादविशेषे ।

मङ्गलागुरु । न॰ अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामल्लिकागन्धामङ्गलागुरुवाच ल्या । मङ्गल्यागुरुशिशिराग-न्धाढ्यायोगवाहिका ॥

मङ्गलाचरणम् । न॰ ग्रन्थाद्यारम्भे मङ्गलकरणे ॥ मङ्गलाचरण-शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चा वश्य कर्त्तव्यमित्याहुर्व्याख्याकारा ॥

मङ्गलाह्वा । स्त्री॰ दूर्वायाम् ॥

मङ्गलिकाक्षीरणम् । न॰ असाहश्य कथायाम् ॥

मङ्गल्य पु॰ त्रायमाणायाम् । अश्वत्थे ॥ बिल्वे ॥ मसूरके जीवके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्जे ॥ न॰ दध्नि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि॰ प्रियकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधु । तत्र साधुरितियत् ॥

मङ्गल्यक । पु॰ मसूरे । स्वार्थे कन् ॥

मङ्गल्यकुसुमा । स्त्री॰ शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्या ॥

मङ्गल्यनामधेया । स्त्री॰ जीवन्त्याम् । शाकश्रेष्ठायाम् ॥

मङ्गल्या । स्त्री॰ मल्लिगन्धगुरुणि शम्याम् ॥ श्वेत पुष्प्याम् ॥ मिश्याम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधौ ॥ वचायाम् ॥ हरिद्रायाम् ॥ चीडायाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधु । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनानिचश्रेष्ठानियादेवीददते हरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता ॥

मङ्गिनी । स्त्री॰ नावि । नौकायाम् ॥

मचर्चिका । स्त्री॰ प्रशस्ते ॥ मशब्दं चर्चति । चर्च अध्ययने । ण्वु

ल् ॥ यथा । प्रशस्तोब्राह्मण ० ब्राह्मणमर्चिकारूढिशब्दत्वात्० प्रश साचनैखे तिसमास ॥
मच्छ । पु० मत्स्ये ॥
मज्जका । स्त्री० मज्जायाम् ॥ मज्जै वस्त्रार्थेक ॥
मज्जकृत् । न० चस्थ्नि ॥
मज्जा । पु० वृक्षसारे । वृक्षादेरुत्तम स्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्येहवीर्यंभवतियादृशम । तस्यतस्यैववीर्येणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगते धातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्खाग्निनापक्व तस्यसारोद्भवोघन । य स्नेहवत् पृथग्भूत समज्जेत्यभिधीयते ॥ स्थानन्तु । स्थूलास्थिषु विशेषेण मज्जात्वभ्यन्तरेस्थित । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्म भेदोमज्जविवर्द्धन । मज्जाविशेषतोऽस्थ्नाञ्चबलकृत्स्नेहनेहित ॥ मज्जत्यस्थिषु । टुमस्जोशुद्धौ । श्वन्नुक्षिन्नितिसाधु ॥ शिरोस्थिमध्ये पिण्डितस्नेहे । मस्तिष्के ॥
मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । टुमस्जो० । वहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥
मज्जसमुद्भवम् । न० वीजे । शुक्रे ।
मज्जसम्भव । पुं० शुक्रे ॥
मज्जा । स्त्री० वृक्षसारे । अस्थिगत धातौ ॥ मज्जते पचाद्यजन्तात् टाप् । मज्जोत्तामजजयासहेति० द्विरूप ॥
मञ्जाज । पु० भूमिजगुग्गुलौ ॥
मञ्जारस । पु० शुक्रे ॥
मञ्जासारम् । न० जातीफले ॥
मञ्जिका । स्त्री० मज्जकायाम ॥
मञ्च । पु० खट्वायाम ॥ कर्णाटभाषायाम् । माचा० माजा० इ० भा० ॥ उच्चमण्डपविशेषे ॥ दोलायमान गोविन्द मञ्चस्थ मधुसूदनम् । रथस्थ वामन दृष्ट्वा पुनर्जन्मनविद्यते इति पुराणम ॥ मञ्चते । मचिधारणोच्छ्रायपूजनेषु । पचाद्यच् ॥
मञ्चक । पु० इन्द्रकोषे । उच्चमण्डपे ॥ खट्वायाम् ॥
मञ्चकाश्रय । पु० मत्कुणे ॥
मञ्चमण्डप । पु० शस्यरक्षार्थकुटीरे । कुट्टङ्गी ॥
मञ्चिका । स्त्री० आसन्द्यायाम् ॥
मञ्जर । पु० वल्लरी ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्ल्याम् । लतायाम् ॥
मञ्जरि । स्त्री० वल्लर्याम् ॥ मञ्जुत्वमृच्छति । ऋगतौ । अचइ । शकन्ध्वादि ॥
मञ्जरी । स्त्री० तिलकद्रुमे ॥ स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामृडी ॥

ष् ॥

मञ्जरीनम्र । पु० वेतसवृक्षे ॥

मञ्जा । स्त्री० मञ्जर्याम् ॥

मञ्जि । पुं० मञ्जर्याम् ॥

मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥

मञ्जिफला । स्त्री० कदल्याम् ॥

मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० हि० भा० प्र० औषधौ ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वरवर्णकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्त्रविसर्पव्रणमेहनुत् ॥ मञ्जौशोभने वर्तते तिष्ठति । ष्ठा० । सुपिस्थ इतिकः । अम्बाम्बेतिषत्वम् ॥ यद्वा । अतिशयेनैतमबिष्ठनौ ॥

मञ्जी । स्त्री० मञ्जर्याम् ॥

मञ्जीर । पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मजिधुनौ० सौत्र । बाहुलकादीरन् ॥ शुर्वच्चरे० ऽ ॥

मञ्जरीय । स्त्री० वर्णवृत्तान्तरे ॥

मञ्जुः । त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । बाहुलकादु ॥

मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥

मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥

मञ्जुगमना । स्त्री० हंसाम् ॥ त्रि० सुन्दरगामिनि ॥

मञ्जुघोष । पु० शिवे ॥ उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जु घोष शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥

मञ्जुपाठक । पु० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥

मञ्जुप्राण । पु० ब्रह्मणि ॥

मञ्जुभद्र । पु० पूर्वजिनविशेषे ॥ कामदर्पणे । मञ्जुघोषे ॥ शिवे ॥

मञ्जुभाषिणी । स्त्री० अतिजगतीछन्दः प्रभेदे ॥ यथा सजसाजगौ भवति मञ्जुभाषिणी ॥ अमृतोर्मिशीतलकरेणलाञ्छनस्तनुकान्तिरोचितविलोचनोहरे । नियतकलानिधिरसीतिमञ्जुवीमुद्रमच्युतं व्यथितम ञ्जुभाषिणी ॥ सुनन्दिनीतियमभी॥

मञ्जुमणि । पु० पुष्परागे । पोखराज० हि० भा० ॥

मञ्जुल । पुं० जलरङ्की ॥ न० जलाध्वले । शैवाले ॥ निकुञ्जे ॥ त्रि० मञ्जौ ॥ मञ्जु० मञ्जुत्वञ्जाति । ला० । क ॥ मञ्जु मञ्जुलमस्त्यस्याविनवा । सिध्मादित्वाल्लच् ।

मञ्जुवक्त्र । त्रि० सौन्दर्यमयुक्त ॥

मञ्जुवाक् । त्रि० मधुरवचने ॥

मञ्जुश्री । पु० मञ्जुघोषे ॥ म-

अजुर्मनोज्ञाश्रीर्यस्य॥

मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिचेपाधारे ॥ मञ्जत्यनया । टुमस्जो मस्जिनुं सृचेत्यूषन् ॥

मटची । स्त्री० मर्दनहेतुभूतेपाषाणाद्युष्ट्रादौ ॥ अशन्याम् ॥

मटस्फटि । पु० दर्पारम्भे ॥

मट्टकम् । न० गृहमस्तके ॥

मठ । पु० छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयो हलश्चेतिघञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ माठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितामर्दयेदाज्ये र्जलेनापिचसन्नयेत् । तस्यास्तुवटकङ्कत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यै रलङ्कृते । मज्जयित्वासितापाकेतलस्थसमुद्धरेत् ॥ अयप्रकार ससिद्धोमठइत्यभिधीयते ॥ मठस्तुबृंहणोवृष्योबल्यसुमधुरोगुरु । पित्तानिलहरोरुच्योदीप्ताग्नीनासुपूजित । समिताशर्करासर्पिर्निर्मिताघपरेप्रिये । प्रकारात्रमुत्रातुल्योस्ते पिचेतद्धृ,वा स्मृता ।

मठर । पु० मुनिविशेषे ॥ शौण्डे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । वञ्चिमनिभ्यां किच्चे तिअरष्ठोन्तादेशश्च ॥

मडक । पु० मड्डुवा० इ० प्र० शस्ये

मड्डु । पु० वाद्यप्रभेदे मज्जति० मज्जन्तिशब्दाअनया । टुमस्जोशुद्धौ ॥ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ । पृषोदरादि ॥ डमरुरेवमहन्मड्डुरुच्यते ॥ चुचुक० इ० गौडेषुयस्यप्रसिद्धि ॥

मड्डुक । पु० मड्डुवाद्ये ॥ स्वार्थे क ॥ मर्दले ॥

मणि । पु० स्त्री० अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिञ्जरे ॥ योन्यग्रभागे ॥ स्तने । मणिबन्धे ॥ मण्यते । मण शब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न० अलिञ्जरे । माट० इ० भा० प्र० ॥ मणति । मण० । इन् । स्वार्थेयावादित्वात्कन् । सञ्ज्ञायांकोवा ॥

मणिकार । पु० मणिकारे ॥

मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ इष्टोविश्वेश्वरोदेवोस्नातव्यामणिकर्णिका ॥

मणिकर्णिकेश्वर । पु० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया० मणिकर्णिकायावाईश्वर

मणिकाननम् । न० कण्ठे ॥ रत्नवने

मणिकार । पु० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौहरी इ० भा० । मणिषार० इतिच ॥ मणि करोति । डुकृञ् ० । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥

मणिकूट । पु० पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्गन्धमादनकस्य च । मध्येस्रवतिलौहित्योब्रह्मपुत्रसमाश्रितः ॥ ब्रह्मद्वीपस्थेगिरिविशेषे ॥

मणिखनि । स्त्री० मण्याकरे ॥ मणेः खनिः ॥

मणिगुणनिकर । पुं० अतिशक्वरी १५ प्रभेदे ॥ यथा । वसुमुनियतिरिति० मणिगुणनिकरः । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसति ' अनिबधिमणिगुणनिकरपरिचितिसरिदधिपतिरिवधृततनुविभव ॥

मणिग्रीव । पु० कुबेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि० रत्नकन्धरे ॥

मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधौ ॥

मणितम् । न० रतिकूजिते । मैथुनकालीनवाक्ये ॥ रतिकालेस्त्रीणाकण्ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्तः ॥

मणितारक । पुं० सारसपक्षिणि ॥

मणिद्वीप । पु० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्याधामस्थाने ॥ भुवनेश्वर्याः स्थानम्० देवीगीता । ब्रह्मलोकादूर्ध्वभागेसर्वलोकोस्तियः श्रुतः । मणिद्वीपः सएवास्तियत्रदेवीविराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्ततः स्मृतः । पुरापराम्बयैवाय कल्पितोमनसेच्छया । सर्वादौनिजवासार्थं प्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादधिकोत्तमः ॥ गोलोकादपिसर्वस्मात् सर्वलोकोधिकः स्मृतः । नैतत्समंत्रिलोक्यान्तुसुन्दरं विद्यतेक्वचिदित्यादिनादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णनं द्रष्टव्यं ॥

मणिनाग । पु० तीर्थविशेषे ॥

मणिपर्वत । पु० गिरिविशेषे ॥

मणिपुष्पक । पुं० सहदेवाख्यपाण्डवस्य शङ्खे ॥

मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थेदशदलेतृतीयेचक्रे ॥ मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते ॥ देशविशेषे ॥

मणिबन्ध । पुं० प्रकोष्ठपाण्योः सन्धिस्थाने । करग्रन्थौ । कलाइ० इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्ध बन्धने । हलश्चेतिघञ् न० ॥ बृहती ९ छन्दः प्रभेदे ॥ यथा ।

आदितुरीय पञ्चमकषष्टमथान्त्य स्या द्गुरुचेत् । इन्द्रियवेदैश्च विरतिस्तन्मणिबन्ध प्राहफणी ॥ मणिमध्य मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र । पु० जिनालापूर्वं यक्षविशेषे । जम्भले ॥ कुबेरसेनापतौ ॥

मणिभूमि । स्त्री० कुट्टिमे। रत्नखनौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप । पु० रत्नमयगृहे ॥

मणिमध्यम् । न० बृहती ९ छन्दोभेदे । मणिबन्ध ॥ लक्षणयथा । स्यान्मणिमध्यंचेद्भमसाः । यथा । कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा । चित्रपदाभोनन्दसुतस्तारुननर्त्तस्मेरमुख ' ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्वतविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्नभूषिते ॥ पु० तीर्थं स्वे नवर्णितेपर्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयुक्तगृहे ॥

मणिमाला । स्त्री० हारे ॥ स्त्रीणाद्न्तक्षतान्तरे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौमणिमालाछिन्नागुहवक्त्रैः ' ॥ यथा । प्रह्वामरमौलौरत्नोपलक्लृप्ते ०जातप्रतिबिंबाशोणामणिमाला । गोविन्दपदाब्जे राजीनखराणामास्तामममचित्तध्वान्तं शमयन्ती ॥ मणीनां०माला०मालेववा ॥

मणिरागम् न० हिङ्गुले ॥

मणिव । पु० नागविशेषे ॥ मणिरस्यास्ति । अन्येभ्योपिदृश्यतइतिव ॥

मणिवर । पु० हीरके ॥

मणिबीज । पु० दाडिमवृक्षे ॥

मणिसर । पु० मुक्ताहारे॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्रवर्णकूप्ये ॥ पु० मत्स्यरङ्कखगे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसुमे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ । पु० पक्वान्नविशेषे । मठे । माठ० इ० भा० ॥ मण्ठते । मठिशोके । शोकइत्याध्यानम् । पचाद्यच् ॥

मण्ड । पुं० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषायाम् ॥ सारे ॥ पिच्छे ॥ दर्दुरे ॥ भक्तादिभवरसे ॥ तल्लक्षण यथा भक्तैर्विनाद्रवोमण्ड पेयभक्तसमन्वितम् ॥ अपिचास्यलक्षणविधि

मण्डनता । स्त्री॰ प्रसाधनत्वे ॥

मण्डप । पु॰ न॰ जनाश्रये । जनविश्रामसद्मनि । मण्डनम् मडि । घञ् । मण्ड पाति । पारक्षणे । धातोऽनुपसर्गेक ॥ देवादिद्सवेश्मनि ॥ त्रि॰ मण्डपानकर्त्तरि ॥ मण्ड पिबति । पा॰ । क ॥

मण्डपी । स्त्री॰ निष्पाव्याम् ।

मण्डयन्त । पु॰ नटे ॥ वधूसमूहे । चन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायाइर्षेच । तृभूवहिवसीत्यादिना॰ झच्॰ सचषित ।

मण्डयन्ती । स्त्री॰ योषिति । वधूम् ॥ नव्याम् ॥ षित्वानृङीष् ॥

मण्डयमान । त्रि॰ मण्डनकुर्वाणे ॥ मण्डयति॰ तच्छील । मडि॰ । ताच्छील्यवयोवचनशक्तिषुचानश् ॥

मडरी । स्त्री॰ घुर्घुर्याम् ॥

मडल । पु॰ कुक्कुरे ॥ सर्पप्रभेदे ॥ न॰ परिधौ चन्द्रसूर्ययोर्वर्हिर्वेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमडले ॥ य॰वातेनमडलीभूता सूर्या चन्द्रमसो करा । मालाभाव्योम्नितन्वन्तो परिवेश प्रकीर्तितश्चति ॥ चक्रवाले । मडलाकारेणपरिणतेसमूहमात्रे ॥ चतुरस्रादौ ॥ यथा। चतुरस्रचिकोणबावर्त्तुलचार्द्धचन्द्रकम् । कर्तव्यमानुपूर्वेणब्राह्मणादिषुमडलमिति ॥ कोठरोगे । मडलवत्कुष्ठे ॥ देशे ॥ समन्ताद्विंशतियोजने । चत्वारिंशद्योजनेवादेशश्चलिकेचित् ॥ द्वादशराजके ॥ द्वादशराजमु द्वादशराजमडलतुकामन्दकेनोक्तं । यथा । अरिर्मित्रमरेर्मित्रमित्रमित्रमत परम् । तथारिमित्रमित्रच स्वविजिगीषोः पुर स्थिता ॥ पार्ष्णिग्राह स्मृत पश्चात्तदाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैवविजिगीषोस्तुपृष्ठत मडलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर । अनुग्रहेसंहतयो समर्थोव्यस्तयोर्वधे ॥ म डलाद्वहिरेतेषामुदासीनोबलाधिक । अनुग्रहेस हतानाव्यस्तानाञ्चवधेप्रभु ॥ पञ्चविजिगीषो पुर सरा । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रान्दासारा श्चेतिपृष्ठतश्चत्वार । मध्यमोदासीनौद्वौ । विजिगीषुरेकइत्येवद्वादशराजमडलम्भवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते । गदायुद्धेगतिभेदे ॥ धन्विकास्थानपञ्चकान्तर्गतस्थितिविशेषे ॥ यथा । म डलाकारपादाभ्यामडलस्थानमीरितम्॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥ व्यूहविशेषे । यथा । तिर्यग्वृत्तिश्चदड स्याद्भोगोन्वावृत्तिरेवच । मडलसर्वतोवृत्ति पृथग्वृत्तिरसहत ॥ मडयति। मडि॰ । वृषादित्त्वात्कल ॥ मडं

भूषांलातिवा । मडते॰ इतिवा ॥ यद्वा । मडमस्त्यस्य । सिध्मादित्वा ल्लच् ॥ त्रि॰ निवद्दे । विम्बे ॥
मण्डलकम् । न॰ विंबे ॥ कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पु॰ कुक्कुरे ॥ मण्डलमिव । इवेप्रतिकृताविति कन् ॥
मण्डलनृत्यम् । न॰ हल्लीषे । मण्डलाकारनृत्ये ॥
मण्डलपत्रिका । स्त्री॰ रक्तपुनर्नवायाम् ॥
मंडलसङ्कम । पु॰ राशिसङ्कमे ॥
मडलाग्र । पु॰ कृपाणे । खङ्गे ॥ मडलमग्रमस्य ॥
मडलायितम् । न॰ वर्तुले ॥
मडलाधीश । पु॰ मडलेश्वरे । मध्यमे ॥
मंडलिका । स्त्री॰ परिधौ ॥ मडलात् स्वार्थेकः । कात्पूर्वस्येकारः ॥ मडल्याम् ॥ स्वार्थेके॰ केण ॥
मण्डली । पु॰ भुजङ्गे ॥ विडाले ॥ जाहके ॥ गोनासे॰ सर्पे ॥ वटवृक्षे ॥
मण्डली । स्त्री॰ मण्डलाकारेणपरिणतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीष् ॥
मण्डलेश । पु॰ एकजन्मनि । भयापद्दे । मण्डलेश्वरे ॥ शाण्डक्यादेर्व्या स्थाने ॥ मण्डलस्येशः ॥
मण्डलेश्वर । पु॰ नृपान्तरे ॥ भूम्यर्कादेशाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपस्यच । योराजातच्छतगुणः सएवमण्डलेश्वरः ॥ मण्डलस्यपरिमिताद्दिरूपस्यदेशस्येश्वरः ॥
मण्डहारक । पु॰ शौण्डिके ॥ मण्डसुराग्रमसहरति । हृञ्० । कर्मण्यण् । स्वार्थेकः ॥
मण्डा । स्त्री॰ आमलक्याम् ॥ सुरायाम् ॥ ॥ मण्डे पचाद्यजन्ताट्टाप् ॥
मण्डित । पु॰ वीरगणाधिपविशेषे ॥ त्रि॰ भूषिते ॥ मंडते । मण्डि॰ क्त ॥
मण्डुक । पु॰ सङ्ग्रहे ॥
मण्डूक । पु॰ गढवर्चसि । दर्दुरे । भेके । शोणके ॥ मुनिविशेषे ॥ न॰ बन्धविशेषे ॥ मण्डयति॰ जलाशयम्॰ मडतेवा । मण्डि॰ । शलिमण्डिभ्यामूकण् ॥
मण्डूकपर्ण । पु॰ पत्रोर्णे । श्योनाकवृक्षे ॥ शोणके ॥ मडूकइवपर्णमस्य ॥ कपीतने ॥
मण्डूकपर्णी । स्त्री॰ मञ्जिष्ठायाम् ॥ ब्राह्मयाम् ॥ गोजिह्विकौषधौ ॥ आदित्यभक्तायाम् ॥ मडूकवत्पर्णमस्याः । पाककर्णेतिङीष् ॥
मण्डूकमाता । स्त्री॰ ब्राह्म्याम् ॥
मडूका । स्त्री॰ मञ्जिष्ठायाम् ॥
मडूकी । स्त्री॰ मडूकपर्ण्याम् ॥ धृष्टयो

षिति । भेक्याम् ॥ ब्राह्मयाम् ॥ सूर्यभक्तायाम् ॥

मडूरम् । न० लौहमले । सिंहाणे । शिङ्खाणे ॥ ध्मायमानस्यलोहस्यम लमडूरउच्यते । यल्लोहयद्गुणप्रोक्तं तत्किट्टमपितद्गुणम् ॥ शतोर्द्धमुत्तमकिट्टंमध्यञ्चाशीतिवार्षिकम् । अधमम्षष्ठिवर्षीयंततोहीनोविषोपमम् ॥ मूछते ।मडि० । खर्जूरादित्वादूर ॥

मडोदकम् । न० चित्तरागे ॥ चातपेणे । चालिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाने ॥ अर्चिते ॥ शिष्टसमते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्त ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्ग । पुं० मुनिविशेषे ॥ मेघे ॥

मतङ्गकेदार । पु० तीर्थविशेषे ॥

मतङ्गज । पु० गजे । हस्तिनि ॥ मतङ्गात्कर्षेजात । जनी० । पञ्चम्यामजाताविति ड ॥

मतल्लिका । स्त्री० प्रशस्ते ॥ मत० मतिम्० अलति । अलंभूषणादौ । ण्वुल् । पृषोदरादित्वाटस्यल । प्रशस्त पुरुष ० पुरुषमतल्लिका । मतल्लिकायारूढिशब्दत्वात्० प्रशसावचनैश्चेतिसमास ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तस्यलक्षणयथा । स्वपक्षेदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा । इ० गो० सूत्रम् । ६२ ॥ अस्यार्थ । दोषाभ्युपगमात्० दोषमनुकृत्येत्यर्थं । यथाशब्दोनित्य श्रावणत्वादित्युक्ते ०ध्वनावनैकान्तिकत्वेन हेत्वाभासोयमित्युक्ते० शब्दोऽनित्य कृतकत्वादितिसाधितेध्वनेरपिपक्षत्वान्नदोष इत्युक्ते० असिद्धत्वात्तवापिहेत्वाभासोयमित्युक्ते० सोयंमतानुज्ञयानिगृहीत स्याद प्रतिषिद्धमनुमतभवतीतिस्वपक्षे दोषाभ्युपगमात् ॥ इति ॥ ६२ ॥

मति । स्त्री० इच्छायाम् ॥ धियि ॥ बुद्धौ । यस्ययस्य [illegible] तस्यमतिस्तादृशीभवेत् ॥ स्मृत्याम् ॥ श्रुतस्यमनने ॥ मतिकरौषध यथा । पाठाईजीरकेकुष्ठमश्वगन्धाजमोदकम् । वचात्रिकटुकञ्चैवलवणाचूर्णमुत्तमम् ॥ ब्राह्मीरसेभावितञ्चसर्पिर्मधुसमन्वितम् । सप्ताहभक्षितंकुर्यान्म [illegible] मतिपरामितिगरुडपुराणम् ॥ मन्यतेऽनया । मनज्ञाने । क्तिन् ॥ मतिर्मनन तर्कोमन्तव्यविजयश्च दर इति छान्दोग्यमहाभाष्यम् ॥ आर्ये ॥ शाकभेदेइत्यजयपाल ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमति । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृतेतिविशेष ॥

मतिगर्भ । त्रि० प्रतिभासारे ॥
मतिदा । स्त्री० ज्योतिष्मत्याम् ॥ शि मृडीक्षुपे ॥
मतिभ्रम । पु० भ्रमे ॥ मतेर्भ्रम ॥
मतिभ्रान्ति । स्त्री० मतिभ्रमे । मिथ्यामतौ । मतेर्भ्रान्ति ॥
मतिमान् । त्रि० प्राज्ञे ॥
मतिविभ्रंस । पु० उन्मादरोगे । मतेर्भ्रंसोनाशोयेन ॥
मतुवर्थीय । पु० मत्वर्थीयेषुप्रत्ययेषु ॥ बाहुलकान्मतुवर्थशब्दाच्छ ॥ शैषिकान्मतुवर्थीयादितियथा ॥
मत्कुण । पु० मकनादृतिख्यातेनिर्विषाणेभे । कालेप्यजातदन्ते गजे ॥ निश्श्मश्रुपुरुषे ॥ उदृदशे । रक्तपायिनि । रक्ताङ्गे । मत्ताश्रये० कीटविशेषे । उडुस० मागुण० खटमल० हि०भाषा ॥ नारिकेले ॥ जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पु० निर्लोमयोनौ ॥
मत्कुणारि । पु० इन्द्राशने । भङ्गायाम् ॥
मत्त । पु० प्रभिन्ने । क्षरन्मदेहस्तिनि । गर्जिते ॥ धुस्तूरे ॥ कोकिले ॥ महिषे ॥ त्रि० हृष्टे ॥ मदिरामत्ते ॥ क्षीबे माद्यतिस्म । मदीहर्षे ; गत्यर्थेतिक्त । नध्याख्येतिननत्व ॥
मत्तकाशिनी । स्त्री० अत्युत्तमनार्याम् । वरवर्णिन्याम् ॥ मत्ता० क्षीबेवकाशतेभाति । काशृदीप्तौ । कत्तर्युपमानइतिणिनि ॥
मत्तकासिनी । स्त्री० वरारोहायायोषिति ॥ मत्तेवकासते । कासृशब्दकुत्सायाम० कसगतिशासनयोर्वा । कर्त्तर्युपमानइतिणिनि ॥
मत्तकीश । पु० हस्तिनि ॥
मत्तवारण । पु० प्रक्षिप्तकाटकुञ्जरे । मत्तगजे ॥ न० प्रासादवीथीभावरण्डे । कोठेकावरंडा० हि०भा० ॥ अपाश्रये । प्राङ्गणावरणे ॥ पूगचूर्णे ॥
मत्तमयूर । पु० अतिजगती १३ छन्द प्रभेदे । यथा । वेदैरन्ध्रैर्म्तौयसगामत्तमयूर । यथा । लीलानृत्यन्मत्तमयूरध्वनिकान्तम् ० नृत्यन्नीपामोदिपयोदानिलरम्यम् । रासक्रीडाहृष्टमनागोपवधूभि ० कंसध्वंसीनिर्जनवृन्दावनमाप ॥
मत्तमातङ्ग । पु० दण्डकप्रभेदे ॥ यथा । आदितोरागणाख्ये क्षयायनदत्ता सन्निमत्तमातङ्गनामामहादण्डक सन्मते० स्वान्तरेनसमादायमोदायचेतोविधेहिप्रभोभारतीरीतिविश्रान्तिभूस्त्वयत । विस्फुरत्सङ्गरप्राङ्गणेनागराजीसचीत्कारफूत्कारधाराकुलीसावधानोयथा० पन्नगाधीशशुद्धप्रबुद्धैकबुद्धिप्रकाशप्रवृत्तेहहृत्तथाखेऽपिनित्ययथा ॥
मत्तमातङ्गलीलाकर । पु० दण्डकप्र

भेदे ॥ यथा। यत्ररेफ पर स्वे च्छयागुम्फित ॥ सस्मृतोदण्डकोमत्तमातङ्गलीलाकर ॥ हेमगौरे वसानोऽशुकेइन्द्रनीलासितेवर्ष्मणि स्पष्टदिव्यानुलेपाङ्कितो॰हारतारा शुत्रयोनभाञ्चिवमालाञ्चितोभव्यभूषोज्ज्वलाङ्ग समसीरिणा । अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेनलीला परीहासहासोर्मि कौतूहले क सरङ्गाद्रिग पातुनश्चक्रपाणिर्गति क्रीडयामत्तमातङ्गलीलाकर ॥

मत्ता । स्त्री॰ मदिरायाम् ॥ मदेनमूढायाम् ॥ पङ्क्तिच्छन्द १० प्रभेदे ॥यथा।त्वं यामत्तामभसगदृष्टा ॥ यथा । पीत्वामत्तामधुमधुपाली॰- कालिन्दीयेतट॰नकुञ्जे । उद्दीव्य त्नीव्रजजनरामाकामासक्तामधुजितिचक्रे ॥

मत्ताक्रीडम् । न॰ विकृतिच्छन्द , २३ प्रभेदे ॥ यथा । मत्ताक्रीड वक्षिष्वा शायतिमयुगगयुगमनुलघुगुरुभि ॥ यथा । मुग्धोन्मीलन्मत्ताक्रीड मधुसमयसुलभमधुरमधुरसात्॰गानेयानेकिञ्चितस्यन्दत्पदमरुणनयन युगलसरसिजम् । रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयविहितभुजरसम्॰सान्द्रानन्द वृन्दारण्ये स्मरजहरिमनवचरणपरिचयम् ॥

मत्तालम्ब । पु॰ प्रासादावरणे । च पाश्रये । प्रग्रीवे । मत्तवारणे ॥

मत्तेभगमना । स्त्री॰ स्त्रीविशेषे । मत्तगजगामिन्याम् ॥ मत्तेभवद्गमनयस्या सा ॥

मत्पूर्व । त्रि॰ मदीयप्राचीने ॥

मत्यम् । न॰ दारुादिमुष्टौ । वल्टे । वैटा॰इ॰भा॰ ॥ मतस्यानम्॰तस्य कारणम्॰भाव साधन वा । मत जनहलात्कारणजल्पकर्षेषु॰इतियत् ।

मत्वर्थीय । पु॰ मतुवर्थीयेप्रत्यये ॥ मत्वर्थाच्छ । बहुलवचनाट्कारलोप ॥

मत्स । पु॰ मत्स्ये ॥

मत्सगण्ठ । पु॰ गलपट्टे । मत्सघण्ट इ॰गौ॰दे॰प्र॰व्यञ्जनविशेषे ॥

मत्सर । पु॰ मात्सर्ये । अन्यशुभद्वेषे ॥ क्रोधे ॥ वैरे ॥ त्रि॰असह्यपरसम्पत्तौ।परोत्कर्षासहनपूर्विकाशास्त्रोत्कर्षवाञ्छायाम् । स्वप्रयोजनप्रतिसन्धान विना पराभिमतनिवारणेच्छायाम् ॥ अन्यशुभद्वेषवति ॥ कृपणे ॥ माद्यतिपरत्कर्षे । मदीहर्षे । कृधूमदिभ्य कित्इति सर ॥ मत्सरहर्षहेतुमितिवेदभाष्यम् ॥ आत्मधिक्कारविशेषे ॥ यथा । निन्दन्तिमासदालोकाधिगस्तुममजीवनम् । इत्यात्मनिभवेद्यस्तुधिक्कार सचमत्सर ॥

मत्सरा । स्त्री० मक्षिकायाम् ॥
मत्सरी । त्रि० अन्यशुभद्वेष्टरि । कर्पणे । दुर्जने । पिशुने । सूचके । नीचे । द्विजिह्वे । खले ॥ मत्सरोऽस्त्यस्यास्मिन् वा । इनि ॥
मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्यशब्दात्स्त्रीत्वेच्छायांगौरादित्वान्ङीषि०सूर्यतिष्येतियलोप स च मत्स्यस्यङ्यासिद्ध ॥
मत्स्य । पु० मीनान्तरे ॥ अभिस्य यादवे । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गतेचतुर्दशसहस्रश्लोकात्मकेपुराणविशेषे ॥ दशावतारान्तर्गतप्रथमावतारे ॥ मत्स्या भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरेभागेकच्छाच्चपश्चिमेशिवे । मत्स्यदेश समाख्यातोमत्स्यवाहुल्यकारक ॥मत्स्यानानिवासोजनपद मत्स्या ।अणोलुप।लुपियुक्तवद्भाव ॥ देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । स्तनत्यस्मीति मदे स्यन् । जनिदेश्यादिना० श्चोवा। स्वरेभेद ॥ पु० स्त्री० जलजन्तुविशेषे । पृथुरोम् णि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहिताद्यास्तुयेजीवास्ते तु तस्या परिकीर्त्तिता ॥ अथैतेषांगुणा । यथा । मत्स्या स्निग्धोष्णमधरा गुरव कफपित्तला । वातघ्नाश्च हयास्त्वष्यारोचकावलवर्द्धना ॥ अध्वव्यवायसक्तानादीप्ताग्नीनाञ्चपूजिता ॥ शुष्कमत्स्यानवल्या स्युर्दुर्जराविङ्विबन्धना । दग्धमत्स्योगुणे श्रेष्ठ पुष्टिकृद्बलवर्द्धन ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैलेनसर्वसम्भारसम्भृता । सूक्ष्मामत्स्या स्वादुरसादोषत्रयनिवर्हणा । परसूक्ष्मास्तुयेतेषु तेसर्वेपुस्त्वनाशना ॥ अथकूपादिमत्स्यानांगुणा । कौपमत्स्या शुक्रमूत्रकृछ्रघ्ना अविवन्धदा । सरोजामधुरा स्निग्धावल्यावातविनाशना ॥ नादेयाश्च हयामत्स्या गुरवोनिलनाशना ॥ रक्तपित्तकरावृष्या स्निग्धोष्णा स्वल्पवर्चस ॥ चौड्या पित्तहरा स्निग्धामधुरालघवोहिमा । ताडागागुरवोवृष्या शीतलाबलमूत्रदा ॥ ताडागवन्निर्भरजाबलायुर्मतिदक्करा ॥ अथर्त्तुविशेषेमत्स्यगुणा । यथा । हेमन्तेकूपजामत्स्या ० शिशिरेसारसाहिता । वसन्तेतुनादेयाग्रीष्मेचौण्ड्यासमुद्भवा ॥ तडागजास्तु वर्षासुताश्चपथ्यानदीभवा । नैर्झरा शरदिश्रेष्ठानिर्धेयोयमुदाहृत ॥ अपि च । त्रि शस्तानि

न्दितामत्स्या सर्वे शल्कयुताहिता । वपु स्थैर्य्यकरावीर्य बल पुष्टिविवर्द्धना ॥ ह्रदकुल्याजल निर्झरतडागवापीजलेषु येमत्स्या । तेऽतिजडानादेयायथोत्तर लघुतरास्तुदेया ॥ चाराम्बु मत्स्या गुरवोविदाहिनोविष्ट भदास्ते लव णाणवादिजा । नानाश्रिता स्वादुजलस्थिताश्चपिच्चे याजडास्ते पितथाश्रिताद्रुमे ॥ चुद्रमत्स्या स्वादुरसादोषत्रयविनाशना । लघु पाकारुचिकरा सर्वदातेहि तामता । श्रतिसूक्ष्मा पु स्त्व हरारुच्या कासानिलापहा । मत्स्याण्डगुणास्तु । मत्स्यग र्भोभृश वृष्य स्निग्ध पुष्टिकरो गुरु । कफमेद प्रदोवल्योग्ला निकृन्मेहनाशन ॥ अथरन्धन प्रकारा मत्स्यखण्डानिसङ्कृ ष्यचालयेत्प्रथम जले । ततोवि शनतक्राभ्यावहुश चालयेतपुन ॥ गन्धनाशनप्रकारस्तु । हरिद्रा शुण्ठीधान्याककटु तैलैर्विमर्दये त् । प्रचाल्यहिङ्गु नालिम्पेद्गन्ध स्तेनोपशाम्यति ॥ मत्स्योत्तमरन्ध नन्तु । तप्ततैलेचिपेद्धान्य कास मर्द सहिङ्गु कम् । भृष्ट सलवणात क्रेमत्स्य चिप्त्वापुन पचेत् ॥ अर्द्ध पक्के चिपेद्दल सितचूर्ण सनागरम् ।

दग्धहिङ्गुविनि चिप्यसाधयेन्मत्स्य मुत्तमम् ॥ मत्स्यपिष्टिकातु । गत त्वक्कण्टकोमत्स्योवेसआरेणसयुत । शिलायांपेषितोभूय प्रोच्य तेमत्स्यपिष्टिका ॥ तैलेविपाचयेत्स श्चाच्चतुर्थसाम्लसयुतम् । वेसवारेण सयुक्त शिलाय पेषयेत्पुन ॥ अ नयापूर्ववत्कुर्यान्मासस्येवप्रकार का । वटिकावटकाद्याश्चसूपका रधियाचिता ॥ मत्स्यपूरणम् तक्रेणस्विन्नमत्स्यस्यखण्डान्प्रचाल्य पेषयेत् । वीजपूराद्र मरिचैर्हिङ्गुसै न्धवजीरकै ॥ सयुतकटुतैलाद्यै र्घृतेपक्वाथचूर्णयेत् ॥ मत्स्यपुटपा कस्तु । गतत्वक्चालितमत्स्य कद लीफलवेष्टितम् । मृदालिप्तपुटेपक्व सस्कृतदाडिमादिना ॥ यद्वमत्स्य पु टपक्वजीरतण्डुललेपितम् । तापि कायापुन पक्व समिश्रमरिचादि ना किचिद्दन्यमृतमस्तिपुरेसुरा णाकेचिद्दन्तिवनिताधरपल्लवेषु । ब्रूमोवयसकलशास्त्रविचारवुद्धया जम्बीरनीरपरिपूरितमत्स्यखण्डेद्रु तिमणिमिश्र ॥ मत्स्यभक्षणनिषेधो यथा । योयस्यमासमश्नातिसत न्मासादउच्यते । मत्स्याद सर्वमा सादस्तस्मान्मत्स्यान्विवर्ज्जयेत् ॥ शि श्यन्यपश्चिमेभागेमत्स्यभुक्पतितो भवेत् । अन्यथकामतोजग्ध्वासोपवा

ससत्याहवसीत्॥ अन्नानतस्तदर्हम् ॥ मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान्सशल्कान्भुञ्जीतमासरौरवमेव च । निवेद्यदेवताभ्यस्तुब्राह्मणेभ्यस्तनान्यथा ॥ सफरंसिंहतुण्डंश्च तथा पाठीनरोहितौ । मत्स्यास्त्वेतेसमुद्दिष्टाभक्षणायतपोधनैः ॥ प्रोक्षितं भक्षयेदेषामांसञ्चद्विजकाम्यया । यथाविधिनियुक्तस्तुप्राणानामपिचात्यये ॥ इतिकौर्मेउपरिभागे १६ अध्याय ॥ अपिच । पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययो । राजीवान्सिंहतुण्डांश्चशल्कांश्चैवसर्वश ॥ इतिमनु ॥ अनिवेद्यनभोक्तव्यमत्स्यमांसञ्चयद्भवेत् । अन्नं विष्ठापयोमूत्रं यद्विष्णोरनिवेदितम ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेण्याम् । खालु इ० इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्यमातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्यगन्धइवगन्धोऽस्या । उपमानाच्चेतिइत्त्वाभावश्छान्दस ॥

मत्स्यगर्भ । पुं० मत्स्याण्डे ॥

मत्स्यघण्ट । पु० मत्स्यघटितव्यञ्जनविशेषे । गलघण्टे ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यण्डिका । स्त्री० मत्स्याण्ड्याम् । राव० इ० भा० ॥ मत्स्यण्डिकाखण्डसिता क्रमेणगुणवत्तराइतिवाग्भट । मत्स्यण्डीव । स्वार्थेकन् ॥

मत्स्यण्डी । स्त्री० फाणिते राव० इ० काशीभाषा ॥ तत्तस्यणम् ॥ यथा । इक्षोरसोय सम्यक्कोथन किञ्चिद्द्रवान्वित । मन्द यतस्यन्दते तस्मान्मत्स्यण्डीतिनिगद्यते ॥ मत्स्यण्डीभेदिनीवल्यालघ्वीपित्तानिलापहा । मधुराबृंहणीवृष्यारक्तदोषापहास्मृता ॥ मत्स्याण्डाकारत्वात् । मत्स्यण्डी । शकन्ध्वादि ॥ मदमुद्वास्यन्दते । स्यन्दू प्रस्रवणे । कर्मण्यण् । ङीप् । पृषोदरादि ॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेण्याम् ॥ मत्स्याधीयन्तेऽत्र । करणाधिकरणयोरितिधाञोल्युट् ॥

मत्स्यध्वज । पु० मत्स्याकारेध्वजे ॥ गिरिकामरूपप्रसिद्धे पर्वते ॥ यथा । मणिकूटाचलात्पूर्वं मत्स्यध्वजकुलाचल । निर्दग्धोयत्र मदनो हरनेत्राग्निनापुनरित्यादिकालिकापुराणे ॥ ८१ ऽध्यायेऽस्ति ॥

मत्स्यनाशक । पु० कुररपक्षिणि । त्रि० मीननाशककर्त्तरि ॥

मत्स्यनाशन । पु० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् । कृष्णभेद्याम् । कटुक्याम् ।। मत्स्यानापित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह । पुं० मत्स्यस्यव्यञ्जनान्तरे ।। विषिश प्रलेहे ॥

मत्स्यबन्धी । पु० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमण्डक । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकाकृत्वापर्यस्यामण्डलाकृतिम् । धासुरीरससंयुक्तान्ना-सयुक्ताधूलनेनतु । मत्स्यमण्डक-मुच्यते सूदशास्त्रविचक्षणैः ॥

मत्स्यरङ्क । पु० )<br>मत्स्यरङ्कक । पु० ) पक्षिविशेषे । मत्स्याशिनि । जलमङ्गौ । मणीचकि । माचराङ्गा०इ०गौ०दे०भा० । मच्छरङ्ग०इ०दे०भा० ॥

मत्स्यराज । पु० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानाराजा । टच् ॥

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानावेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥

मत्स्यसन्तानिक । पु० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोङ्गारेसलवणोवेसवारैरुपस्कृत । साद्रक कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उत्तरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० तोयपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् ॥ यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीग्राहिणीशीताकुष्ठपित्तकफास्रजित् । लघुस्तिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥ इतिराजनिघण्ट ॥ गण्डदूर्वायाम् ॥ हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्या । मत्स्यशब्द स्वाङ्गवयवेगौण । बहुव्रीहाविति षच् । ङीष् ॥ मच्छेछी०इतिलोकप्रसिद्धौषधौ ॥

मत्स्यात्खग । पु० मत्स्यानत्ति । अद० । क्विप् । मत्स्याक्षासौखगश्च ॥

मत्स्यादनी । स्त्री० लाङ्गल्याम् । तोयपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्विप् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी०खालुइ०इ०गौ०देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ० । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन । पु॰ मत्स्यरङ्कविहङ्गमे ॥
मत्स्योडरी । स्त्री॰ मत्स्य इ॰ व्यञ्जनान्तरे ॥ कासमर्दं कचूर्णेनमत्स्यपिष्टिर्नियोजिता । भर्जिताकटुतैलेनमत्स्योडरीइतीरिता ॥
मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥
मथन । पु॰ गणिकारिकायाम् ॥ न॰ दध्यादिविलोडने । विलो॰ना॰ इ॰भा॰ ॥ मथति । मथे विलोडने । ल्युट् ॥
मथितम् । न॰ निर्जलैसरीवर्जितेविलोडितेदधिनि ॥ सरोदकविहीनन्तुमथित कफपित्तनुत । त्रि॰आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म मथे॰ । क्त ॥
मन्थ । पु॰ मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ इनि कित । कितत्वान्नलोप ॥ मन्थामन्थानदण्डे चवज्रे वातेपिचस्मृत ॥
मथुरा । स्त्री॰ मधुपुर्याम । श्रीकृष्णजन्मभूमौ । मधुरायाम ॥ मथति । मथे॰ । मन्दिवाशिमथिचतीच्छुरच ॥ मथुरात्रविलोमेनसध्यमोगयदक्षरम, योनस्मरतिलोकेस्मि सन्मध्य तन्मुखोपरि ॥
मथुरेश । पु॰ श्रीकृष्णे ॥
मथूरा । स्त्री॰ मथुरायाम ॥
मद । पु॰ रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद । एतेमदामदान्धानातएवहिसतादमा ॥ हर्षे । आमोदे ॥ इभदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यामेढ्राच्चनेत्राभ्याञ्चमदस्रुति । करान्नासारन्ध्राभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्ये विकारविशेषे ॥ क्षैव्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिहिसर्व इतिस्वाभाविकधर्म्मप्रकाशन मदधर्म्म उत्कर्षरहितस्वेप्युत्कर्षविशेषाध्यारोपे ॥ अशास्त्रीयविषयसेवनोन्मुखत्वे ॥ मदनम्॰ माद्यत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गइत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ कल्याणवस्तुनि ॥ इतिधरणि ॥ बुद्धेर्मोह समभवदहङ्कारादभून्मद । तस्य लक्षण यथा । अहमहात्माधनवान्मत्तुल्य कोस्तिभूतले । इतियज्जायतेचित्तेमद प्रोक्त सकोविदै ॥
मदक । पु॰ मध्वासवे ॥
मदकट । पु॰ षण्डे । गोपले ॥
मदकार । पु॰ आनन्दजनके ॥

मदकल । पु॰ अल्पमदगजे । मदो
त्कटे ॥ त्रि॰ मदेनव्यक्तवचने ।
मदेनकलते । कलशब्दसङ्ख्यान
योः । अच् ॥ मदेसति॰ कलो
ध्वनिर्यस्येतिवा ॥

मदगन्ध । पु॰ सप्तच्छदवृक्षे ॥ मद
सदृशोगन्धोस्य ॥

मदगन्धा । स्त्री॰ सुरायाम् ॥ अतस्या
म् ॥

मदगमना स्त्री॰ महिष्याम् ॥

मदघ्नी । स्त्री॰ पूतिकायाम् ॥

मदच्युत् । पु॰ अमृतरसच्यावयित
रि॰ अमृतरूपे सोमे ॥ मदं मदकर
मानन्दकरं रसममृतरूपं च्यावयत्य
सौमदच्युत् ॥

मदन । पु॰ मन्मथे । कामदेवे ॥
वसन्ते ॥ धुस्तूरे ॥ पीण्डीतके ।
मरुवके । श्वसने । मयनफलइति
भाषा ॥ मदनोमधुरस्तिक्तोवीर्यो
ष्णोलेखनोलघुः । वातकृद्विद्रधि
हर प्रतिश्यायव्रणास्रक ॥ रूक्ष
कुष्ठकफानाहशोथगुल्मव्रणापहः ॥
सिक्थके । मधूच्छिष्टे । मैंण॰
मोम॰ इतिचभाषा ॥ मदनं मृदु
सुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्न
सन्धानकृद्वातकुष्ठवीसर्परक्तजित्
॥ माषे ॥ खदिरे ॥ लग्नात्सप्त
मभवने ॥ आलिङ्गनविशेषे ॥ तत्
स्वरूपं यथा । नायकोनायिकाया
कण्ठे हस्तं दत्त्वा॰ द्वितीयहस्ततस्या
मध्यदेशेदत्त्वायदाश्लिषति॰ इति
कामशास्त्रम् ॥ मदयति मदीह
र्षग्लेपनयोः । ल्यु ॥ न॰ ज
ले ॥

मदनकाकुरव । पु॰ पारावते ॥

मदनगृहम् । न॰ लग्नात्सप्तमचक्रे
॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथम
कुरुषटकलमन्तकुण्डलमिहमध्ये
वसुतुरगधरसन्तापहरम्॰ दशवसु
भुवनाष्टभिरत्रचरणमभिभवतिवि
रामोयदिललितकविवलयहितम्
फणिनायकभणितजगणविरहित
चतुरत्वारि शत्कलकलितभुवनेमहि
तम॰ वृत्तरसनिवह तन्मदनगृह नरप
तिस सदिलब्धपद गुरुशोकगदम ॥ य
था । विरहानलतप्तासीदतिसुप्तारचि
तनलिनदलतल्पतले मरकतविम
ले॰ करकलितकपोल गलितनिचो
ल नययतिससततरुदिते ननिशाम
निमेषदृशा । नसखीमभिनन्दति
कजमनुविन्दतिनिन्दतिहिमकर
करनिकर परितापकरम्॰ मनुते
हृदिभार मुक्ताहार दिवसनिशा
करदीनमुखी जीवितविमुखी ॥

मदनगोपाल । पु॰ श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री॰ चैत्रशुक्लचतुर्द
श्याम् ॥

मदनत्रयोदशी । स्त्री॰ चैत्रशुक्लत्रयो-

दश्याम् ॥

मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्याम् ॥

मदनपाठक । पु० कोकिले ॥

मदनभवनम् । न० लग्नात्सप्तमस्थाने ॥

मदनमोहन । पु० श्रीकृष्णे ॥

मदनरस । पु० शृङ्गारे ॥

मदनललिता । स्त्री० अष्टिसप्तकच्छन्द १६ प्रभेदे ॥ म्भौनोम्नौगोमदनललितावेदै षड्कृतुभि । यथा। विभ्रष्टस्रग्गलितचिकुराधौताधरपुटा०म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला । राधाच्चर्यमदनललिताम्दोलाऽलसवपु कंसारातेरतिरसमहोचक्रेऽतिचटुलम्॥

मदनलव । पु० अस्लाग्नि ॥ मदनस्लव ॥

मदनशलाका । स्त्री० कामोद्दीपकभैषज्ये ॥ सारिकायाम् ॥ कोकिलायाम् ॥

मदनसारिका । स्त्री० पक्षिप्रभेदे । सारिकायाम् । चित्रलोचनायाम् । सालिक्० हु० गो० भा०

मदना । स्त्री० सुरायाम् ।

मदनायक । पुं० कोद्रवे ॥

मदनाङ्कुश । पु० नखे ॥ लिङ्गे ॥

मदनाडी । स्त्री० गजदानशिरायाम् ॥ तात्रसप्तधयथाहपाल । करात्कटाभ्यामेढ्राच्चनेत्राभ्याञ्चमदच्युतिरिति ॥

मदनायुध । पु० भगे ॥ योनौ ॥

मदनायुष । पु० कामवृद्धिक्षुपे ॥

मदनालय । पु० कुसुमधनुषोमन्दिरे । स्मरागारे । भगे ॥ मदनभवने ॥

मदनावस्था । स्त्री० उद्वेगरूपायाकामावस्थायाम् ॥ कथतस्यालाभोभविष्यतीति ॥

मदनी । स्त्री० सुरायाम् ॥ कस्तूर्याम् ॥ अतिमुक्तके ॥

मदनीय । त्रि० मदकारिणि । मदयति । मदी० । कृत्यल्युटोबहुलमितिकर्त्तरि अनीयर् ॥

मदनीया । स्त्री० धातक्याम् ॥

मदनेच्छाफल । पु० वृक्षरसाले ॥

मदनोत्सव । पु० सुवसन्तके । होलाकायाम् । होली० हु० भा० ॥

मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥

मदप्रयोग । पु० करिणामदोद्गमे । व्यसारे ॥

मदनभञ्जनी । स्त्री० शतमूल्याम् ॥

मदमूढबुद्धि । त्रि० मदेनविपरीतप्रज्ञे ॥ मदमूढबुद्धिषुविवेकिताकृत ॥

मदयन्तिका । स्त्री० मल्ल्याम् ॥

मदयन्ती । स्त्री० मल्ल्याम् ॥ वनमल्लिकाया ॥

मदयिता । त्रि० मादके ॥ मदयति । मदी० । लृश् शब्द ॥

मदयित्नु । पु० कामदेवे ॥ शौण्डिके ॥ मेघे ॥ न० मद्ये ॥ मदयति । हर्षयति० ग्लेपयतिवा । मदी० । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुजिति० इत्नुच् । णेरयादेश ॥

मदलेखा । स्त्री० उष्णिक् ७ छन्द प्रभेदे ॥ मसगा स्यान्मदलेखा । यथा । रङ्गे बाहुविलग्नाहन्तीन्द्राग्म दलेखा । लग्नाभून्मुरशचौकस्तूरीरसचर्चा ॥

मदविक्षिप्त । पु० मत्तहस्तिनि ॥

मदव्यायाम । पु० मदाधिक्ये ॥

मदशाक । पु० उपोदकायाम् ॥

मदसार । पु० तूदवृक्षे । ब्रह्मकाष्ठे ॥

मदस्थलम । न० )
मदस्थानम । न० )मद्यपानस्थले । शुण्डायाम् । पानगृहे ॥

मदहस्तिनी । स्त्री० महाकरञ्जे ॥

मदहेतु । पु० धातक्याम ॥ मदस्य कारणे ॥

मदाढ्य । पु० तालवृक्षे ॥ त्रि०मद युक्ते ॥

मदाढ्या । स्त्री० लोहितभिण्ड्याम ॥

मदातङ्क । पु० मदात्ययरोगे ॥

मदात्यय । पु० मद्यपानजन्यरोगविशेषे । पानात्यये । मदव्याधौ ॥ निदानमस्तु । विषस्यैव गुणाहष्टा सन्निपातप्रकोपणा । तएव मद्येहश्यन्ते विषेतुवलवत्तरा ॥ तस्मादविधिपीतेनतथामात्राधिकेनच । युक्तेनचाहितैरन्नैरकालेसेवितेनच । मद्येनखलुजायन्ते मदात्ययमुखागदा ॥ अविधिप्रयुक्तमद्यविकारान्तरमप्युत्पादयतीत्याह । निर्भुक्तएकान्ततएवमद्य निषेव्यमाण मनुजेननित्यम् । उत्पादयेत्कष्टतमान्विकारानुत्पादयेच्चापिशरीरभेदम् ॥ हेत्वन्तरमप्याह । क्रुद्धेनभीतेनपिपासितेनशोकाभितप्तेनबुभुक्षितेन । व्यायामभाराध्वपरिक्षतेनवेगावरोधाभिहतेनवापि ॥ अत्यम्लभक्षावततोदरेणसाजीर्णभुक्तेनतथाऽबलेन । उष्णाभितप्तेनच सेव्यमान करोतिमद्य विविधान्विकारान् ॥ तेचविकाराग्रन्थान्तरेज्ञातव्या ॥ चिकित्सातु । मद्योत्थानान्तुरोगाणामद्यमेवहिभेषजम् । यथादहनदग्धानादहन स्वेदन हितम् ॥ मिथ्याविहितमद्येनयोव्याधिरुपजायते । मद्येनैवनिपीतेनमद्येनसहशाम्यति ॥ विशेषोन्यत्रद्रष्टव्य ॥

मदामद । पु० परमेश्वरे ॥ आत्मनि ॥ आत्माहिसमदोऽमदश्च०सहर्षोऽहर्षश्च०विरुद्धधर्मवानतोदेशि

कोपदेश विनाऽशक्योज्ञातुम् ॥

मदाम्नात । पु० गजढक्कायाम् । हा थोपरकाडक्का०ङ्०भा० ॥

मदाम्बर । पु० मत्तहस्तिनि ॥

मदायुध । पु० चतुर्दन्ते । ऐरावते ॥

मदार । पु० द्विरदे । हस्तिनि ॥ शूकरे ॥ धूर्त्ते । कामुके ॥ मत्तहस्तिनि । गन्धभेदे ॥ नृपान्तरे ॥ माद्यति । मदी० । अगिमदिमन्दिभ्यश्चारन् ॥ वन्धनविशेषे ॥

मदामर्द । पु० मल्लभेदे । राजशौवे ॥

मदालसा । स्त्री० मार्कण्डेयपुराणप्रसिद्धायाम्गन्धर्वकन्यायाम ॥ययापुत्रश्चारित ॥

मदालापी । पु० कोकिले ॥

मदाश्रय । त्रि० मदैकशरणे ॥

मदाह्वय । पु० कस्तूर्याम् ॥

मदिर । पु० रक्तखदिरे ॥ मदयति । मदि० । किरच् ॥

मदिरा । स्त्री० मादकद्रव्यविशेषे । सुरायाम् । हलिप्रियायाम् । वरुणात्मजायाम् । गन्धोत्तमायाम । प्रसन्नायाम् । कादम्बर्याम् । इरायाम् । मद्ये । सुप्रतिभायाम् । मोदिन्याम् । महानन्दायाम् । मैरेये । देवसृष्टायाम । अब्धिजायाम् । द्वादशविधेयं यथा । माध्वीकपानस द्राक्ष खार्जूर तालमै क्षवम् । मैरेय माक्षिकटाङ्क मधूक नारकेलजम ॥ मुख्यमन्नप्रकारोत्थ मद्यानिद्वादशैव च ॥ ऋतुविशेषे पेयमदिरायथा । गौडीतुशिशिरे पेया०पैष्टीहेमन्तवर्षयो । शरद्ग्रीष्मवसन्तेषुमाध्वीग्राह्यानचान्यथा ॥ कादम्बरीशर्करजादिमद्य सुशीतलं हृष्यकर मदाढ्यम् । माध्वीसम स्यात्तृणवृक्षजात मद्य सुशीत गुरुतर्पणञ्च ॥ अन्यथाकुरुते पान मद्य सन्तापशोषदम् । अन्नदोषमदाद्याद्विकारक मूर्च्छनञ्चतत् ॥ नवजीर्णमद्ययोर्गुणास्तु । मद्य नव सर्वविकारहेतुसर्वन्तुवातादिकदोषदायि । जीर्णं तुसर्वं सकलामयघ्नपुष्टिप्रद हृष्यकरञ्चदीपनम् ॥ मद्यप्रयोग कुर्वन्निशूद्रादिषुमहात्तिषु । द्विजैस्त्रिभिस्तुनग्राह्ययद्यप्युत्क्षीबयेम्मृतम् ॥ गौडीपैष्टीत थामाध्वीत्रिविधाचोत्तमासुरा । सैवनानाविधाप्रोक्तातालखर्जूरसम्भवा । तथादेशविभेदेननाना द्रव्यविभेदत । वहुधेय स्माख्याताप्रशस्तादेवतार्चने ॥ अन्ये द्वादशधामद्यभेदानाहुर्मनीषिण । उत्तमान्तभर्वत्त्वीतिनान्येषापृथगीरितम् ॥ प्रायशोभिनव मद्य गुरु दोषलमीरितम् । स्रोतसांशोधन जीर्ण दीपन लघु रोचनम् ।

हर्षं च प्रीणनं बल्यं मद्यं शोकश्रमापहम्। प्रागल्भ्यप्रतिभापुष्टिवीर्यतुष्टिस्वरप्रदम्॥ अपिच। सम्यग्विधिविधानेनसुसमाहितचेतसा। पिवन्तिमदिरामर्त्त्याअमर्त्त्याएवतेक्षितौ॥ आकृतिच्छन्दः २२ प्रभेदे॥ यथा। सप्तभकारयुतैकगुरुर्गदितेयमुदारतरामदिरा। यथा। माधवमासिविकस्वरकेशरपुष्पलसन्मदिरामुदितैर्भृङ्गकुलैरुपगीतवनेवनमालिनमालिकलानिलयम्। कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसत्वभजमाधविकामृदुनर्त्तनयामुनवातकृतोपगमा॥ माद्यत्यनया। मदीहर्षे। इषिमदिमुदीत्यादिनाकिरच्॥ मत्तखञ्जने॥

मदिराक्षी। स्त्री॰ मत्तनेत्रायाम्॥ मदिरावदक्षिणीयस्याः सा। यथा। अविदितसुखदुःखं निर्गुणं वस्तुकिञ्चिज्जडमतिरिहकश्चिन्मोक्षइत्याचचक्षे। ममतुमतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षोहिमोक्ष॥ इतिविटोक्ति॥

मदिरागृहम्। न॰ गञ्जायाम्। मद्यसंधानगृहे॥ मदिरायाः गृहम्।

मदिरासख। पुं॰ आम्रवृक्षे॥

मदिष्ठा। स्त्री॰ मदिरायाम्॥

मदी। स्त्री॰ चषकवस्तुनि॥ कृष्यङ्गे॥

मदीयम्। त्रि॰ मदकरे। हर्षोत्पादके। मदीयं सरः इतिवेददर्शनात्॥ मामके॥ ममेदम्। छः। मपर्यन्तस्यमादेशः॥

मदोत्कट। पु॰ अन्तर्मदेहस्तिनि। मदकले॥ मदेनदानेनाम्बुना॰ उत्कटः मत्तः॥ त्रि॰ मदमत्ते॥

मदोत्कटा। स्त्री॰ मदिरायाम्॥ मदेनोन्मत्तायाम्॥ मदेनउत्कटा॥

मदोदग्र। त्रि॰ मदोन्मत्ते॥

मदोदग्रा। स्त्री॰ नार्याम्॥

मद्गतप्राण। त्रि॰ मद्गजनार्थंजीवने॥ मद्गताः प्राणायस्य॥

मदोद्धत। त्रि॰ मत्ते॥ मदः पौरुषादिधर्मः तेनउद्धतः॥

मद्गु। पु॰ कारण्डवे॥ जलकाके॥ मज्जति। टुमस्जोशुद्धौ। भृमृशीत्यु। न्यङ्क्वादित्वात्कुत्वम्। सस्यजश्त्वेनदः। ब्राह्मणेनवन्दिभार्यायाजनिते॥

मद्गुर। पु॰ मगुरी॰ मागुर॰ इ॰ ख्यातेमत्स्ये॥ मज्जति। टुमस्जो॰। मद्गुरादयश्चेतिनिपातितः॥ यद्वा। माद्यति। मदी॰। मद्गुरादयश्चेत्युरच्॰ धातोर्गुरादेशः। मद्गुरोवातहृद्वृष्योबल्यः कफकरोलघुः॥ मद्गुरः खण्डरहितः कटुतैलेसुभर्ज्जितः। माणिमन्थनिशायुक्तोहिङ्गुनाधूपितोरसः। मद्गुरो-

वातहापथ्योरुच्योष्णोबल प्रद ।
। अग्निसञ्जननोहृद्यस्तद्दुक्ताचशृ-
ङ्गिका ॥
मद्गुरक । पुं० मद्गुरमीने ॥
मद्गुरवी । स्त्री० शृङ्गयाम ॥
मद्रक्त । त्रि० प्रेम्णामव्यनुरक्ते ॥
मद्यम् । न० सुरायाम् ॥ माद्यन्त्यनेन
। मदी० गदमदचरेत्यादिनाय-
त् ॥ अस्यलक्षणादि यथा । पेयय
न्मादकं लोके तन्मद्यमभिधीयते।
यथारिष्ट सुरासीधुरासवाद्यमनेक
धा ॥ गौडीपैष्टीतथामाध्वीचत्रिधा
चोत्तमासुरा। सैवनानाविधाप्रोक्ता
तालखर्जूरसम्भवा ॥ तथादेशविभे
देननानाद्रव्यविभेदत । बहुधेयस
माख्याताप्रशस्तादेवतार्चने ॥ तद्
द्वादशविधयथाहपुलस्त्य । पानस
द्राक्षमाधूकखार्जूरतालमैचवम् ।
माध्वीकटाङ्कमार्द्वीकमैरेयनारिके
लिजम् ॥ समानानिद्विजातीनाम
द्यान्येकादशैवतु । द्वादशन्तुसुरा
मद्यसर्वेषामधमस्मृतम् ॥ मद्य
सर्वं भवेदुष्णं पित्तकृद्वातनाशनम् ।
भेदनशीघ्रपाकञ्चरुक्षकफहरपरम्
॥ अम्लञ्चदीपनरुच्य पाचनञ्चासका
रिच । तीक्ष्णसूक्ष्मञ्चविशदंव्यवायि
चविकाशिच ॥ मद्य नवमभिष्यन्दि
त्रिदोषजनकसरम् । अहृद्य बृहण
दाहिदुर्गन्धं विशदगुरु ॥ जीर्णं तदे

वरोचिष्णुक्रमिश्लेष्मानिलापहम् ।
हृद्यसुगन्धिगुणवल्लघुस्रोतो विशोध
नम् ॥ सात्त्विकादिविभेदेनचेष्टाश्चे
यामनीषिभि । तैर्भेदास्तु। पर्याया
वाग्भवेन्मद्य तामसराचसप्रियम् ।
मण्डलावायाजसततत्तद्दूद्व सात्त्वि
कंभवेत् ॥ सात्त्विकेगीतहास्यादि-
राजसेसाहसादिकम् । तामसेनि-
न्द्यकर्माणिनिद्राञ्चमदिराचरेत् ॥ वि
धिनामात्रयाकालेहितैरन्नैर्यथावल
म् । प्रहृष्टोय पिवेन्मद्य तस्यस्या-
दमृतयथा । किन्तुमद्यस्वभावेन-
यथैवान्न तथास्मृतम् । अयुक्तियुक्त
रागायुयुक्तियुक्तयथामृतम ॥ मद्य
गन्धस्यनाशायउपायोयमुदीर्यते ।
मुस्तैलवालगदजीरकधान्यकैलाय
श्चर्वयन्सदसिवाचमभिव्यनक्ति। स्वा
भाविकमुखजमुल्भातिपूतिगन्ध गन्ध
श्चमद्यलशुनादिभवचनूनम् ॥ * ॥
नालिकेरोदकक्ष्ये ताम्रपात्रे स्थि
तमधु । गव्यघृताम्रपाचस्थमद्यतु-
ल्य घृतविनेतिकर्मलोचनम ॥
मद्यगन्ध । पु० बकुलद्रुमे ॥
मद्यद्रुम । पु० माडे । ध्वजवृक्षे । वि
तानके ।
मद्यप । त्रि० सुरापे ॥ सुराव्यतिरि
क्तमद्यपातरि ॥
मद्यपङ्क । पु० सुराकल्के । मेदके ॥
जगले । मेया० हृ० गौ० दे० भा० ॥

मद्यपाचनी । स्त्री० धातक्याम् ॥

मद्यपाशनम् । न० उपदंशे । अवदंशे । चखणे । पानरोचकभक्ष्ये ॥

मद्यपुष्पी । स्त्री० धातक्याम् ॥

मद्यमण्ड । पु० सुरायभागे । मद्यफेने । कारोत्तरे ॥

मद्यवासिनी । स्त्री० धातकीवृक्षे ॥

मद्यबीजम् । न० नानाद्रव्यकृतसुराबीजे । किण्वे । नग्नहौ । वाखर० इ०गौ दे०भा० ॥ मद्यस्यबीजम् ॥

मद्यसन्धानम । न० अभिषवे । आसुतौ । मद्यस्यचावना० इ०भा० ॥

मद्याजी । त्रि० मत्यजापरे ॥ मांय ष्टुंशील यस्य । णिनि ॥

मद्यामोद । पु० वकुलवृक्षे ॥ मद्यस्यामोदोऽस्मिन् ॥

मद्योर्ग । त्रि० मदेकशरणे । मयि सर्वकर्मसमर्पणे ॥

मद्र । पु० हर्षे ॥ देशविशेषे ॥ वैराटपाण्ड्ययोर्मध्ये पूर्वदक्षिणेन तु मद्रदेश समाख्यातोमाद्रीशस्तत्रतिष्ठति ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । स्फायितञ्चीतिरक् ॥

मद्रक । त्रि० मद्रदेशभवे ॥ मद्रेषु जात । कन् ॥

मद्रकार । पु० मद्रङ्करे ॥ मद्रं करोति डुकृञ् । चेमप्रियमद्रेषु चेतिअण् ॥

मद्रङ्कर । त्रि० चेमङ्करे । शङ्करे ॥ मद्रं करोति । डुकृञ् । चेमप्रियमद्रेणचेतिखच् ॥

मद्रसुता । स्त्री० माद्र्याम् । नकुलसहदेवयोर्जनन्यांपाण्डुपत्न्याम् ॥

मद्वान् । पु० विधौ० । वायसे ॥

मद्वती । स्त्री० शिवायां ॥

मद्वा । पु० शिवे ॥ माद्यति । मद्दी० । स्नामदीत्यादिनावनिप् ॥ राजवत्०रूपाणि ॥

मद्वरी । स्त्री० सुरायाम् ॥ माद्यत्यनया । मदी० । वनिप् । वनोरचेति ङीब्रौ ॥

मद्वर्गीण । त्रि०
मद्वर्गीय । त्रि०
मद्वर्ग्य । त्रि०
} मद्वर्गसम्बन्धिनि ॥ शेषिकेष्वर्थेषु०यशब्दे यत्खावन्यतरस्यामित्यनेनक्रमात०खछयत्प्रत्यया ॥

मधु । पु० मधुद्रुमे । मधूके मधुवा०इ०भा० ॥ वसन्तर्तौ ॥ दैत्यविशेषे ॥ यद्धन्ता०विष्णुर्मधुसूदनोऽभूत ॥ चैत्रेमासि ॥ जीवाशोके ॥ असुरविशेषे ॥ सचशत्रुघ्नेनहत । यस्यनाम्नामथुरा०मधुपुरीति ख्यातिगता ॥ मधुयष्ट्याम् ॥ न० चीरे ॥ जले । मद्ये ॥ मधुररसे ॥ वृत्ते ॥ वर्णवृत्तान्तरे ॥ यथा । हृयमपि । लघुमधु ॥ यथा । रतिमथ । वरतनु ॥ कर्मफले ॥मन्यन्ते-

एतम् । मनस्त्वाने । फलिपाटीव्वु धस्वान्तादेश ॥ पु०न०माद्वीकम चे ॥ पुष्परसे । मकरन्दे । कुसुमासवे । चौद्रे । माक्षिके । पुष्पासवे । पवित्रे । पित्र्ये । वरटीवान्ते ॥ मक्षिकावरटीभृङ्गवातपुष्परसोद्भवम् । मधुशीतलघुस्वादुरूच ग्राहिविलेखनम् ॥ चक्षुष्य दीपन स्वर्यंव्रणशोधनरोपणम् ॥ सौकुमार्यकर-सूक्ष्म पर स्रोतोविशोधनम् । कषायानुरसह्लादिप्रसादजनकपरम् ॥ वर्ण्यं मेधाकरवृष्य विशद रोचन हरेत् । कुष्ठार्श कासपित्तास्रकफ-मेहक्लमकृमीन् ॥ मेदस्तृष्णावमिश्वासहिक्कातीसारविग्रहान् । दाहक्षतक्षयास्तत्तु योगवाह्यल्पवातलम् ॥ माक्षिकभ्रामरक्षौद्र पौत्तिकक्षात्रमित्यपि । आर्घमौद्दालकदालमित्यष्टौमधुजातय ॥ एषास्व रूप विज्ञेय स्वस्थानेमनीषिभि ॥ नवमधुभवेत्पुष्ट्यै नातिश्लेष्महर सरम् । पुराण ग्राहकरूच मेदोघ्नमति लेखनम् मधुन, शर्करायाश्च गुडस्यापित्रिशेषत, । एकसवत्सरेतीते पुराणत्वस्मृतंबुधै ॥ विषपुष्पादपिरससविषाभ्रमरादय । गृहीत्वा मधुकुर्वन्तितच्छीतगुणवन्मधु ॥ विषान्वयात्तदुष्णन्तुद्रव्यं चोष्णेनवा-सह । उष्णात्तं श्चोष्णकालेचसमृत विषसममधु ॥ मकरन्दस्तमद्यस्तमाक्षिकस्यापिवाचक । अर्द्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधु ॥

मधु । स्त्री० जीवन्तीवृक्षे ॥

मधुक । पु० खगविशेषे । श्रोवद्मक्षिणि ॥ वल्ल्यन्तरे । मधुयष्ट्याम् ॥ व भ्रपरम्पराश सके । मागधे ॥ न० क्लीतके । मधुयष्टिकायाम् । त्रपुणि ॥ मध्विव । इवे प्रतिकृतात्रितिकन् ॥ यद्वा । मधु० मधुर-कायति । कै० आतइतिक ॥

मधुकण्ठ । पु० कोकिले ।

मधुकर । पु० भ्रमरे । मधुपे । मधुकरोति० तच्छील । कृञोहेत्वितिट ॥ भृङ्गराजे । भृङ्गरा० इ० भा० ॥ कामिनि ॥

मधुकर्कटिका । स्त्री० मिष्टबीजपूरे । मधुकर्कट्याम् । मधुकर्कटिकास्वाद्वीरोचनीशीतलागुरु । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥ मधुखर्जूरिकायाम् ॥

मधुकर्कटी । स्त्री० मधुकर्कटिकायाम् । मधुकाकरीति०भाषा ॥

मधुका । स्त्री० मधुपाल्याम् । मधुपर्ण्याम् ॥ मधुयष्ट्याम् ॥ टाप् ।

मधुकुक्कुटिका । स्त्री० )
मधुकुक्कुटी । स्त्री० ) जम्बीरविशेषे । मातुलुङ्गायाम् । सुगन्धायाम । गिरिजायाम् । पूतिपुष्पिकायाम् ॥

मधुकृत् । पु॰ भ्रमरे ॥ मधुकरोति । डुकृञ्॰ । क्विप् ॥ मधुकरमक्षिकायाम् ॥

मधुकीशट । पु॰ भृङ्गे । भ्रमरे ॥

मधुकोष । पु॰ मधुमक्षिकाभिकृतमध्वाधारे । मधुकचक्री॰ इ॰ भा॰ ॥

मधुक्रम । पु॰ मधुपानावृत्ती । शश्वन्मधुपानक्रमे । मधुवारे । मधुन क्रम ॥

मधुक्षीर । पु॰ खर्जूरवृक्षे ॥

मधुखर्जूरिका । स्त्री॰ मधुकर्कटिकायाम् । कोलकर्कटिकायाम् । माध्वीमधुरायाम् ॥

मधुगन्ध । पु॰ बकुले ॥

मधुगायन । पु॰ कोकिले ॥

मधुगुञ्जन । पु॰ शोभाञ्जनवृक्षे ॥

मधुघोष । पु॰ [illegible] ॥

मधुच्छदा । स्त्री॰ मयूरशिखायाम् ॥

मधुच्छन्दा । पु॰ ऋषिविशेषे । विश्वामित्रपुत्रे ॥

मधुच्युत् । त्रि॰ अमृतस्राविणि ॥

मधुजम् । न॰ सिक्थके ॥

मधुजम्बीर । पु॰ मधुरजम्बीरे ॥

मधुजा । स्त्री॰ पृथिव्याम् ॥ मधोर्जाता । जनी॰ । ड ॥ मत्स्यण्डिकायाम् । सितायाम् ॥

मधुजित् । पु॰ विष्णौ ॥ मधुदैत्यविशेषम॰ अजैषीत् । जि॰ । सत्सुद्विषेतिक्विप् । तुक् ॥

मधुतृण । पु॰ न॰ इक्षौ ॥

मधुत्रयम् । न॰ मधुरत्रये ॥

मधुदीप । पु॰ कामदेवे ॥

मधुदूत । पु॰ आम्रवृक्षे ॥

मधुदूती । स्त्री॰ पाटलावृक्षे ॥

मधुद्रु । पु॰ भ्रमरे ॥

मधुद्रव । पु॰ रक्तशिग्रौ ॥

मधुद्रुम । पु॰ मधूके । गुडपुष्पे । महुवा॰ इ॰ भा॰ ॥ मधुनामा द्रुम ॥

मधुद्विट् । पु॰ विष्णौ ॥

मधुधातु । पु॰ स्वर्णमाक्षिके ॥

मधूलि । स्त्री॰ खण्डे । खाड इ॰-भा॰ ॥

मधुधेनु । स्त्री॰ दानार्थं मध्वादिनिर्मितसवत्सायां गवि ॥

मधुनाडी । स्त्री॰ मध्वाधारच्छिद्रे ॥

मधुनारिकेल । पु॰ माध्वीकफले । मधुफले । बहुकूर्चे । दृढफले । मोहानारल॰ इ॰ गौ॰ दे॰ भा॰ । एरनारिकेल॰ इ॰ कोकणदेशभा॰ ॥ माध्वीकं नालिकेरफलमतिमधुरदुर्जरजन्तुकारिस्निग्ध वातातिसारश्रमशमनमथ्यसन वह्निदीप्तं । श्लेष्मप्रकोप जनयतिकुरुते चारुकान्ति बलस्वास्थ्यं देहस्थधत्ते धनमदनकलावर्ण नपित्तनाशम् ॥

मधुनी । स्त्री॰ क्षुपविशेषे । घृतमण्डायाम् । वायसोल्याम् । सुमङ्ग

लायाम् । माकण्डइताता॰इ॰माक चाउली॰इ॰च॰गौ॰दे॰भा॰ ॥

मधुनेता । पु॰ भ्रमरे ॥

मधुप । पु॰ भ्रमरे ॥ मद्यपे ॥ मधु-पिबति । पा॰ । आतोनेपसर्गे॰इ तिक । पिबते सुरासीध्वोरिति-नियमान्नटच् ॥

मधुपति । पु॰ श्रीकृष्णचन्द्रे ॥

मधुपर्क । पु॰ षोडशोपचारपूजा-न्तर्गतषष्ठोपचारे ॥ तस्यप्रमाण य था दधिसर्पिर्जलक्षौद्रसितेताभि स्तुपञ्चभि । प्रोच्यतेमधुपर्कस्तुस-र्वदेवौघतुष्टये ॥ जलन्तुसर्वत स्व ल्प सितादधिघृतसमम् । सर्वेषा-मधिकक्षौद्र मधुपर्कंप्रयोजयेत् ॥ त न्नवेत्कांस्यपात्रे णरीक्षस्ते तभवेन वा । ज्योतिष्टोमाश्वमेधादौपूर्त्तेचे-ष्टे प्रपूजने ॥ मधुपर्क प्रतिष्ठोय-सर्वदेवौघतुष्टिद । धर्मार्थकाममो क्षासाधक परिकीर्त्तित ॥ मधु पर्क सौख्यभोग्यतुष्टिपुष्टिप्रदाय-क ॥ आज्य दधिमधुमिश्र मधुप र्क विदुर्बुधा । इतिच ॥ न॰दधि-सयुक्तमधुनि । मक्षोदये ॥ मधुना पृच्यते । पृची॰ । घञ् ॥

मधुपर्क्य । त्रि॰ मधुपर्कार्हे ॥ मधु पर्कमर्हति । दण्डादिभ्ययइतियत् ॥

मधुपर्णिका । स्त्री॰ गम्भार्याम् ॥ नी लीवृक्षे ॥ मञ्चिष॰मधुराणिवा॰-पर्णान्यस्या । पाककर्णतिङीष् । स्वार्थेकन् । इस्व ॥ सुदर्शनायाम् ॥

मधुपर्णी । स्त्री ॰ गम्भार्याम् नी-ल्योषधौ ॥ गुडूच्याम् ॥ मधुबीज पूरे ॥ वराहक्रान्तायाम् ॥

मधुपा । स्त्री॰ मद्यपायाम् ॥

मधुपाका । स्त्री॰ षड्भुजायाम् । खर्बूजा॰इ॰भा॰ ॥

मधुपायी । पु॰ भ्रमरे । त्रि॰मधुपा नकर्त्तरि ॥

मधुपालिका । स्त्री॰ गम्भार्याम् ॥

मधुपिपासु । त्रि॰ मधुपातुमिच्छौ ।, मधुपिपासु । गम्यादिस्त्वाहि तीयासमास ।

मधुपीलु । पु॰ महापीलौ । राजपी लौ । महावृक्षे ।

मधुपुरी । स्त्री॰ मथरायाम् ।

मधुपुष्प । पु॰ मधुद्रुमे ॥ रोध्रे ॥ शिरीषवृक्षे ॥ अशोकवृक्षे ॥ वकु-लवृक्षे ॥

मधुपुष्पा । स्त्री॰ दन्तीवृक्षे ॥ नाग-दन्तीवृक्षे ।

मधुप्रिय । पु॰ बलदेवे । अच्युता ग्रजे ॥ मधुमद्यप्रिययस्य स भू मिजम्बाम् ॥ त्रि॰मद्यप्रिये ॥

मधुफल । पु॰ मधुनालिकेरे ॥ वि-कङ्कतवृक्षे ॥

मधुफलिका । स्त्री॰ मधुखर्जूरिका-याम् ॥

मधुवल्लुला । स्त्री॰ वासन्तीलतायाम् ॥

मधुभार । पु॰ मात्रावृत्तान्तरे ॥ सगण विधायजगणं निधाय । सुखसौख्यधाममधुभारनाम ॥ यथा । अयिमुग्धमानमवटौवधान । भुजपाशकेनभयनाशकेन ॥

मधुभित् । पु॰ विष्णौ ॥

मधुभुक् । त्रि॰ मधुपे ।

मधुमक्षिका । स्त्री॰ सरघायाम् ॥ मधुनोमक्षिका ॥

मधुमज्जा । पु॰ आखोटवृक्षे ॥

मधुमान् । त्रि॰ माधुर्यमिते ॥

मधुमती । स्त्री॰ मूर्वायाम् । काश्मर्याम् ॥ नदीविशेषे ॥ तस्याजलगुणास्तु । चन्द्रभागगुणसाम्यद जल किञ्चमाधुमतमग्निदीपनम् । इति ॥ मध्वस्तिअस्याम् ।मध्वादिभ्यश्चेतिमतुप् ।। उपास्यनायिकाविशेषे ॥ यथा । तथामधुमतीसिद्धिर्जायतेनात्रसंशय । देवचर्टीशतशत तस्यवश्याभवन्तिहि ॥ स्वर्गेमर्त्येचपातालेसयत्रगन्तुमिच्छति । तत्रैवचेटिका. सर्वानयन्तिनात्रसंशय ॥ अपिच । शब्दानेषशृणोतियोजनशतादाविर्भवन्त्यश्रुतास्तेतिवेदपुराणभारतकथागाथादयोवाङ्मया । यथ्नातिस्वयमिच्छयामुचिपदे , शाखाखिकाव्यानिवालोकान्भ्रमयतिपश्यतिस्फुट रुचोरनस्थलीमैरवी ॥ उष्णिक्छन्द ७ प्रभेदे ॥ यथा । ननगिमधुमती । यथा । रविदुहितृतटे ॰वनकुसुमतति । व्यधतमधुमती॰ मधुमथनमुदम ।।

मधुमत् । पु॰ विष्णौ ॥ मधुमथ्नाति । मदे॰ । क्विप्चेतिक्विप् ।।

मधुमथन । पु॰ विष्णौ ।।

मधुमल्ली । स्त्री॰ मालत्याम् ।।

मधुमस्तकम् । न॰ खाद्यविशेषे । परिमाण्के ।।

मधुमाक्षिकम् । न॰ स्वर्णमाक्षिके ॥

मधुमाध्वीकम् । न॰ मद्ये ।।

मधुमारक । पु॰ भ्रमरे ॥

मधुमूलम् । न॰ आलुके । मौआलुइ॰ गौ॰दे॰भा॰प्रसिद्ध । हिङ्गुले ॥

मधुयष्टि । स्त्री॰ इक्षौ ॥

मधुयष्टिका । स्त्री॰ मधुकायाम् । मधुयष्ट्याम् । मुलहठी॰मुहलेठी- तिख्यातौषधौ ॥ मधुयष्टीव । इवेतिकन् ॥

मधुयष्टी । स्त्री॰ मधुयष्टिकायाम् ॥ मधुनोयष्टी ॥ गुणान्पथ्ययष्ट्याम् ॥

मधुर । पु॰ मिष्टरसे, गौल्ये । स्वादौ । रसज्येष्ठे गुल्ये ॥ तस्यगुणा . । मधुर पिच्छल . शीतोधातुस्तन्यवलप्रद । चक्षुष्योवातपित्तघ्न कुर्यात्स्थौल्यवलक्रमीन् ।

सोतियुक्तोज्वरश्वासगलगण्डादिरोगकृत् ॥ अपिच। मधुरस्तुरसश्चिनोतिकीयान्वपुष स्थौर्यबलौजवीर्यदायी। अतिसेवनत प्रमेहशैत्य जडतामान्द्यमुखान्करोतिदोषान् जीवकौषधौ ॥ रक्तशिग्रौ ॥ राजाम्रे ॥ रक्तेक्षौ । गुडे ॥ शालौ हैमन्तधान्ये । न॰ विषे ॥ वक्रे॥ त्रि॰ रसनाकर्षिणि। स्वादौ। मधुररसयुक्ते ॥ मधुमाधुर्यमस्यास्ति। ऊषसुषीतिर ॥ मधुमाधुर्यं राति वा। आतोनुपेतिक ॥ प्रिये ॥ दधिमधुरमधुमधुरद्राक्षामधुरासितातुमधुरैव। तस्यतदेवहिमधुरवस्तुमनोयत्रसलग्नम् ॥

मधुरक । पुं॰ जीवकौषधौ ॥ स्वार्थेक ॥

मधुरकण्टक । पुं॰मत्स्यविशेषे। कच्छलायाम ।

मधुजम्बीर । पु॰ मधुजम्बीरे। रसद्राविणि। शर्करके ॥

मधुरत्वच । पु॰ धवे। पीतफले ॥

मधुरत्रयम्। न॰ दुग्धसितामाक्षिकेषु ।। सितामाक्षिकसर्पिःषु ॥

मधुरत्रिफला स्त्री॰ द्राक्षाकाश्मर्यखर्जूरिफलेषु ॥

मधुरनिस्वना। स्त्री॰ मधुरस्वरयुक्तायांनार्याम् ॥ मधुरोनिस्वनोयस्याः ॥

मधुफल । पु॰ राजवदरे ।

मधुरमासम। न॰ क्षीरामृते ॥ तद्विधानयथा। घृताम्बुसे दिनैमासिशुण्ठीचूर्णविनि क्षिपेत्। दुग्धञ्चशर्करोपेतपश्चात्सौगन्धिकक्षिपेत्। नातिसार्द्रं नातिशुष्कमिदक्षीरामृतम्‌तम् ॥ क्षीरमृतबहुरसरोचकचातिशीतलम् । वातपित्तज्वरबलस्य सुस्निग्धमतिकोमलम् ॥

मधुरवल्ली। स्त्री॰ मधुबीजपूरे ॥

मधुरस । पु॰ इक्षौ । मधुर्मधुरोरसोस्यास्मिन्वा ॥ तालवृक्षे ॥

मधुरसा। स्त्री॰ मूर्वायाम् ॥ द्राक्षायाम् ॥ दुग्धिकायाम् ॥ गम्भार्याम् ॥ मधूरसोस्याः ॥

मधुरस्रवा। स्त्री॰ पिण्डखर्जूर्याम् ॥

मधुरा। स्त्री॰ शतपुष्पायाम्। सौफ॰ इ॰ भा॰ ॥ मिश्रेयायाम्। शालेये। शीतशिवे। सलूफा॰ इ॰ गौ॰ दे॰ भा॰ ॥ मधुरोरसोस्त्यस्या । अर्शआद्यच् ॥ मथुरापुर्याम् ॥ यथा। हत्वाचलवणरक्षोमधुपुत्र महाबल। शत्रुघ्नोमधुरानामपुरींतत्रचकारवै इति मधुकर्कटिकायाम् ॥ मोदायाम् ॥ मधूल्याम् यष्टिकायाम् ॥ काकोल्याम् ॥ शतावर्याम् ॥ वृहज्जीवन्त्याम् ॥ पालङ्क्यशाके ॥ मनोहरायाम् ॥ टाप् ॥

मधुराकृति । त्रि० सौम्यरूपे ॥

मधुराम्ल । पु० )
मधुराम्लक । पु०) आम्रातके ॥

मधुराम्लफल । पु० रैफले । थारे ॥

मधुरालापा । स्त्री० शारिकायाम् ॥

मधुरालाबुनी । स्त्री० राजालाब्वाम् ।

मधुरिका । स्त्री० मिस्याम । शालेये । शीतशिवे । धनसौंफ० इ० भा० ॥ मधुरीरसोऽस्त्यस्या अच् । स्वार्थे कन् ॥

मधुरिपु । पु० विष्णौ ॥ मधोरसुरविशेषस्यरिपु ॥

मधुरेणु । पु० काटभीवृक्षे ॥

मधुरोदक । पु० सप्तसमुद्राणाशेषसमुद्रे । जलसमुद्रे । स्वादूदके ॥

मधुलम् । न० आसवे । मद्ये ॥

मधुलग्न । पु० रक्तशोभाञ्जने ॥

मधुलता । स्त्री० शूलीतृणे ॥

मधूलिका । स्त्री० राजिकायाम् ॥

मधुलिट । पु भ्रमरे ॥ मधुलेढि। लिह आस्वादने । क्विप् ॥

मधुलेही । पु० भृङ्गे । भ्रमरे ॥

मधुलोलुप । पु० भ्रमरे ॥

मधुवटी । स्त्री० तीर्थविशेषे ॥

मधुवनम् । न० मथुरायाम ॥ कदाचिन्मधुसंज्ञेनदैत्येनाधिष्ठितयत । ततोमधुवनमाख्यातमत्रमस्तीतले । पुण्यमधुवनतत्रसान्निध्यनित्यदाहरे । मधोवनम् । किष्किन्ध्यायां सुग्रीवस्यवनविशेषे ॥

मधुवल । पु० कोकिले ॥

मधुवल्ली । स्त्री० यष्टीमधुनि ॥ क्षीतनके ॥

मधुवार । पु० मधुक्रमे । पुनः पुनर्मधुपानपरिपाट्याम् । मधुपानावसरे ॥ मधुनोमद्यस्यवारोऽवसर । मधुपानावृत्तिरितियावत् ॥

मधुवारुणी। स्त्री० मधुरूपायावारुण्याम् ॥

मधुवीज । पु दाडिमे ॥

मधुवीजपूर । पु० मधुरफलायाम् । महाफलायाम् । मधुकर्कट्याम् । मीठाबिजौरा० इ०भा० ॥

मधुवृक्ष । पु० मधुके । महुवा० इ० प्रसिद्ध । मधुनामावृक्ष ॥

मधुव्रत । पु० भ्रमरे मधुव्रतमस्य यस्य ॥ यद्वा मधुमकरन्दव्रतयति भुङ्क्ते । कर्मण्यण् ।

मधुशर्करा । स्त्री० मधुजातशर्करायाम् । सिताखण्ड० इ० गौ० दे० भा० प्र० द्रव्ये यथा । माध्वीसुतामधूत्थ्नामधुजामधुशर्करा । माक्षीकशर्करा चैव क्षौद्रका क्षौद्रशर्करा ॥ यद्द्रव्यमधप्रोक्तं तद्गुणास्तु शर्करा । विशेषादत्तृष्याचतर्पणी चादेहिनाम् अपिच । मधुजा शर्करा रूक्षा कफपित्तहरी गुरु । छर्द्यतीसारतृड्दाहरक्तहृत्तुवराहि

मा ॥ मधुनशर्करा ॥

मधुशाख पु० मधुष्ठीले ॥

मधुशिग्रु । पु० रक्तशोभाञ्जनवृक्षे । मुनगा० इ० काश्यादौख्याते ॥ मधु मधुर शिग्रु ॥ मधुप्रधान शिग्रुर्वा ॥

मधुशीर्षकम् । न० समितानिर्मितेप क्वान्नविशेषे ॥

मधुशेषम् । न० सिक्थके ॥

मधुश्रेणी । स्त्री० मूर्वायाम् ॥ मधुन श्रेणिरच ॥

मधुश्वासा । स्त्री० जीवन्तीवृक्षे ॥

मधुष्ठील । पु० मधूकवृक्षे । महुवा इ० विख्याते ॥ मधुष्ठीवति । ष्ठिवु निरसने । इगुपधेतिक । पृषोद रादि ॥ मधुष्ठीलं गर्भेऽस्येतिवा ॥

मधुसख पु० कामदेवे ॥

मधुसारथि । पु० कामदेवे ॥

मधुसिक्थक । पु० स्थावरविषभेदे ॥

मधुसुहृत् । पु० कामदेवे ॥

मधुसूदन । पु० भ्रमरे ॥ वनमालिनि । श्रीकृष्णे । वैदिककर्ममार्गके भगवति० दुष्टनिग्रहकर्तरि ॥ मधुनामानमसुरसूदितवान् ० सूदयति क्षरा । सूदक्षरणे । नन्द्यादित्वा-ल्ल्यु ॥ विष्णुकर्णमलोद्भूतमधुनाममहासुरम् । ब्रह्मणोपर्घितिकुर्वन्नृजघानपुरुषोत्तम ॥ तस्यताव द्वधादेवतद्दासर्वेविमानवा । मधु सूदनमित्याहुर्ऋषयश्चजनार्दनमिति भारते ॥

मधुसूदनी । स्त्री० पालङ्कीशाके ॥

मधुस्रव । पु० मधूकवृक्षे ॥ मोरटलतायाम् ॥ न० तीर्थविशेषे ॥

मधुस्रवा । पु० मधूकवृक्षे ॥

मधुस्रवा । स्त्री० जीवन्त्याम् । डोडीतिगुर्जरदेशभाषयाप्रसिद्धायाम् ॥ मूर्वायाम् ॥ हंसपद्याम् ॥ मधुयष्टिकायाम् ॥

मधुस्वर । पु० कोकिले ॥ मधुर्मधुरः स्वरोयस्य ॥ मधौस्वरोयस्यवा ॥

मधुहा । पुं० विष्णौ ॥ मधुदैत्यविशेष हन्ति । हन० । क्विप् चेतिक्विप् । ब्रह्मभ्रूणवृत्रेषु क्विविति नियमस्याप्रायिकत्वात् ॥

मधूक । पु० गुडपुष्पे । मधुद्रुमे । महुवा० इतिख्यातेवृक्षे ॥ अस्यगुणा मधूकपुष्पं मधुरंशीतलंगुरु बृंहणम् । बलशुक्रकरंप्रोक्तंवातपित्तविनाशनम् ॥ फलंशीतंगुरुस्वादु शुक्रलंवातपित्तनुत् अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥ त-स्मादगुणास्तत्फलवत् । यथा । यस्ययस्यफलस्यैववीर्यंभवतियादृशम् । तस्यतस्यैववीर्यं समज्जानमभिनिर्दिशेत् ॥ तरुलग्गुणा । मधुत्वक्रक्तपित्तघ्नीव्रणशोधनरोपणी ॥ मह्यते० मन्यतेवा । महपूजाया

म० मनस्त्राने । उलूकादयश्च सा धु ॥ न० यष्टीमधुनि ॥ इ० रा० निर्घण्ट ॥

मधूकपुष्पम् । न० मधुद्रुमस्य कुसुमे॥ मधुच्युतस्थूलमधूकपुष्प सशोधितकेसरधूलिवर्जितम् ।सम्पाचितशुभ्रसिताघृताभ्यासजीरकजीवनदृष्टि जीविनाम् ॥ तु हणीयसुमधुरमधूकवातहृद्गुरु । पित्तप्रकोपशमनहृद्य रुच्यमुखप्रियम् ॥

मधूच्छिष्टम् । न० सिक्थके ॥ मधुन उच्छिष्टम् ॥

मधूत्थितम् । न० सिक्थके ॥

मधूत्सव । पु० चैत्रावल्याम् ॥

मधूपघ्न । पु० न० मथुरायाम् । लवणपुरे ॥

मधूल । पु० जलजेमधूके । मधूलके ॥

मधूलक । पु० जलजमधूके जल मङ्गवा० इतिभाषा । दीर्घपत्रे ॥ मधुलाति । ला० आतोनुपेतिक । अन्येषामपीतिदीर्घ । स्वार्थेकन् । गिरिजातमधूके । गौरशाके । अस्यगुणामधूकगुणतुल्या ॥ मधुरसे ॥ त्रि० तद्वति ॥

मधूलिका । स्त्री० मूर्वायाम् ॥ प्रत्ययस्थादितीत्वम् ॥

मधूली । स्त्री० क्षीतनके ॥ मधुकर्क्याम् ॥ आम्रे ॥

मध्य । पुं० ग्रहस्फुटसाधकाङ्कविशेषे । पु० न० विलग्ने । देहमध्यभागे । मध्यमे । अवलग्ने ॥ हृदयपुण्डरीकाकाशे ॥ त्रि० न्याय्ये । उत्कर्षापकर्षहीने ॥ यथा० मध्यस्थ ॥ अन्तरे ॥ अधमे ॥ मध्यमे ॥ यथा । उत्तमाऽधममध्यानिबुद्ध्वाकार्याणिपार्थिव । उत्तमाधममध्येषुपुरुषेषु नियोजयेत् ॥ माध्यायति । ध्यै० । आतोनुपेतिक । यद्वा । मन्यते । मन० । माशोभाधर्त्त वा । अघ्न्यादि ॥ मध्येशरीरादेर्भवम् । असाम्प्रतिके० इत्य ॥ सङ्ख्याविशेषे ॥ यथा ॥ १०००००००००००००००० ॥

मध्यगन्ध । पु० आम्रद्रुमे ॥

मध्यत । अ० मध्ये इत्यर्थे ॥ आद्यादित्वात्तसि ॥

मध्यदेश । पु० देशविशेषे । मध्यमे ॥ तस्यसीमायथा । हिमवद्विन्ध्ययोर्मध्यंयत्प्राग्विनशनादपि । प्रत्यगेवप्रयागाच्चमध्यदेश प्रकीर्त्तित ॥ मध्यश्चासौदेशश्चेतिकर्मधारय ॥ शास्त्रीयस्त्रानकर्म्म सस्नातोजनोमध्यदेशइतिव्याख्याकारा ॥

मध्यदेशीय. । त्रि० मध्यदेशोद्भवे ॥ मध्यदेशीयजनपदायथा । ताखिमेकुरुपाञ्चाला : साल्वाश्चवसजाङ्गला ।शूरसेनाभद्रकारारोधका. सपटच्चरा ॥ मत्स्या किराता

कुल्याश्चकुलय कान्तिकोशला । आवन्त्याश्चभुलिङाश्चलोकाश्चैवाम्ब के सह ॥ मध्यदेश्याजनपदा प्रायश परिकीर्तिता ।

मध्यदेश्य । त्रि० मध्यदेशभवे ॥ दिगादित्वात्० यत् ॥

मध्यन्दिन । पु० वम्धूकवृक्षे । मध्यनिआ० इ० भा० ॥

मध्यपञ्चमूलकम् । न० पाचनविशेषे ॥ यथा । वलापुनर्नवैरण्डसूर्पप र्णीद्वयेनतु । एकत्रयोजितैनैवस्यान्मध्यपञ्चमूलकम् ॥

मध्यम । पु० तन्त्र्युत्थितेकण्ठोत्थितेचसप्तस्वराणामध्ये पञ्चमे ॥ मध्यदेशे ॥ मृगविशेषे ॥ रागप्रभेदे ॥ शरीरावस्थाविशेषे ॥ यथा । षोडशाव्द समारभ्ययावद्वैसप्ततिर्भवेत् । मध्यम सतुविज्ञेय परतोवृद्ध उच्यते ॥ यथोक्तम् । तद्वदेवोत्थितोवायुरुर नाभिप्राप्तोमहानादोमध्यस्थस्तेनमध्यम ॥ क्रौञ्चोनदतिमध्यममिति च ॥ भूपालविशेषे ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर ॥ पु० न० अवलग्ने । देहस्यमध्यमेभागे ॥ त्रि०मध्यजे ॥ उत्कृष्टादधमेचैवापकृष्टादुत्तमेपिच । मध्येभव । मध्यान्म ॥ यद्वाणासामयिका सञ्ज्ञायाम् ॥

मध्यमपाण्डव । पु० अर्जुने ॥

मध्यमभृतक । पु० कृषीवलभृतके । कृषाण० इ० भा० ॥ यथा । उत्तमस्त्वायुधीयोत्रमध्यमस्तु कृषीवल । अधमोभारवाहीस्यादित्येषत्रिविधोभृत ॥

मध्यमलोक । पु० भूमौ ॥

मध्यमसङ्ग्रह । पु० स्त्रीसङ्ग्रहणाख्यविवादविशेषे ॥

मध्यमहलम् । न० षड्गवे हले ॥

मध्यमा । स्त्री० दृष्टरजोनार्याम् । रजस्वलायाम् कन्यायाम् ॥ कर्णिकायाम् ॥ अङ्गुलिप्रभेदे । मध्याङ्गुलौ ॥ त्र्यक्षरछन्दसि ॥ हृदयोत्थितबुद्धियुतनादरूपवर्णे । नायिकाभेदे ॥ लज्जामन्मथमध्यस्थामध्मोदितयौवनेतिलक्षणाम् ॥ मध्येजातायाम् ॥ अदन्तत्वाट्टाप् ॥ मध्यमस्य भार्यायाम् ॥ मध्यमस्यस्त्री । पुयोगलक्षणङीष वाधित्वाऽजादित्वाट्टाप् ॥ वाल्ययौवनयोर्मध्येभवा । मध्यान्म । तयोर्मध्ये माशोभायस्यावा ॥

मधयमाग्नि । पु० अकार्यमग्निविशेषे ।

मध्यमिका । स्त्री० मध्यमायार्थे ॥ मध्यमैव । कन् ॥

मध्यमीयम त्रि०मधध्य ॥ मध्येभवम् । मध्यमीयोचप्रश्नयौवक्तव्याविति

मीय ॥

मध्यमेश्वर । पु॰ काशीस्थे शिवलिङ्ग विशेषे ॥ शर्वाणीमध्यमाभिधे ॥ अत्रशर्वाणीस्थानम् ॥

मध्ययव । पु॰ षट्श्वेतसर्षपपरिमाणे ॥

मध्यरात्र । पुं॰ निशीथे । अर्द्धरात्रे ॥ मध्यरात्रे । पूर्वापराधरेतिसू॰ सर्वैकदेश कालेनसमस्ते नत्वक्लेव॰ज्ञापकस्यसामान्यापेक्षत्वादित्युक्ते समासे॰ अहः सर्वैकदेशे त्यच् ॥

मध्यलोक । पुं॰ पृथिव्याम् ॥

मध्यलोकेश । पु॰ नृपे । राज्ञि ॥ मध्यलोकानामर्त्यानामीश ॥

मध्यस्थ । त्रि॰ निसृष्टे । मध्यवर्तिनि । विवदमानयोरुभयोरपिहिते षिणि ॥ उभयपक्षरहिते । स्वार्थाविरोधेनपरार्थघटके ॥ यथा । एके सत्पुरुषा परार्थघटका . स्वार्थस्य बाधेनयेमध्यस्था परकीयकार्यकुशला . स्वार्थाविरोधेनये । तेऽमीमानुषराक्षसा . परहितये स्वार्थतोऽन्यते॰येतुघ्नन्तिनिरर्थकपरहितंतेकेन जानीमहे ॥ पु॰ पुरुषे । अत्रैगुण्यातृपुरुषोऽहिमध्यस्थ । सुखीहिसुखेनतृप्यन्॰ दुःखीचदुःख विषण्णमध्यस्थोभवति । तदुभयरहितोमध्यस्थइति॰ उदासीनइतिचाख्यायते ॥ म

ध्येतिष्ठति । स्था॰ । क ॥

मध्यस्थलम् । न॰ कटिदेशे ॥ यथा । कुचौमरिचसन्निभौमुरजमध्यमध्यस्थलीयहीतिमिरमञ्जरीसहचरीनरीनृत्यते । इति ॥

मध्या । स्त्री॰ मध्यमायाम् ॥ त्यचरायाम वृत्तौ ॥ नायिकाभेदे ॥

मध्याह्न । पु॰ अह्नोमध्यभागे । त्रिधाविभक्तदिनस्यमध्यभागे । पञ्चधाविभक्तस्याह्नस्तृतीयभागे वा ॥ अह्नोमध्यम् । सङ्ख्याविसायेतिज्ञापकात्समास ॥

मध्येचित्तम् । अ॰ चित्तमध्ये ॥ मध्यचित्तस्येतिविग्रहे॰ पारेमध्येषष्ठ्यावेति॰अव्ययीभाव ॰ निपातनादेदन्तत्वम् ॥

मध्वद । पु॰ कर्मफलभुजिजीवे ॥ मधुकर्मफलम ॰ अत्ति । अद॰ । कर्मण्यण ॥ सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभाव ॥

मध्वाधार । पुं॰ सिक्थके ॥

मध्वालु ।) न॰ कन्दविशेषे । मधुमध्वालुकम् । ) न॰ रतायुक्तेगोमान्विते । दीर्घसुषिमीति॰ भा॰ । मौञ्चालु इ॰ गौ॰ भा॰ ॥

मध्वासव । पु॰ मधूकपुष्पजातेमद्ये । माधवके । मधुनि । माध्वीके ॥ मधूकपुष्पंमधु । तस्यासव ॥

मध्वासवशेषिक । पुं॰ शौण्डिके ॥

मध्वजा । स्त्री० मद्यं ॥
मन । पु० जटामांस्याम् ॥
मनआप । त्रि० मनोज्ञे ॥
मनःप्रग्रहवान् । त्रि० प्रगृहीतमनसि । समाहितचित्ते ॥
मनःप्रसाद । पु० विषयचिन्ताव्याकुलत्वराहित्ये ॥ मनसः स्वच्छतायाम् ॥ मनसः प्रसादः ॥
मनःशिल । पु० मनःशिलायाम् ।
मनःशिला । स्त्री० रक्तवर्णधातुविशेषे । कुनट्याम् । मनोह्वायाम् । नागजिह्विकायाम् । मनसिल० हू० भा० ॥ मनःशिलागुरुर्वर्ण्यासरोष्णालेखनीकटुः । तिक्तास्निग्धाविषश्वासकासभूतकफास्रनुत् ॥ मनःशिलामन्दवलंकरोतिजन्तुः धुवंशोधनमन्तरेण । मलानुबन्धं किलमूत्ररोधं सशर्करं कृच्छ्रगदं च कुर्यात् ॥ तालकस्यैवभेदोऽस्तिमनोगुप्तैतदन्तरम् । तालकंत्वतिपीतस्यान्नवेद्रक्तामनःशिला ॥ अथशोधनम् । पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् । भावयेत्सप्तधापित्तै रजाया सा विशुध्यति ॥ मनःशब्दवाच्याशिला । शाकपार्थिवादि ॥
मननम् । न० बुद्धौ ॥ युक्तिभिरनुचिन्तने ॥ ध्याने ॥ असम्भावनाविपरीतभावनानिरासैर्युक्तैरनुचिन्तने ॥ उक्तं ॥ श्रुतस्यार्थस्याद्वितीयवस्तुनोवेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तने ॥ केवलपुरुषबुद्ध्यो त्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थं वेदान्तार्थानुगुणेतिविशेषणम् ॥ अर्थोऽसम्भावनोच्छेदीतर्कोमननमीरितम् । वेदशास्त्राविरोधश्चतर्कोऽयाश्रोनचेतरः ॥ आत्मन्यतीतेसर्वस्मात्सर्वरूपेथवाततेः । कोवन्धकस्यवामोक्षोनिर्मलंमननंकुरु ॥
मन । न० ज्ञानेन्द्रियविशेषे । बुद्धीन्द्रियाणामप्राणिभगवतोविभूतौ । चित्ते । चेतसि । हृदये । स्वान्ते । हृदि । मानसे ॥ अपिचास्यपर्याया यथाभारते । मनोमहान्मतिर्ब्रह्मापूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञासंविच्चितिश्चैवस्मृतिश्चपरिपठ्यते । पर्यायवाचकाः शब्दामनसः परिकीर्त्तिताः ॥ इति । न्यायमतेऽस्यगुणाः । यथा । परापरत्वसङ्ख्याद्याः पञ्चवेगाश्चमानसे । मनोग्राह्यसुखंदुःखमिच्छाद्वेषोमतिः कृतिः ॥ अयौगपद्याज्ज्ञानानांतस्याणुत्वमिहेष्यते । इति ॥ जन्यज्ञानसामान्यंप्रतित्वङ्मनोयोगःकारणम् । त्वचोयोगोमनसाज्ञानकारणमुच्यते ॥ तस्यनवगुणायथा । धैर्योपपत्तिर्व्यक्तिश्चविसर्गः कल्पनाक्षमा । सद्

मस्याशुताचैवमनसोनवगुणा ॥ धैर्यम् १। उपपत्ति ऊहापोह कौशलम् २। व्यक्ति स्मरणम् ३। कल्पनामनोरथवृत्ति ४। विसर्ग विपरीतसर्गोभ्रान्ति ५। क्षमा ६। सत्०वैराग्यादि ७। असत्०राग द्वेषादि ८। आशुता०अस्थिरत्व म् ९। इत्यर्थं ॥ अन्त करणे ॥ अस्यचातुर्विध्ययथा। मनोबुद्धिरह ङ्कारश्चित्त करणमान्तरम्। संशयो निश्चयोगर्वः स्मरणविषयाश्चमी ॥ तस्याध्यात्मत्वादियथा। अध्या त्म मनइत्याहु पञ्चभूतात्मधार कम्। अधिभूतञ्चसङ्कल्पश्चन्द्रमाश्चा धिदैवतम् ॥ इति ॥ तस्यस्वरूपय था। अनिरूप्यमहश्चञ्चज्ज्ञानभेदम न स्मृतमिति ॥ तस्यप्राशस्त्या प्राशस्त्यानुमापकानियथा। जना नाहृदयसद्य सुव्यक्त वचनेनवै। शिष्ये कलत्रे कन्यायादौहित्रे बान्ध वेपिच ॥ पुत्रे पौत्रे चवचसिप्रतामे यशसिश्रियाम्। बुद्धौवारिणिवि द्यायाज्ञायतेहृदयनृणाम्इतिब्रह्म वैवर्त्तपुराणम्॥ तस्यवन्धमोक्ष प्रति हेतुत्वयथा। नदेहोनचजीवात्माने न्द्रियाणिपरन्तप। मनएवमनुष्या णाकारणबन्धमोक्षयो। बन्धइ- विषयासङ्गिमुक्तं निर्विषयन्तथेति॥ तच्चशायवीयपरमाणुरूपमितिशिरो



मणिमतम्। स्पर्शरहितत्वेसति- क्रियावत्त्वञ्चास्यलक्षणम्॥ अस्यक्लो बत्वमेव नपुंसकमितिज्ञात्वाप्रिया- यैप्रेषितमन। तत्तुतत्रैवरमतेह ता पाणिनिनावयम्॥ सुखदु खा द्युपलब्धिसाधने०इन्द्रियविशेषे ॥ सङ्कल्पविकल्पात्मिकायामन्त का रणवृत्तौ ॥ तच्चप्रत्यात्मनियतत्वा- दनन्त परमाणुरूपनित्यञ्चेतिता- र्किका ॥ एकैकस्यात्मनएकैकमन इत्यात्मनामनेकत्वान्मनसोऽनेकत्व म् ॥ प्रदीपज्वालासन्तानवृत्तिसन्ता नरूपेणपरिणममानमन्त करणद्र व्य मननात्मकत्वान्मनइत्युच्यते॥ ए कादशेन्द्रियाणामध्येप्रवर्त्तकमनो वासुदेवविभूति ॥ उभयात्मकमत्र मन सङ्कल्पकमिन्द्रियञ्चसाध र्म्यात्। एकादशस्विन्द्रियेषु मध्ये मनउभयात्मकम्०बुद्धीन्द्रियरूपक र्मेन्द्रियञ्च। चक्षुरादीनावागादी नाञ्चमनोधिष्ठितानास्वविषयेप्रवृ- त्ते। तदसाधारणेनरूपेणलक्षय ति०सङ्कल्पकमत्रमन। आलो चितमिन्द्रियेणवस्त्विदमितिसम्मु- ग्धम्० इदमेवनैवमितिसम्यक्कल्प यति०विशेषणविशेष्यभावेनविवेच यतीतियावत्। यथाहु। सम्मुग्ध वस्तुमात्रन्तुप्राग्गृह्णात्यविकल्पि तम। तत्सामान्यविशेषाभ्याक-

स्यथमिममनीषिणइति ॥ तथा० अ सिद्धालोचनज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृश शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयतेसापिप्रत्यक्षत्वेनसम्मतेति॥ सोऽयं सङ्कल्पलक्षणोव्यापारोमानसः समानासमानजातीयाभ्यां व्यवच्छिन्दन्मनोलक्षयति॥ स्यादेतत् । असाधारणव्यापारयोगिनौ यथामहदहङ्कारौनेन्द्रियम्० एवमनोप्यसाधारणव्यापारं नेन्द्रियं भवितुमर्हतीत्यतआहइन्द्रियञ्च०कुतः साधर्म्यात्० इन्द्रियान्तरैः । सात्विकाहङ्कारोपादानत्वञ्चसाधर्म्यम् । नत्विन्द्रलिङ्गत्वम्०महतत्तत्वादीनामपि० इन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्तिनिमित्तमात्रमिन्द्रलिङ्गत्वनप्रवृत्तिनिमित्तम ॥ मनुतेऽनेनेतिविज्ञाननिमित्तान्तः करणे ॥ युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गम् ॥ १६ । इतिगोतमसूत्रम् । युगपत्एककाले० एकात्मनीतिपूरणीयम्० ज्ञानानामनुत्पत्तिर्यतः सएवधर्मोज्ञानकरणत्वमनसोलिङ्गं लक्षणमित्यर्थः । तथाहि । चक्षुरादिषु विषयसम्बन्धेपि० यस्मात्स्वभावादेकज्ञानं जनयतितत्सम्बन्धात्परज्ञानं जनयति० तदेवचाणुनिखिलज्ञानजनकसुखादिसाक्षात्कारासाधारणकारणं तदेकमिवलाघवान्सिद्धं मनइत्यर्थः ॥ लम्नाद्भवमभवमे ॥ मनएवमनुष्याणांकारणं बन्धमोक्षयोः । बन्धायविषयासक्तं मुक्त्यैनिर्विषयस्मृतम् ॥ यतोनिर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ निरस्तविषयासङ्गं सन्निरुद्धं मनोहृदि यदायात्युन्मनीभावं तदातत्परमं पदम् ॥ तावदेवनिरोद्धव्यं यावद्धृतिगतक्षयम । एतज्ज्ञानञ्चध्यानञ्च शेषोन्यायस्यविस्तरः ॥ मन्यतेनेन मनुतेनेनवा । मनज्ञाने० मनुअवबोधनेवाअसुन् ॥ मनसोनैर्मल्यञ्चवश्यकरणीयम । यथोक्तंश्रीदेवीभागवते । अमृसर्वेषु तीर्थेषुस्नात्वास्नात्वा पुनः पुनः । निर्मलनमनोयावत्तावत् सर्वं निरर्थकमिति ॥

मनसा । स्त्री० विषहर्याम् । जरत्कारुमुने पत्न्याम् ॥

मनसादेवी । स्त्री० कद्रौ । मनसायाम् ॥ अस्याः प्रणाममन्त्रोयथा । आस्तीकस्य मुनेर्माता भगिनी वासुकेस्तथा । जरत्कारुमुनेः पत्नी मनसादेवीनमोस्तुते ॥ अस्याध्यानं यथा । देवीमम्बामहीनांशशधरवदनांचारुकान्तिं वदान्यांहंसारूढामुदारामरुणितवसनां सर्वदास

वंदैव । स्मीरास्नामखिडताङ्गीकन
कमणिगणै र्नागरत्नै रनेकै वंन्दे ह
साष्टनागामुरुकुचयुगलाभोगिनीं
कामरूपामितितिथ्यादितत्वम् ॥

मनसिज । पु० कामदेवे ॥ शृङ्गाररूपे
णमनसिजायते स्म । जनी० सप्त
म्याजनेर्ड तत्पुरुषे कृतीत्यलुक्
हलदन्तादितिवा ॥

मनसिशय । पु० स्मरे । कामदेवे
। मनसिशेते । शीङ् । अधिकरणे
शेते रित्यच् । हलदन्तादित्यलुक्॥

मनस्कार । पु० चित्ताभोगे । मन
स सुखादौ । एकस्मिन्विषयेचि
त्तस्थैर्ये ॥ मनस कारोव्यापार
विशेष । डुकृञ् । भावे घञ् ।
अत कृकमीतिसत्वम् ॥

मनस्ताप । पुं० मन पीडायाम्
अनुतापे । पश्चात्तापे ॥ यथा
। परनिन्दानिजोत्कर्षं व्यसनायुक्त
भाषणम् । अयुक्त कर्म कुर्वाणोम
नस्तापैर्विशुद्ध्यतीतिमहानिर्वा
णतन्त्रम् ॥ ब्राह्मणं नयदादैवा
च्छिन्नयज्ञोपवीतकम् । मनस्ता
पेनशुद्धि स्यादापस्तम्बोऽब्रवीन्
मुनि ॥

मनस्ताल । पु० दुर्गाया सिंहे ॥

मनस्थ । त्रि० मनसिस्थितवस्तुनि॥

मनश्चनम् । न० त्रिवक्रावुद्धौ ॥

मनस्वी । पु० शूरे ॥ अभिमानि
नि ॥ मनोऽस्यास्ति । अस्मा
त्विहिनि ॥ शरभे ॥ त्रि० सुम
नसि । प्रशस्तमनोयुक्ते ॥ प्रश सा
यांविनि ॥ क्वचिद्भूमौशय्याक्वचि
दपिचपर्यङ्कशयन क्वचिच्छाका
हार · क्वचिदपिचशाल्योदनरुचि
। क्वचित्कन्थाधारीक्वचिदपिचदि
व्याम्बरधरोमनस्वीकार्यार्थी नगण
यतिदु ख नचसुखम् ॥

मनस्विनी । स्त्री० प्रशस्तमनसिस्त्रि
याम् ॥ नान्तलक्षणोङीप् ॥

मनहंस । पु० अतिशक्वरीछन्द
१५ प्रभेदे ॥ सगण विधायपयो
धरद्वयसुन्दरम् ० भगण ततोपिवि
धायचामरतोमरम् । मनहंसहंस
मिदन्त्वपञ्चदशाक्षरम् भणितम्भुज
ङ्गमनायकेनमनोहरम ॥ यथा ।
नवमञ्जुवञ्जुलकुञ्जकूजितकोकि
ले०मधुमत्तचञ्चलचञ्चरीककुलाकु
ले । समयेतिधीरसमीरकम्पित
मानसे ० किमुखण्डमानमनोरथे
नविखिद्यसे ॥

मनाक् । अ० अल्पे ॥ मन्दे ॥ मन
नम् । मनज्ञाने । आक् प्रत्यय ॥

मनाका । स्त्री० करिण्याम् ।
हस्तिन्याम् ॥ मन्यते । मन० ।
बलाकादयश्चेतिसाधु ॥

मनाक्करम् । न० मगल्यायाम् । म-
ल्लिकागन्धयुक्तागुरुणि ॥ त्रि० ई

मत्कार ॥

मनायी । स्त्री० मनो पत्न्याम् ॥ मनुशब्दपुंयोगे० मनोरौवेत्यैकारादेशस्ततोङीप् ॥

मनावी । स्त्री० मनाव्याम् ॥ मनोस्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौकारादेशस्ततोङीप्च ॥

मनित । त्रि० बुद्धे । ज्ञाते ॥ मन्यतेस्म । मनुअवबोधने । क्त । यस्यविभाषेत्यस्यानित्यत्वादिट् ॥

मनीकम् । न० अञ्जने ॥

मनीषा । स्त्री० बुद्धौ धिषणायाम् शेमुष्याम् ॥ ईषणम् ० ईषा । ईषगतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय । टाप । मनसईषा । शकन्ध्वादि ॥

मनीषिका । स्त्री० मनीषायाम् ॥

मनीषितम् । न० मनीषायामभिनिविष्ट मनीषितम् । प्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्चेति० णिचि० तदन्तात्० क्त ॥ इच्छायाम् ॥

मनीषी । पु० ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्यादित्वादिनि ॥ यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता ॥ मनसईषितरिसर्वज्ञईश्वरे ॥ पृषोदरादि । ब्रह्मविदि ॥ अकृतफलाभिसन्धौ । सत्त्वशुद्धिद्वारेणमनसोबाध्यजन्यात्ममनीषावति ॥ विवेकि

नि । प्रमाणकुशले ॥

मनु । पु० ब्रह्मण पुत्रे । सचप्रजापतिर्धर्मशास्त्रवक्ताच ॥ स्वायम्भुवादिषु ॥ प्रतिकल्पे चतुर्दशमनवोभवन्ति । तेषानामानियथा । स्वायम्भुव १ सचगायत्र्याब्रह्मणोजात । स्वारोचिष २ । उत्तम ३ । तामस ४ । रैवत ५ । चाक्षुष ६ । सचध्रुवपौत्रातरिपुञ्जयातब्रह्मद्रौहित्यावीरणकन्यायावैरिण्याजात । एतेषडतीता । वैवस्वत ७ । अयञ्चसूर्यात्सञ्ज्ञायाजातोवर्त्तमानएव ॥ सावर्णि ८ । सतुसूर्याच्छायायाभविष्यति । दक्षसावर्णि ९ । ब्रह्मसावर्णि १० । धर्मसावर्णि ११ । रुद्रसावर्णि १२ । देवसावर्णि १३ । इन्द्रसावर्णि १४ । एतेभविष्यन्ति ॥ मात्स्ये नवमादिमनूनानामान्तराण्यक्तानि । यथा० रौच्य ९ असौरुचिप्रजापते पुत्र । भौत्य १० । असौभूतिप्रजापते पुत्र । मेरुसावर्णि ११ असौब्रह्मण पुत्र । ऋतु १२ ऋतुधामा १३ । विष्वक्सेन १४ ॥ इतिमात्स्ये नवमाध्यायमारभ्यैकविंशत्यध्यायपर्यन्तचतुर्दशमनूनानिरूपणमस्ति ॥ ब्रह्मणोदिवसे ब्रह्मन् मनवश्चतुर्दश । भवन्तिपरिम

पश्चतेषाकालकृतश्नृणु ॥ सप्तर्षय सुरा शक्रोमनुस्तस्य नवोन्नृपा । एककाले हिसृज्यन्ते स क्रियन्ते चपूर्ववत् ॥ चतुर्युगाणासङ्ख्यातमधिकाह्येकसप्तति । मन्वन्तरमनोकाल सुरादीनाश्चसत्तम ॥ अष्टौशतसहस्राणिदिव्ययासङ्ख्ययास्मृता । द्वापञ्चाशत्तथान्यानिसहस्राण्यधिकानिच ॥ त्रिंशत्कोव्यस्तु सम्पूर्णा सङ्ख्याता सङ्ख्यया द्विज । सप्तषष्टिस्तथान्यानिनियुतानिमहामुने ॥ विंशतिश्वसहस्राणि कालोयमधिकविना । मन्वन्तरस्य सङ्ख्येयमानुषैर्वत्सरैद्विज ॥ मन्त्रे ॥ मनुष्ये० । जिनभेदे ॥ प्रजापतौ ॥ कविविशेषे ॥ स्वायम्भुवप्रणीत स्मृतिविशेषे ॥ मनुते । मनुअव बोधने । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिवन्धिमनिभ्यश्चेत्यु ॥ मन्यते । मनज्ञाने । पूर्ववत्० उ ॥

मनु । स्त्री० मनो पत्न्याम् ॥ मनोस्त्रीतिविग्रहे० पुयोगे० मनोरौवेत्यौकारैकाराभावे० तत्सन्नियोगशिष्टोङीप् चनभवति ॥ पृक्कायाम् ॥

मनुज । पु० मनुष्ये ॥ मनोर्जात । जनी० । पञ्चम्यामितिड ॥

मनुजपति । पुं० नरेन्द्रे । मनुजानापति । ॥ मध्यगुरुसञ्ज्ञायाम् ० ।ऽ।० ॥

मनुजी । स्त्री० मनुष्याम् ॥

मनुभू । पुं० मनुष्ये ॥

मनुराट् । पु० कुबेरे । निधिनाथे । श्वेतोदरे ॥

मनुषी । स्त्री० मानुषस्त्रियाम् । मनुष्यस्यस्त्रीजातौ ॥ योपधप्रतिषेधे० गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधइतियोपधाज्जातेर्ङीष् । हलस्तद्धितस्येतियलोप ॥

मनुष्य । पु० मानुषे । मर्त्ये । मनुजे । मानवे । नरे ॥ अथन्तुअर्वाकस्रोतोब्रह्मणोनवम सर्गएकविधस्य । यथा । अर्वाक्स्रोतस्तुनवम रक्तैकविधोनृणाम् । रजोधिका कर्मपराद्दु खेचसुखमानिन ॥ अपिच । तस्यापिध्यायत सर्गसत्याभिध्यायिनस्तत । प्रादुर्बभूवचाव्यक्तादर्वाकस्रोतस्तुसाधक ॥ यस्मादर्वाक्प्रपद्यन्ते ततोर्वाक्स्रोतसस्तुते । तेचप्रकाशबहुलास्तमोद्रिक्तारजोधिका ॥ तस्मात्ते दु खबहुला भूयोभूयश्चकारिण । प्रकाशाबहिरन्तश्चमनुष्यासाधकास्तुते इतिवह्निपुराणम् ॥ शास्त्रीयज्ञानकर्मयोग्योह्ययम् ॥ अत्रपशुमनुष्यविभागोवाराहाम् ६७ अध्याये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥

मनुष्यतीर्थम् । न० प्रजापतितीर्थे । कनिष्ठामूले ॥

मनुष्यधर्मा । पु॰ धनदे । श्रीदे । कुबेरे ॥ मनुष्यस्येवधर्म्म आचार । श्मश्रुलत्वादिर्यस्य । धर्मादनिच्केवलात् ॥

मनुष्ययज्ञ । पु॰ अतिथिपूजने । नृयज्ञे ॥

मनुष्यलोक । पु॰ अधिकृतब्राह्मणादिविशिष्टदेहे ॥

मनोगुप्ता । स्त्री॰ नागजिह्वायाम् । मनःशिलायाम् ॥ मनसागुप्ता । कर्तृकरणसमास ॥ इत्युपमेंदं । मनोगुप्तावातहरीतक्ष्णामयविनाशिनी । सुशीतामधुरातीवरक्तपित्तप्रणाशिनी ॥

मनोज । पु॰ कामदेवे ॥ मनसिजायतेशृङ्गारादिरूपेणप्रादुर्भवति । जनी॰ । सप्तम्याजनेर्ड । तत्पुरुषेकृतिबहुलमितिबहुलग्रहणात्लुगभावाभाव ॥

मनोजन्मा । पु॰ कामदेवे ॥ मनसोजन्मयस्यस ॥

मनोजव । पु॰ हरौ ॥ मनसोवेगइवजवोस्यसर्वगतत्वात् ॥ हनुमति मनसोवेगे ॥ त्रि॰ पितृसन्निभे । पितृतुल्ये । अतिशयवेगवति ॥ जवति । जु सौच । अच् । मनोज॰वेगवद्यस्मिन् ॥

मनोजवस । पु॰ पितृसन्निभे ॥ मनोजवतेस्मिन् । औणादिकोऽस ॥

मनोजवृद्धि । पु॰ कामवृद्धिक्षुपे ॥

मनोज्ञम् । न॰ सरलकाष्ठे ॥ त्रि॰ शोभने । मनोहरे । सुन्दरे । रुचिरे ॥ मनसाजानाति । इगुपधेतिक । निवृत्तप्रेषणोचजानाति ॥

मनोज्ञा । स्त्री॰ मनःशिलायाम् ॥ राजपुत्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ जात्याम् ॥ मदिरायाम् ॥ स्थूलजीरके ॥

मनोनाश । पु॰ मनसोलये ॥ मनसोनाशोनामवृत्तिरूपपरिणामपरित्यज्यसर्ववृत्तिविरोधिनानिरोधाकारेणपरिणाम ॥ सहस्राङ्कुरशाखात्मफलपल्लवशालिन । अस्यससारवृक्षस्यमनोमूलमितिस्थितम् ॥ संकल्पमेवतन्मन्ये सकल्पोपशमेनतत् । शोषयामियथाशोषमेतिससारपादप ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिदुष्टश्चौरोमयात्मन । मनोनाममनिहन्म्येनमनसाहचिरहृत ॥ इतिजनक ॥ वशिष्ठोप्याह । अस्यससारवृक्षस्यसर्वोपद्रवदायिन । उपायएकएवास्तिमनस स्वस्यनिग्रह ॥ मनसोभ्युदयोनाशोमनोनाशोमहोदय । ज्ञोमनोनाशमभ्येतिमनोज्ञस्यहिशृङ्खला ॥ तावन्निशीथवेतालावल्गन्तिहृदिवासना । एकतत्त्वदृढाभ्यासाद्यावन्नविजितमन ॥ प्रक्षीणचित्तदर्पस्यनिगृहीतेन्द्रियद्विष । पद्मि

न्यङ्गवहेमन्तेचीयन्तेभोगवासना . ॥ हस्तहस्तेनसम्पीडाद्दन्तैर्दन्तान् विचूर्ण्यच । अङ्गान्यङ्गैः समाक्रम्य जयेदादौस्वकमन ॥ एतावतिभूमितलेसुभगास्तेसाधुचेतना पुरुषा । पुरुषकथासुचगण्यानजितायैचेतसाखेन ॥ हृदयबिलेकृतकुण्डलउल्वणकलनाविषोमनोभुजग . । य- स्योपशान्तिमागतमुदितंतमव्ययबन्दे ॥ इति ॥ द्वौक्रमौचित्तनाशस्य योगोज्ञानस्तथाचब । योगस्तद्वृत्तिरोधेहिज्ञानसम्यगवेक्षणम् ॥ असाध्य कस्यचिद्योग कस्यचिद्ज्ञाननिश्चय । प्रकारौद्वौततोदेवोजगादपरमेश्वर ॥ इतिच ॥ मनोनाशाभ्यासस्तु० अत्यन्ताभावसम्पत्तौज्ञातुर्ज्ञेयस्यवस्तुन । युक्त्याशास्त्रैर्यतन्तेयेतेप्यत्राभ्यासिन स्थिता ॥ ज्ञातृज्ञेययोर्मिथ्यात्वबोधरभावसम्पत्ति ० स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति । युक्तिर्योग । सोयमनोनाशाभ्यास ॥

मनोन्मनी । स्त्री० योगिनोऽवस्थाविशेषे ॥ यथाहुर्योगतारावल्यामीश्वराचार्या ० । नेत्रेयथोन्मेषनिमेषशून्येवायुर्यथावर्जितरेचपूर मनश्चसङ्कल्पविकल्पशून्यमनोन्मनीसामयितन्निधत्ताम् ॥ चित्तेन्द्रियाणांचिरनिग्रहेणश्वासप्रचारेशमितेसमस्ते । निवातदीपायुतनिश्चलाङ्गा- मनोन्मनीसामयिसन्निधत्तामिति ॥

मनोभव । पु० कामदेवे ॥ मनसिभवोऽस्य ।

मनोभू । पु० कन्दर्पे । मनसा० मनस मनसिवाभवति। भुव क्विप् ॥

मनोमय । पु० पञ्चकोषान्तर्गततृतीयकोषे । इच्छाशक्तिमति० करणरूपे मनस्तुकर्मेन्द्रियै सहितमनोमय- कोषोभवतीति ॥ अहन्ताममतादेहेगृहादौचकरोतिय । कामाद्यवस्थयाभ्रान्तोनासावात्मामनोमय ॥ आत्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् ॥ चि० मन प्राये ॥

मनोयोनि । पु० कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ । पु० इच्छायाम् । स्पृहायाम् ॥ मनएवरथोऽत्र । मनसोरथइववा ॥ मनोरथानांनसमाप्तिरस्तिवर्षायुतेनाप्यथवाब्दलक्षै । पूर्णेषुपूर्णेषुपुनर्नवानामुत्पत्तय सन्तिमनोरथानाम् चि० मनस्तुष्टिकरे । चित्तपरिकल्पिते० चित्तपरिच्छेद्येमनस्त्वर्तमाने ॥

मनोरम । चि० सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनोरमयति । रम् ० । ण्यन्त । कर्मण्यण् ॥ दक्षिणपश्चिमहारस्थे ॥

मनोरमा । स्त्री॰ मनोज्ञायाम् । कामायाम् । मञ्जुलायाम् । मनोहरायाम् । सुदर्याम् ॥ वृत्तशक्तिविशेषे । तारायाम् । लोकेश्वरात्मजायाम् ॥ पङ्क्तिच्छन्द १० प्रभेदे । यथानरजगैर्भवेन्मनोरमा । यथा । तरणिजातटे विहारिणी॰ व्रजविलासिनीविलासत । मुररिस्तनु पुनातुव ॰ सुकृतशालिनामनोरमा ॥

मनोवती । स्त्री॰ ब्रह्मण पुर्याम् ॥ यथा । चतुर्दशसहस्राणियोजनानाखयम्भुव । मध्ये मनोवतीनामपुरीलोकेशवन्दिता ॥ याचकाराखणानुचैर्वियन्मार्गान्महश्रिया । सावित्या, स्वर्णमानिवस्वर्गकामातिवर्तिनी ॥ तस्यामुपासतेदेवामुनयस्तमशीजस । महायोगेश्वरसिद्धायमाद्यैर्भूतवेधसम् । मध्ये॰ बृन्दाखष्टदिक्पाना ममरावत्याद्यष्टपुरीणामथवत्यर्थं ॥ वृतिमृगेन्द्रसहिता ॥

मनोवित् । पु॰ लोकायतभेदे । सहिभान्त्यामनएवात्मेतिनिश्चिनोति । म

मनोहर । पुं॰ कुन्दवृक्षे ॥ न॰ सुवर्णे ॥ त्रि॰ मनोज्ञे ॥ मनोहरति हरतेरनुद्यमने॰ कृत्यच् ॥

मनोहरा । स्त्री॰ जातीवृक्षे ॥ स्वर्णयूथ्याम् ॥ मनोज्ञायाम् ॥ टाप् ॥

मनोहर्त्ता । त्रि॰ मनोहरणकर्त्तरि ॥

मनोहारि । न॰ सुन्दरवाक्ये ॥ त्रि॰ मनोहरे ॥ प्रिये ॥

मनोज्ञा । स्त्री॰ मन शिलायाम् ॥ मन शब्दे श्यति । शोऽशब्दे । आतस्रोपसर्गकृत्यङ् । टाप् ॥

मन्तव्य । त्रि॰ ज्ञेये ॥ मननीये । भाव्ये । विभावनीये ॥ मन्तव्यश्चोपपत्तिभि ॥

मन्तु । पु॰ अपराधे ॥ मनुष्ये ॥ प्रजापतौ ॥ न॰ मन्त्रणायाम् ॥ मन्यते । मनज्ञाने । कमिमनिजनीत्यादिना॰ तु ॥

मन्ता । पु॰ मन्त्रिणि ॥ मन्यते, मन । बहुलमन्यत्रापीति॰ तृच् ॥

मन्त्र । पु॰ वेदविशेषे ब्राह्मणभिन्ने वेदभागे । याज्यापुरोनुवाक्यादौ । देवेभ्योयेनोहिश्यहविर्दीयतेतत्र ॥ स्वरतोवर्णतोवाहीनस्तमन्त्रस्थानिष्टफलजनकत्वमुक्तं शिक्षायामहाभाष्ये च । मन्त्रोहीन स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानहिनस्तियथेन्द्रशत्रु स्वरतोपराधादितिशिक्षा । दुष्ट ।

शब्दः स्वरत इति भाष्यपाठः । दुष्टान् शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणमिति ॥ अत्र कैयटः । स्वरेणास्वरतः । आद्यादित्वात्तसिः । मिथ्याप्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् यथेन्द्रशत्रुः शब्दः स्वरदोषात् यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचाराय त्वष्ट्रारब्धे । तत्रेन्द्रशत्रुर्वर्द्धस्वेति मन्त्रजहिते । तत्रेन्द्रस्य शमयिता शातयिता वा भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः । तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः । तत्रेन्द्रादिमित्त्वे सिद्धे सति इन्द्रस्य शत्रुर्भवेत्यस्यार्थे प्रतिपाद्ये अन्तोदात्ते प्रयोक्तव्ये आद्युदात्तत्वे न प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता सम्पन्नः । इन्द्रशत्रुत्वस्य विधेयत्वात् सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः । यथा राजा भव युध्यस्वेति । ऊह्यमानस्य चामन्त्रत्वात् यज्ञकर्मणीति जपादिपर्युदासे मन्त्राणामेकश्रुतिर्विधीयमानाऽत्र भवतीति ॥ * ॥ मन्त्रान्तं कर्म सन्निपात इति न्यायः ॥ प्रयोगसमवेतार्थस्मारकवेदभागे ॥ मन्त्राणां तादृशार्थस्मारकत्वेनैवार्थवत्त्वम् । न तु तदुच्चारणमदृष्टार्थं सम्भवति । दृष्टफलकत्वे अदृष्टकल्पनाया अन्याय्यत्वात् । न च दृष्टार्थस्मरणस्य प्रकारान्तरेणापि सम्भवान् मन्त्राम्नानं व्यर्थमिति वाच्यम् । मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात् ॥ देवादीनां साधने । मायाबीजादौ ॥ गुह्यवादे । रहसि कर्त्तव्याऽवधारणे । मन्त्रणायाम् ॥ तस्य च पञ्चाङ्गानि भवन्ति । तानि च । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिरिति ॥ मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् । कुर्याद्यथाऽस्य न विदुः कर्मणामाफलोदयम् ॥ गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः । अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥ षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स धार्यते । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न बुध्यते ॥ मन्त्र्यते मन्त्र्यते वा । मत्रि गुप्तभाषणे । घञ् ॥ पञ्चमराशौ ।

मन्त्रकृत् । पु० मन्त्रिणि । मन्त्रव्याकारके ॥ मन्त्रान् कृतवान् । सुकर्मपापमन्त्रपुण्येषु कृञ इति क्विप् ॥ मन्त्रद्रष्टरि ॥ दौत्यकृति ॥ मन्त्राणां द्रष्टरि प्रयोक्तरि

च ॥

मन्त्रगण्डक । पु॰ विद्यायाम् ॥

मन्त्रगूढ । पु॰ चरे ॥ मन्त्रोगूढोय स्मिन् ।

मन्त्रगृहम् । न॰ मन्त्रणागारे ।

मन्त्रजा । स्त्री॰ मन्त्रशक्तौ ॥

मन्त्रजिह्व । पु॰ वह्नौ ॥

मन्त्रज्ञ । पु॰ चरे ॥ त्रि॰ । मन्त्र-विदि ॥

मन्त्रज्वाल । पु॰ अग्नौ ॥

मन्त्रणम् । न॰ मन्त्रे ॥ मवि॰ । भावेल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री॰ मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्ज्जनीयानि यथा । मन्त्रे पञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धय । उदयास्त्रिन्तनीयाश्चस्थैर्य्यैनव्यादिसूक्तय ॥

मन्त्रणागारम् । न॰ मन्त्रगृहे ॥

मन्त्रद । त्रि॰ मन्त्रदातरि ॥

मन्त्रदाता । त्रि॰ मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ अदीक्षितस्यमूर्खस्यनिष्कृतिर्नास्तिनिश्चितम् । सर्व्वकर्म्मस्वनर्हश्चनरकेतत्पशोः स्थितिः ॥ जन्मदाताऽन्नदाताचामातान्ये गुरवस्तथा । पारेकर्त्तुं न शक्यन्ते चैरेस सारसागरे ॥ विद्यामन्त्रज्ञानदातानिपुण , पारकर्म्मणि । नशक्त शिष्यमुद्धर्त्तुं मीश्वर स्त्वीश्वरो ऽपर , ॥

मन्त्रदीधिति । पु॰ अग्नौ ॥

मन्त्रनिर्णय । पु॰ मन्त्रनिश्चये ॥ यथा । मन्त्रमूलयतोराज्यंततो मन्त्रसुरक्षितम् । कुर्य्याद्यथातन्नविदु कर्म्मणामाफलोदयात् ॥ अर्थानर्थौद्वियचोभौस श्रयस्यपरीच्यते । समचष्टतिविद्वेय श्रेष्ठा स्वखलुविभ्रमा ॥ एकमेवविषं हन्तिशस्त्रेणैकश्चवध्यते । सराष्ट्रसम्पद हन्तिराजानंमन्त्रविप्लव ॥ कारिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्म्मार्थकामकार्याणि तथामन्त्रोन भिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादं वारहोगत ॥ स्वपथेनि शलाकेवातत्रमन्त्रोविधीयते ॥ तत्रसाम प्रयोक्तव्य कार्येषुगुरुवत्स्वपि । दानलुब्धेषिभेदश्शङ्कितेष्वपिनिश्चय ॥ जडमूकान्धवधिरास्तिर्य्यग्योनीन्वयोधिकान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकालेनिषेधयेत् ॥ इतिसम्यक्कृत प्रोक्ताराजनीतिरियमया । यत्त्रिवर्गाविरुद्ध स्याद्राजनीतिस्तदुच्यते ॥ इति युक्तिकल्पतरौनीतियुक्ति ॥

मन्त्रपूत । त्रि॰ मन्त्रेणपवित्री कृते ॥

मन्त्रपूतात्मा । पु॰ गरुडे ॥ त्रि॰ मन्त्रेणपवित्रात्मनि ॥

मन्त्रवित् । पु॰ चरे ॥ मन्त्र

मवी

वेत्ति । विद० । क्विप् ॥ त्रि० मन्त्रज्ञातरि ॥

मन्त्रवेश्म । न० मन्त्रगृहे । चिन्ती द्ववसिते ॥

मन्त्रशक्ति । स्त्री० राज्ञांशक्ति विशेषे । ज्ञानबले ॥ सन्ध्या दिषड्गुणयथावत्स्थापनज्ञानबलम न्त्रशक्ति । पञ्चाङ्गमन्त्रोमन्त्रश क्तिरित्यन्ये ॥

मन्त्रस्पृक् । त्रि० मन्त्रकरणकस्प र्शकर्त्तरि ॥

मन्त्रित । त्रि० मन्त्रेणसंस्कृते । अभिमन्त्रिते ॥

मन्त्री । त्रि० उपदेष्टरि । साधके ॥ पु० मन्त्रजातकर्त्तव्यनिश्चयकर्त्त-रि । धीसचिवे । अमात्ये ॥ कार्य सहाया सचिवाबुद्धिसहायाश्चम न्त्रिणः प्रोक्ताइतिभेदः । तल्लक्षणंयथा । मन्त्रीभक्तः शुचिः शूरोऽनुरक्तोबुद्धिमान्क्षमी । आन्वी क्षिक्यादिकुशलः परिच्छेदीसुदेश जः ॥ विद्यादिगुणसम्पन्ना विप्रा कार्याहिमन्त्रिणः । यथोक्तं कालिकापु राणे । मन्त्रिणस्तुनृप कुर्याद्विप्रान् विद्याविशारदान् । विशुद्धांश्चकुलीना न्स्वधर्मार्थकुशलानृजून् ॥ मन्त्रयेत्तैः समकालेनात्यर्थंबहुभिश्चरेत् एकैकै नैवकर्त्तव्यं मन्त्रस्तुविनिश्चयम् ॥ व्य स्तैश्चैवसमस्तैश्चवान्यव्यपदेशतः

मथ

। स्वयन्तुमन्त्रगृहस्थूलआरुह्यम न्त्रयेत् ॥ अरण्ये नि शलाकेवान-यामिन्याकदाचन । शिशून्शाखामृ गान्पण्डान्शुकान्वैसारिकांस्तथा ॥ वर्जयेत्मन्त्रगेहेषुमनुष्यांश्चस्ता स्तथा । दूषणंमन्त्रभेदेषुनृपाणांयच्च जायते ॥ नतत्सम्यक्समाधातुंद क्षैर्नृपशतैरपीति ॥ अपिचमत्स्यपुरा णे । बहुभिर्मन्त्रयेत्कामंराजामन्त्र-पृथक्पृथक् । मन्त्रिणामपिनोकुर्यात् मन्त्रीमन्त्रप्रकाशनम् ॥ नक्वचित्कस्य विश्वासोभवतीहसदानृणाम । नि श्चयस्तसदामन्त्रे कार्यएकेनसूरिणा । भवेद्धानिश्चयावाप्ति परबुद्ध्युपजीवनात् । एकस्यैवमहीभर्त्तुर्भूय कार्योविनिश्चय ॥ इति ॥ म न्त्रोगुप्तभाषणमस्यास्ति । अतइनि. ॥ यद्वा । अवश्यमन्त्रयते । मन्त्रिगुप्तभाषणे । आवश्यकेणिनि ॥ य ज्ञादिषिन्यन्तोवा ॥

मन्थ । पु० मन्थानदण्डे ॥ दिवाकरे ॥ सक्तवे । द्रवद्रव्ययुक्तेषुसक्तुषु । यथा । सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छोनाति सान्द्रश्चमन्थइत्यभिधीयते ॥ पेय-विशेषेयथा । जलेचतुष्पलेशीतेक्षुण्ण द्रव्यपलंक्षिपेत । मृत्पात्रेमन्थयेत् सम्यक्तस्माच्चद्विपलंपिवेत् ॥ क्षुण्ण चूर्णीकृतमन्थयेत् । मृद्नीयात् ॥

नेत्ररोगे। नेत्रमले ॥ मारणे ॥ मथ्यतेऽनेन। मथिर्हिसासक्लेशनयो। हलश्चेतिघञ् ॥ मन्थने ॥
मन्थजम् । न० नवनीते ॥
मन्थदण्ड । पु० मन्थाने । मन्थानदण्डे । रई० हू० भा० ॥
मन्थनम् । न० विलोडने ॥ कुन्थने ॥ पु० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे ॥ मथ्यतेऽस्याम् । मन्थविलोडने। करणेतिल्युट् ॥
मन्थर । पु० कोषे ॥ फले ॥ वाधे ॥ मन्थाने ॥ सूचके मन्दगामिनि । योर्वार ॥ कोपे ॥ केशे ॥ न० कुसुम्भम् ॥ त्रि० मन्दे ॥ पृथौ ॥ वक्रे ॥ मन्दगामिनि । जडे ॥ सूचके ॥ नीचे ॥ मन्थतिपादौ । मथि० । बाहुलकादरन् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थरु । पु० कुठेरी । चामरवाते ॥
मन्थशैल । पु० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थान । पु० मन्थदण्डे । वैशाखे रई० हू० भा० ॥ आरग्वधे ॥ न० गायत्रीच्छन्द ६ प्रभेदे ॥ यथा । कर्णध्वजानन्दमाधायनिश्चयश्च । बन्धैरसैर्यत्तु मन्थानमेतत्तु ॥ यथा । शीतांशुवक्त्रायपाथोजनेत्राय । वन्दस्वनन्दस्यभव्यायपुत्राय ॥ मन्थति । मथि० । बाहुलकादानच् ॥
मन्थानक । पु० तृणभेदे । रहिते । दृढमूले । तृणाङ्घ्रिपे ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे । गर्गर्याम् । कलस्याम् । मथानी० हू० भा० ॥
मन्द । पु० शनैश्चरे ॥ हस्तिजात्यन्तरे ॥ शीर्षपादे । यमे ॥ प्रलये ॥ त्रि० अतीक्ष्णे । अलसे । शीतके ॥ मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यरहिते ॥ रोगिणि ॥ अल्पे ॥ मदरते ॥ खले ॥ अशुद्धचित्तत्वेनज्ञानाधिकारमप्राप्ते ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । पचादाच् ॥ न० ईषदर्थे ॥
मन्दग । त्रि० मृदुगामिनि । अशीघ्रगे ॥
मन्दगति । पु० शनौ ॥ त्रि० मन्दगामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले । मन्थरे ॥ मन्दं गच्छति० तच्छील: । गमॢ० । सुप्यजातौणिनिस्ताच्छील्ये
मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनिमातरि । छायायाम् । तपत्याम् ॥
मन्दट । पु० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे ॥ मन्दते । मदि । कृपृवृजिमन्दीत्यादिनाक्यु ॥

मन्दप्रज्ञ । त्रि॰ जडबुद्धौ ॥ मन्दाज
डाप्रज्ञाधीर्यस्य स ॥
मन्दभाग्य । त्रि॰ विघ्नाकुले ॥
मन्दभू । पुं॰ मन्दभूमौ ॥
मन्दर । पु॰ मन्थशैले ॥ मन्दारपा
दपे । स्वर्गे ॥ हारभेदे ॥ मेरोर्द्वा
र्थ्यर्थप्राच्यादिदिशिस्थे तत्पर्णे पञ्चाशत्
सहस्रोच्छ्राये विष्कम्भशैले ॥ तत्र
योजनसहस्रोन्नतिमान्कदम्बपाद
पोस्ति । सुराङ्गनाक्रीडाप्रधानेपि
मन्दर । न॰ वर्णवृत्तान्तरे ॥
छन्दसि भो यदि । मन्दरमत्रति ॥
शङ्करशङ्कर । वैरिभयङ्कर ॥ त्रि॰
बहुले ॥ मन्दे ॥
मन्दिरहरिण । पु॰ जम्बुद्वीपोपद्वीप
विशेषे ॥
मन्दसान । पु॰ अग्नौ ॥ जीवे ॥
निद्रायाम् ॥ मन्दते । मदि॰ । क
श्चिन्वविमन्दिसहिभ्य किदित्यसा
नच् ॥ वेदभाष्ययौगिकार्थएवपुरस्का
त ॥
मन्दा । स्त्री॰ सङ्क्रान्तिविशेषे ॥ अ
जादित्वाट्टाप् ॥
मन्दाकम् । न॰ स्तवने ॥
मन्दाकिनी । स्त्री॰ वियद्गङ्गायाम् ।
स्वर्णदाम् । सुरदीर्घिकायाम् ॥
प्रधानधारायास्वर्गेसाचमन्दाकिनी
स्मृता । योजनायुतविस्तीर्णाप्रस्थे
नयोजनास्मृता ॥ क्षीरतुल्यजलाय

सुदत्य सुन्दतरङ्गिणी । वैकुण्ठात्
ब्रह्मलोकस्ततस्स्वर्गंसमागता ॥
सङ्क्रान्तिविशेषे ॥ यथा । बुधेमै
त्रसन्ने तु मन्दाकिनी सानृपाणान्सुखी
स्यभवेत्तत्रमासे ॥ जगतीछन्द
१२ प्रभेदे ॥ ननररघटितातुमन्दा
किनी । यथा । बलिदमनविधौबभौ
सङ्गता॰ पदजलकद्दियस्यमन्दाकिनी
सुरनिहितसिताम्बुजस्रङ्निभाहर
तु जगदघ सपीताम्बर ॥ मदमक
ति॰ तच्छीला । चक्रकुटिलायाग
तौ । सुपीतिणिनि । ङीप् ॥
मन्दाक्रान्ता । स्त्री॰ अत्यष्टिच्छन्द १७
प्रभेदे ॥ मन्दाक्रान्ताम्बुधिरसनगैर्मो
भनौतौगयुग्मम । यथा । प्रेमाला
पे प्रियवितरणे प्रोषितालिङ्ग
नाद्ये मन्दाक्रान्तातदनुनियतवश्यता
मेतिबाला । एवम्मिथ्यावचनसुधया-
राधिकाया सखीनाप्रीत पायात्
स्मितसुवदनोदेवकीनन्दनोन ॥
मन्दायम् । न॰ लज्जायाम् ॥ मदमच
बागायत्र ॥
मन्दाग्नि । पु॰ अर्कनिष्कासनाथाग्नि
विशेषे ॥ कफद्वारात्मजठरानले ॥
तस्यनिदानादियथा । मन्दस्तीक्ष्णोथ
विषम समश्चेतिचतुर्विध । क
फपित्तानिलाधिक्यात्तत्साम्याज्जा
ठरोऽनल ॥ विषमोवातजान्रो-
गान्तीक्ष्ण पित्तसमुन्नतान् करो

स्यग्निस्तथाम द्दीविकारान्कफसम्भवान् ॥ समासमाग्ने रशितामावा सम्यग्विपच्यते । चल्पापिनैवमदाग्नेर्विषमाग्नेस्तुदेहिन ॥ कदाचित्पच्यतेसम्यक् कदाचिन्नविपच्यते ॥ इति ॥ तस्यौषधंयथा । चित्रकस्याष्टभागानिशूरणस्यचषोडश । शुण्ठ्यास्त्वारिभागानिमरिचानाद्वयं तथा ॥ पिप्पलीपिप्पलीमूलविडङ्गानांचतुष्टयम् । अष्टौमूषलिभागाश्चत्रिफलायास्तुष्टयम् ॥ द्विगुणेनगुडेनैषांमोदकानिहिकारयेत् । तद्भक्षणमजीर्णं द्विपाण्डुरोगश्चकामलाम् ॥ अतिशोषितमन्दाग्निप्लीहायश्चनिवारयेत् । इ० ॥

मन्दायु । वि० अल्पायुषि ॥

मन्दार । पुं० सुरद्रुमविशेषे । पारिभद्रे । निम्बतरौ । बकायन० इ० भा० ॥ अर्कपर्णे । आक० इ० भा० ॥ मन्दते० मोदयति । मदिस्तुत्या दौ । अञ्जिसदिमन्दिभ्यआरन् ॥ मन्दाअरायस्य ॥ यद्वा ॥ मन्दाआराधारा अस्य सरलत्वात ॥ मन्दमृच्छतिवा चरगतौ ॥ कर्मण्यण् ॥ मन्दानियर्त्तिं । अण् । मन्दे रर्यतेवा । घञ् ॥ तीर्थविशेषे ॥

मन्दारु । पुं० पारिजाते ॥ मन्दते । मदि० । बाहुलकादारु ॥

मन्दिकुक्कुर । पुं० मत्स्यविशेषे ॥

मन्दिर । पुं० मकरावासे । समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ अगारे । निशान्ते । वस्त्यै । सद्मनि ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्रवा । मदि० । इषिमदिमुदीतिकिरच् ॥

मन्दिरपशु । पु० बिडाले ॥

मन्दिरा । स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा । स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि । मादरी० इ० भा० ॥ म न्दतेऽत्र । मदिस्तुत्यादौ । मन्दिवासीत्युरच् ॥

मन्देह । पु० राक्षसविशेषाणांसञ्ज्ञायाम् ॥ यथा । सन्ध्याकालेतुसम्प्राप्तेरौद्रेपरमदारुणे । मन्देहाराक्षसाघोरा सूर्यमिच्छन्तिखादितुम् ॥ प्रजापतिकृत शापस्तेषांमैत्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणांमरणञ्चदिनेदिने ॥ तत सूर्यस्यतैर्युद्ध भवत्यत्यन्तदारुणम् । ततो द्विजोत्तमास्तोय प्रक्षिपन्तिमहामुने ॥ ओङ्कारब्रह्मसंयुक्त गायत्र्याभिमन्त्रि तम् । तेनदह्यन्तितेपापावज्रीभूतेनवारिणा इत्यादि- विष्णुपुराणे द्रष्टव्यम् ॥

मन्दोदरी । स्त्री० रावणस्यपत्न्याम् । मयासुरस्य पुत्र्याम् ॥

मन्दोदरीश । पु० रावणे ॥ मन्दो

र्या 'ईश' ॥
मन्दोदरीसुत । पु० इन्द्रजिति ॥
मन्दोष्णम् । न० ईषदुष्णे ॥ मन्दञ्च तदुष्णञ्च ॥ त्रि० तद्वति ॥
मन्द्र । पुं० गम्भीरध्वनौ ॥ मेघादिशब्दे ॥ मन्दते । मदि० । स्फायितञ्चीतिरक् । वाद्यविशेषे । मृदङ्गके ॥ त्रि० गम्भीरध्वनिवति ॥
मन्मथ । पु० कामदेवे । कुसुमायुधे ॥ कपित्थे ॥ मननमत् ० चेतना । मन० । सम्पदादित्वात्क्विप् । गमादीनाङ्क्वाविति नलोपः । तुक् । मथतीति मथः । मथि० । अच् । मतोज्ञानस्य मथः मन्मथः । मनो मथ्नातीति वा । पृषोदरादि । मिथुनलग्ने ॥ वत्सरविशेषे । ७८ ॥ सरोगं चतथादेविदाहज्वरसमन्वितम् । अभिभूतं जगत्सर्वं मन्मथे सुरपूजिते ॥
मन्मथानन्द । पु० महाराजचूते ॥
मन्मथालय । पु० आम्रे ॥
मन्मन । पु० गद्गदध्वनौ ॥ न० दम्पत्योः शनैर्भाषणे ।। सुरते कर्णमूलेषु यच्चदेशीयभाषया । दम्पत्योर्जल्पितं मन्दं मन्मनं तद्विदुर्बुधाः ॥
मन्मनस्क । त्रि० मन्मनसि ॥ मय्येव मनः सङ्कल्पात्मकं यस्य ॥
मन्मय । त्रि० मदेकचित्ते ॥ मापरमात्मानं तत्पदार्थं त्वं पदार्थाभेदेनसाक्षात्करणशीले ॥
मन्या । स्त्री० ग्रीवायाः पश्चाद्भागे०-स्थितायां शिरायाम् ॥ गलपार्श्वशिरायाम् ॥ मन्यतेऽनया । सञ्ज्ञायां समजेति क्यप् ॥
मन्याका । स्त्री० मन्यायाम् ॥
मन्यु । पु० क्रुधि ॥ दैन्ये ॥ शोके ॥ यज्ञे ॥ मन्यते । मन ज्ञाने । यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ मृगय्वादिर्वा ॥
मन्ये । अ० वितर्के ॥
मन्वन्तरम् । न० दिव्यानां युगानामेकसप्ततौ । किञ्चिदधिकैकसप्ततियुगात्मके मनोः कालविशेषे ॥ एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः । कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते ॥ मनवः स्वायम्भुवादयस्तेषामन्तरमवकाशः स्थितिरिति यावत् ॥ एकसप्ततिरित्यमरोक्तिः । अत्र यद्यपि गणनया० षड्युगेनाधिका सङ्ख्या सम्पद्यते० । यतः ० दैविकानां युगानां तु सहस्रं ब्रह्मणो दिनम् । मन्वन्तरं तथैवैकं तस्य भागाश्चतुर्दश ॥ ततः किञ्चिदधिका दिव्ययुगानामेकसप्ततिरिति० नामविधाने सर्वज्ञनारायणेनोक्तत्वात् । तथापि० अल्पत्वादिह तथा नोक्तमिति बोध्यम् । मन्वन्तरसङ्ख्यातवर्षाणि यथा । त्रि श-

न्तोव्यस्तुवर्णानामानुपूर्व्याद्विजोत्तमा । सप्तर्षिस्तथान्यानिनियुतान्यधिकानितु ॥ विंशतिस्तुसहस्राणिकालोय साधिकाविना । मन्वन्तरस्यसङ्ख्येषालिङ्गेऽस्मिन् कथिताद्विजा ॥ यथाङ्का ॥ ३०६७२०००० । एव चतुर्दशमन्वन्तरैर्ब्रह्मदिनं भवति ॥ ब्रह्मणोदिन मध्ये चतुर्दशमन्वन्तराणिभवन्ति । एकोमनुर्यावदधिकारीभवतिस कालोमन्वन्तरसञ्ज्ञकोभवति । तत्र मनूनानामानि यथा । स्वायम्भुवो मनु पूर्वस्तत स्वारोचिषोमनु । उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्तथा ॥ षडेते मनवोऽतीताअथ वैवस्वतोमनु । सावर्णा पञ्चरौच्यश्चभौत्यश्चागामिनस्त्वमी ॥ पुराणलक्षणं ॥ मन्वन्तरं मनुर्देवामनुपुत्रा सुरेश्वर । ऋषयोंऽशावतारश्चहरे षड्विधमुच्यते ॥

मन्वादि । स्त्री० मासविशेषयुतिथिविशेषे ॥ अश्वयुक्शुक्लनवमी० कार्त्तिकेद्वादशीसिता । तृतीया चैत्रमासस्य० तथाभाद्रपदस्यच ॥ श्रावणस्याष्टमीकृष्णा पौषस्यैकादशीतथा । आषाढस्यापिदशमी माघमासस्यसप्तमी ॥ कार्त्तिकीफाल्गुनीचैत्री ज्येष्ठोपञ्चदशीसिता । माघमासे कुहूश्चैवकार्त्तिकीचतथे

वच ॥ एतामन्वादय प्रोक्तादत्तस्याक्षयकारिका ॥

मपष्ट । पु० )

मपष्टक । पु० ) वनमुद्गे ॥

मपुष्टक । पु० )

मम । अ० षष्ठ्यन्तकप्रतिरूपकमव्ययम् । ममेत्यभिमाने ॥

ममता । स्त्री० मदीयत्वाभिमाने ॥ भावे तल् ॥ ममत्वे ॥

ममतायुक्त । त्रि० कृपणे ॥

ममत्वम् । न० ममतायाम् ॥ भावे त्व ॥

ममापताल । पु० विषये ॥ मव्यति । मव्यबन्धने । मव्यतेर्यलोपो मश्चापतुट्चालङ्गतिमव्यते रालप्रत्ययस्तस्यापतुट्० आगमोधातोर्यलोपोमकारश्चान्त्यस्य ॥

मय । पु० दैत्यानांशिल्पिनि । मायाविनाशिल्पिनाञ्चाचार्ये ॥ वेसरे । अश्वतरे ॥ उष्ट्रे । करभे ॥ मीनाति० मयतेवा । मीङ्हिंसायाम्० मयगतौवा । पचाद्यच् ॥

मयट । पु० तृणहर्म्ये । तृणयुक्तहर्म्ये ॥

मया स्त्री० चिकित्सायाम् ॥

मयु । पु० किन्नरे ॥ मृगे ॥ मिनोति । डुमिञ्प्रक्षेपणे । भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्यउ इत्युः । मीनातीत्यात्वन्तुबाहुलकात् ॥

मयुराज । पुं० कुवेरे ॥ मयूनाराजा टच् ॥

मयुष्टक । पुं० वनमुद्गे । मकुष्ठके । मौठ०इ०भा० ॥ तिष्ठति । ष्ठा० । क्कुन् । मयुस्थासौष्टकश्च । पूर्वपदादितिषत्वम् ॥

मयूख । पु० किरणे । मौख०इ०भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमीते । माङ् माने । माङ् ऊखोमयश्च स्यू खप्रत्ययोमयादेशश्च ॥

मयूर पु । वर्हिणे । नीलकण्ठे । शिखावले । केकिनि । मोर०इ०भा० ॥ अस्यमांसगुणा । यथा । मयूर श्रोचनेत्राग्निमेधावर्णस्वरायुषाम् । हितोवल्योगुरुस्रोष्णोवातघ्न. शुक्रमांसद ॥ हेमन्तकालेशिशिरेवसन्तेसेव्य हिमायूरसुशन्तिमासम् । उष्णो हिवर्हिविषभोजनेस्वर्णाशरद्ग्रीष्मसुखं व्यपथ्य ॥ एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् ॥ वर्हिचूडाख्यौषधौ । खराश्वायाम् । कारव्याम् ॥ अपामार्गे ॥ मिनातिरोगम् । मीञ् हिंसायाम् । मिनातेरूरन् ॥ यद्वा । मयते । मयगतौ । खजादित्वादूर ॥ मह्यांरौतिवा । अन्येभ्योपोतिड । पृषोदरादि ॥

मयूरक । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न०तुत्थाञ्जने ॥

मयूरप्रतिकृति ॥ कन् ॥ मयूरकायतिवासादृश्यात् । कै० । आतश्चेतिक ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ । पु० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपदकम् । न० स्तनादौनखाघाते ॥

मयूरविदला । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० वर्हिचूडायाम् । शिखिन्याम् । शिखावलाख्यक्षुपे ॥ मयूराह्वाशिखाप्रोक्तासहस्राङ्घ्रिमेरुच्छदा । नीलकण्ठशिखालघ्वीपित्तश्लेष्मातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोरणी०इतिभाषा ॥

मरक । पु० मार्याम् । मारके । मारी०इतिभाषाप्रसिद्धे मरणे ॥ तस्यकारणादिर्यथा । यावन्मार्तण्डसूनुर्गविधनुषिझषेमन्मथेवास्तिनार्यांतावद्दुर्भिक्षपीडाभवतिचमरकसम्भ्रमंयातिलोका । हाहाकारातथोर्वीमनुजभयकरीफेरुरावैश्च भीमैः शून्यग्रामाभवेयुर्नरपतिरहिताभूरिकङ्कालमाला ॥ वक्रकारो

तिरविजौधरणीसुतोवामूलर्क्षस्त-
मघरेवतिमैत्रभेषु । कचोपभङ्गप
तनानिवसै निकानासव बलोकम
रथ जलधौतदेश ॥ (०*०)
मासाश्वीनिसमादायश्मशानाद्गृह
वायसा । प्रवाशृगालोथवामध्ये
पुरस्यप्रविशन्तिचेत् ॥ विकिर
न्तिगृहादीन्श्मशानसामङ्गीभवेत्
। चोरैयाइन्यतेलोक परचक्रस
मागम ॥ सङ्ग्रामश्चमहाघोरो
दुर्भिक्षमरकस्तथा । अद्भुतानि
प्रसूयन्ते तस्यदेशस्यविद्रव ॥ दे
वीमाहात्म्यपाठे नभैरवस्यस्तवेनच
। चत्रशान्तिर्भवेन्नूनतुलस्याविष्णु
पूजनात् ॥
मरकतम् । न॰ हरिद्वर्णमणिवि
शेषे । गारुत्मते । अश्मगर्भे-
। हरिन्मणौ । पन्ना॰ इ॰ सा
धारणलोकभाषाप्रसिद्धे ॥ अस्य
लक्षणयथा ॥ स्वच्छस्वच्छायस्नि
ग्धगात्रश्चमार्दवसमेतम् । अव्य
ङ्ग बहुरङ्ग शृ गारीमरकतशुभविशे
यात् ॥ कुलक्षण यथा । शर्करि
लकालिलरूक्षमलिनलघुहीनकान्ति
कल्माषम् । त्रासयुतंविकृताङ्ग
मरकतममरोपिनोपभुञ्जीत ॥ प
रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म
रकतरत्नमनेन । तु॰ । अ-
न्येऽप्यत्रोतिह ॥

मरकतपत्रिका । स्त्री॰ )
मरकतपत्री । स्त्री॰ पाच्याम् ॥
मरकम । न॰ मरकतमणौ ॥
मरणम् । न॰ वत्सनाभविषे ॥ प
ञ्चतायाम् । कालधर्मे । दृष्टा
न्ते । निधने । मृत्यौ ॥ मर
णं चेच्छयाकामदु खितोपिनवां
छति । रोगग्रस्तोपिदीनोपिन-
मुमूर्षतिकश्चनेतिभागवतम् ॥ अ-
पिच । मरणन्तृषिभि प्रोक्त सङ्ग
रैमङ्गलास्पदम् । यत्ततत्समान
बलयोर्योधयोर्युध्यतो क्षितेति ॥
अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य
त । भृग्वग्निजलसम्पातैर्मरण
प्रविधीयते ॥ न्यायमतेन॰ वि
जातीयात्ममन सयोगध्वंसे ॥
उपात्तानांपूर्वासांनिकायविशिष्टा-
नादेहेन्द्रियमनोबुद्ध्यहङ्कारबुद्धिवेद
नानांपरित्यागे ॥ नत्वात्मनोपि
नाश तस्यकूटस्थत्वात ॥ मरण-
प्राणवियोगोनतुनाश सतोम
त । मृङ्प्राणत्यागइत्युक्त स्व
यनष्ट 'कथत्यजेत् ॥ मृङोल्युट्
॥ लग्नाष्टमभवने ॥
मरत । पु॰ मरणे ॥ म्रियते।
मृङ्प्राणत्यागे । भृमृदृशियजिप
र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥
मरन्द । पु॰ )
मरन्दक पु॰ ) मकरन्दे ॥

मरहट्टा । पु॰ मात्रावृत्तप्रभेदे ॥ यथा । आदौकुरुषट्कलमथचतुष्कलम स्यानन्दमितोपि॰दृश्यवसुकादश भवतिवश्यमधिकशुभामवलोपि । विश्रतिनवसङ्ख्यभणितसुमुख्यन म्दितगुणगणकोटिमरहट्टावृत्तकि लजयकृत्तेकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिद्धि विधाताजगदन्तरगतशील॰दुरितद्रु मदाहीविश्वविगाहीकल्पचयकृत खेल॰भुवनत्रयवदितहरशिरसिस्थि रवास॰दृहकृतवहणापदेहिदुरापव मुक्ततिमिरविलास ॥

मराकालो । स्त्री॰ इस्त्रिकाल्याम् ॥

मराल । पु॰ राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि॰ खले ॥ त्रि॰ मसृणे ॥

मरालक । पु॰ कलहंसे ॥

मरिचम् । न॰ कोलके । कृष्णे । ऊषणे । धर्मपत्तने । कालीमिरच॰ इतिभाषा॰ । मरिचकटुकं तीक्ष्णं दीपनकफवातजित् । उष्णं पित्तहररूक्षश्वासशूलकृमीन्हरेत् ॥ तदार्द्रं मधुरपाकिनात्युष्णं कटुकगुरु । किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसे-किस्यादपित्तलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलकादिच ॥ कक्कोले ॥ पु॰ मरुवक वृक्षे ॥

मरिचपत्रक । पु॰ अजकर्णे । सालतरो प्रभेदे ॥

मरिमा । पु॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । कृष्णमरिच॰ इ॰ भा॰ ॥ म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच ॥

मरीचि । पु॰ ब्रह्मणोऽध्येष्ठमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ ॥ मरुतामध्येभगवद्विभूतौ ॥ पु॰ स्त्री॰ चन्द्रसूर्ययो किरणे । गभस्तौ ॥ षट्त्रसरेणुपरिमाणे॰ इति वैद्या । म्रियतेतमोऽस्मिन् । मृकणिभ्यामीचि ॥ त्रि॰ कृपणे ॥

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादावर्ककरा प्रतिफलिता दूरस्थानाञ्जलत्वेना-भाति॰ तन्मरीचिकामृगतृष्णिकेति॰ टीकाकार ॥ मरीचिरिव । इवे-प्रतिकृताविति कन् ॥

मरीचिप । पु॰ तपोविशेषाख्ये-तिसञ्ज्ञे तापसान्तरे ॥ चन्द्रिकापायिनि ॥

मरु । पु॰ गिरौ । पर्वते ॥ धन्वनि । दृशीरके । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरात्पूर्वभागेतुद्वारिकातोहिदक्षिणे । म

रुदेशीमद्द्याभिडष्ट्रोत्पत्तिपरायण ।। म्रियन्तेप्राणिनोच । मृङ्० । भ्रमश्शोत्थ ' ॥ मरुबकवत्ते ॥ सूर्य वशीयभाविनृपविशेषे ॥

मरुक । पु० मृगविशेषे ॥ मयूरे ॥

मरुकान्तारम् । न० रामबाणेनशोषि तेदेशविशेषे ॥ चाफ्रिका० इ० इ ञ्जभा० ॥

मरुज । पु० नखीनामगन्धद्रव्ये व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजा ते ॥

मरुजा । स्त्री० मृगेर्वारौ ॥

मरुटा । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायामस्त्रि याम् ॥

मरुत् । पु० समीरे । वायौ ॥ म्रियते ऽनेन० इन्धेन० विनावा । मृङ्० । मृग्रोरुति ॥ देवे । सुरे ॥ सप्तस प्तकेगणे ॥ मरुबके । न० ग्रन्थिप र्णे ॥ स्त्री० पृक्कायाम् ॥ मरुदग्नि प्रदोहृद्यस्तिक्तोष्णा पित्तलोलघु । वृश्चिकादिविषश्लेष्मवातकुष्ठक्रमि प्रणुत् ॥

मरुत । पु० वायौ ॥ अव्युत्पन्नोयम् । मरुत स्पर्शन प्राणाद्वतिविक्र मादित्यादिकोषात् । कोयवातिस दाक्षिणात्यमरुतद्वतिकविराज ॥ घण्टापाटलिवृक्षे ॥

मरुत्कर । पु० राजमाषे ॥

मरुत्त । त्रि० वायुविशिष्टे । मरुत सन्त्यत्र । तप्प्रबंमरुद्भ्यामितितप् ॥ चन्द्रवशीयनृपविशेषे ॥

मरुत्तक । पु० मरुबके ॥

मरुत्पथ । पु० आकाशे ॥

मरुत्पुत्र । पुं० हनुमति ॥ भीमसेने ॥ मरुत वायो पुत्र ॥

मरुत्प्लव । पु० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ॥

मरुत्वान् । पु० इन्द्रे । शचीपतौ ॥ मरुतोदेवता सन्त्यस्य । मतुप् । झयद्वतिवत्वम् । तसौमत्वर्थद्वतिभ त्वाज्जश्त्वाभाव ॥

मरुत्वतीयम् । न० मरुत्वत्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशु नासीरमरुत्वदग्नीषोमवास्तोष्पति गृहमेधाच्छचेति० छ० ॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवी त्यत्रस्यचकारात्० यत् ॥

मरुत्सख । पु० इन्द्रे ॥ अग्नौ ॥

मरुदान्दोल । पु० धवित्रे ॥

मरुदिष्ट । पु० गुग्गुलौ ॥

मरुद्गण । पु० आवहप्रवाहादिवायु समूहे ॥

मरुद्द्रुमम् । न० वाततूले । ग्रीष्महा से । वुढियाकोसूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खि राइ इ० गौ० दे० भा० ॥

मरुद्रथ । पुं॰ अश्वे । देवरथे ॥

मरुद्द्रुम । पु॰ विट्खदिरे । अरिमेदे ॥

मरुद्वर्त्म । न॰ आकाशे ॥

मरुद्वाह । पु॰ धूमे ॥ वह्नौ ॥

मरुद्विप । पु॰ उष्ट्रे ॥

मरुन्माला, स्त्री॰ पृक्कायाम् । मरुद्भिर्मल्यते । मलधारणे । घञ् ॥

मरुप्रिय । पु॰ उष्ट्रे ॥ मरुदेशविशेष प्रियोऽस्य ॥

मरुभू । स्त्री॰ दशेरकीमारवाड॰-इ॰ प्र॰ ॥ निर्जलदेशे ॥

मरुभूरुह । पु॰ करीरवृक्षे ॥

मरुल । पु॰ कारण्डवपक्षिणि ॥

मरुला । स्त्री॰ केरलदेशप्रसिद्धाया नद्याम् ॥

मरुव । पु॰ मरुवके ।

मरुवक । पु॰ समीरणे । प्रस्थपुष्पे । फणिज्झके मरुवा॰ इ॰ भा॰ प्र॰पुष्पे ॥ पिण्डीतके । श्वसने । करहाटके । मदनद्रुमे । मयनफल इ॰ भाषा ॥ मरु वाति । वा॰ । कुनृश्विल्पिसञ्ज्ञयो ॥ व्याघ्रे । राहौ । खरपत्रे । नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ त्रि॰ भयानके ॥

मरुसम्भवम् । न॰ चाणक्यमूलके ॥

मरुसम्भवा । स्त्री॰ महेन्द्रवारुण्याम् । क्षुद्रदुरालभायाम् ॥

मरुस्था । स्त्री॰ क्षुद्रदुरालभायाम् ॥

मरूक । पु॰ मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति॰ म्रियतेवा । मृङ्॰ । मृकणिभ्यामूकोकणाविल्युक ॥

मरूद्भवा । स्त्री॰ कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥

मगेलि । पु॰ मकरे । असिदंष्ट्रके । मगर॰ इ॰ भा॰ प्र॰ यादसि ॥

मरोलिक । पु॰ मकरे ॥

मर्क । पु॰ देहे । शरीरे ॥ वानरे ॥ वायौ ॥ मर्चति॰ मर्चयतिवा । मर्चि सौत्रोधातुरितिवृद्धव । मर्चशब्दे॰ चौरादिकइति॰ सिद्धौ न्यात्सूचेकैयट । इणभीकापाश ल्यतिमर्चिभ्य कन् । नचैवणिलो पस्यस्थानिवद्भावात्॰ कुत्वनस्यादितिवाच्यम्॰ पूर्वत्रासिद्धे तदभावात् ॥

मर्कक । पुं॰ गलेगण्डखगे । हाडगिल॰ इ॰ गौ॰ दे॰ भा॰ ॥

मर्कट । पु॰ वानरे ॥ लूतायाम् । ऊर्णनाभे ॥ स्रोकरयान्तरे ॥ गलेगण्डे । हाडगिल॰ इ॰ भा॰ प्र॰ खगे ॥ मर्कति । मर्क सौत्रोधातु र्ग्रहणे । शकादिभ्योऽटन् ॥ स्थावर विषभेदे ॥

मर्कटक । पुं॰ शस्यप्रभेदे ॥ वानरे ॥ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

शेषे ॥ सञ्ज्ञायांकन् ॥
मर्कटतिन्दुक । पु० कुपीली ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रिय । पु० क्षीरवृक्षे ॥
मर्कटवास । पु० आयावर्त्ते ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुले ॥
मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पु० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकर्ञ्जुवा० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् । अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दु । पु० काकतिन्दुके ॥
मर्कर । पु० भृङ्गराजे ॥
मर्करा । स्त्री० निष्फलायाम् ॥ दर्व्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्जू । पु० धावके । रजके ॥ पीठमर्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चेत्यू ॥ मार्जनवा ॥
मर्त्त । पु० मर्त्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ्० । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥
मर्त्य । पु० मनुष्ये ॥ म्रियते । मृङ्० । हसिमृग्रिणितितन् । तत स्वार्थेयत् । प्राक्प्रबोधात्० स्वर्गादिमर्त्य ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्य । हसिमृग्रिणि० मृङ्धातोस्तन्० मर्त्त । ततोनवसूरमर्त्तयविष्ठेभ्य स्वार्थेयत् ॥ मर्त्ते भवोवा । दिगादिराकृतिगणत्वाद्यत् ॥
मर्त्त्यमुख । पु० यक्षे ॥
मर्त्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्त्येन्द्रा । स्त्री० मातरि ॥ अग्निदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न० अङ्गसम्मर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । वदने ॥ चूर्णने० । त्रि० मर्द्दयितरि ॥ मर्द्दयति । मृदक्षोदे० मृदमर्द्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुक्त्वा ॥
मर्द्दल । पु० वाद्यप्रभेदे ॥ मर्द्दलो मादल इति० नेपालेख्यातो० मृदङ्गसजातीय ॥ मर्द्दमुपमर्द्दलाति० । ला० । आतइतिक ॥
मर्द्दित । त्रि० चूर्णिते ॥ ग्रन्थिते ॥
मर्द्दिता । त्रि० मर्द्दिनि ॥
मर्द्दी । त्रि० मर्द्दितरि ॥
मर्म्मकील । पु० भर्त्तरि ॥
मर्म्मज्ञ । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतैन्द्रपैरपिधर्म्मागम मर्म्मपारगे । स्मरसुन्दरमायद्व्यजस्त्वधर्मं सदयोदयोज्ज्वला॥ सन्धिस्थाने ॥ जीवस्थाने ॥ परचेचेगावरत्तीनवाचचीतकसपित् । मसवसीतसूतकैचनकवैममर्माणिस्पृ-शेत् ॥ चकृषि ॥

मर्म्मर । पु॰ वस्त्रविशेषे ॥ शुष्कपर्णध्वनौ ॥ वस्त्रपर्णानासमिति । मरमरमरडमरड्॰ इतिचभाषा ॥ मर्मरातिं । रा॰ क ॥ चनुकरणशब्दोवा ॥

मर्म्मरी । स्त्री॰ पीतदारुणि ॥

मर्म्मरीक । त्रि॰ दीनजने ॥ म्रियते । मृङ्॰ । पर्फरीकादित्वादीकन्॰धातोर्द्वित्वंरुक्चाभ्यासस्य ॥

मर्म्मवित् । पु॰ मर्म्मज्ञे । कार्पटिके ॥

मर्म्मवेदी । पु॰ मर्मविदि ॥

मर्म्मस्पृक् । त्रि॰ मर्मपीडके । चरुन्तुदे ॥ मर्म्मस्पृशति। स्पृशउपतापे । स्पृशोऽनुदकइति॰ क्विन् ॥

मर्म्माविध्॰द्व । त्रि॰ सन्धिस्थानवेधकर्त्तरि ॥ मर्म्मज्ञे ॥ मर्म्माणिविध्यति । व्यधताडने । क्विप् । ग्रहिज्येतिसम्प्रसारणम् । नहिवृतीतिदीर्घं ॥

मर्म्मिक । त्रि॰ मर्मज्ञे ॥

मर्म्मुर । पु॰ तुषानले ।

मर्य्य । पुं॰ मरणधर्म्मणि । मनुष्ये ॥

मर्य्या । च॰ सीमायाम् ॥

मर्य्यादा । स्त्री॰ सीमनि । चवधौ । तेनविनेत्यर्थे ॥ स्थितौ । धारणायाम् । सत्पथस्थितौ॥ चनुल्लङ्घनीयायाव्यवस्थायाम् ॥ स्थित्यनतिक्रमे ॥ कुलभूमौ ॥ मर्येतिसीमार्थेऽव्ययम् । तत्रदीयते । डुदाञ्॰ । चातश्चोपसर्गेक्ष्यङ् ॥

मर्ष । पु॰ चान्तौ ॥ मर्षणम् । मृषतितिक्षायाम् ॥ घञ् ॥

मर्षणम् । न॰ चपराधेसत्यपिकोपानाविष्करणे । चमायाम् । मृष॰ भ॰वेल्युट् ॥

मर्षित । त्रि॰ चान्तियुक्ते ॥ मृषे कर्त्तरिक्त । भावेक्तेक्लीवम् ॥

मर्षितवान् । त्रि॰ चान्ते ॥ मृषे कर्त्तरिक्तवतु ॥

मर्षी । त्रि॰ चमाशीले ।

मल । पु॰ न॰ पापे । किल्विषे ॥ विशि । विष्ठायाम् । यथा । मलायत्तं बलंपुंसां शुक्रायत्तन्तुजीवनम्। तस्माद्यत्नेनतरक्षेत्यक्ष्मिणोमलरेतसीइति ॥ किट्टे । मण्डूरादौ ॥ खेदादौ ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः । श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणामलाः ॥ वातादिषु । यथा। शरीरदूषणाद्दो

षामलिनीकरणान्मला । धारणा ज्ञातवस्तेषु वातपित्तकफास्त्रय ॥ सर्वेषामेवरोगाणानिदानकुपिता-मला । तत्प्रकोपस्यतुप्रोक्ता विविधाहितसेवनम् । हरेद्वसन्तेश्लेष्माण पित्त शरदिनिर्हरेत् वर्षासुशमये वायुप्राग्विकारसमुच्छ्रयात् ॥ अत्र-विशेषमाहमाधव । कफपित्तानिला पूर्वमध्यान्तेष्वव्यवस्थिता । देहाहोरात्रिवयसासम्भिश्चपिकफानिलाविति ॥ अस्यार्थ । कफपित्तानिला देहाहोरात्रिवयसापूर्वं मध्यान्तेषुयथासङ्ख्यव्यवस्थिता । देहस्यपूर्वभागेशिरआरभ्यवक्षोन्ते-कफोव्यवस्थित । मध्येआमाशय-मारभ्यनाभ्यन्तेपित्त व्यवस्थितम् । अन्तेनाभ्यधोभागेवायुर्व्यवस्थित । शिरोमूलत्वात्देहस्येवपूर्वादिकल्पना । अह्नस्त्रिधाविभक्तस्यपूर्वभागेकफोमध्ये पित्तमन्तेवायु । एवरात्रेरपिवयसोपिपूर्वभागेबाल्यावस्थायाश्लेष्मामध्ये तरुणावस्थाया-पित्तम्अन्तेवृद्धावस्थायांवायु । सम्भिश्चिविति । देहाहोरात्रिवयसा-मित्येव । तत्रदेहस्यपूर्वभागमध्यभागयो सन्धौकफोव्यवस्थित मध्यभागान्त्यभागयो सन्धौपक्वाशयाख्योवायु एतत्त्रयथासङ्ख्यमित्यतोलभ्यते । अह्न सन्धौरात्र्या-साकमह्न सन्धि प्रात सञ्ज्ञकस्तस्मिन्कफ । अह्नासाकरात्रेसन्धि सायतस्मिन्वात । वय सन्धौबाल्यतारुण्ययो सन्धौश्लेष्मा तारुण्यवृद्धत्वयो सन्धौवायुरिति ॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टिलोपश्चेतिकल ॥ मलयति । मल तत्कृतौ० अदन्त । मलतेवा । मलधारणे । पचाद्यच् ॥ कर्पूरे ॥ त्रि० कृपणे । कदर्ये ॥

मलघ्न । पु० शाल्मलीकन्दे ॥ त्रि० मलनाशके ॥

मलघ्नी । स्त्री० नागदमन्याम् ॥

मलजम् । न० पूये ॥ त्रि० मलोद्भवे ॥

मलदूषित । त्रि० मलिने ॥ मलैनदूषित । कर्तृकरणेकृतिसमास ॥

मलद्रावी । पु० जयपाले ॥

मलधी । पु० कामिनि ॥

मलन । पु० पटवासे । अशुकालये ॥ न० मर्दने । पीडना० मलना० कृ० भा० ॥

मलपू । स्त्री० काकोदुम्बरिकाया-म् । मलयूस्तम्भकृत्तिक्ताशीतला तुवराजयेत् । कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शकामला ॥ मलात्पापात् । पुनाति । पूञ्पवने । क्विप् ॥

मलभुक । पु० काके ॥

मलभेदिनी । स्त्री० कटुकायाम् ॥

मलमास । पु० अधिमासे । मलि

स्तुर्थे ॥ यस्मिन् मासेनसङ्क्रान्ति सङ्क्रान्तिद्वयमेववा । मलमास सविज्ञेयोमासस्त्रि यस्तमोभवेत् । गर्गस्तु । अमावास्याद्वय यत्ररवि सङ्क्रान्तिवर्ज्जितम् । मलमास सविज्ञेयोमास शुद्धाह्व्यचतर ॥ तथाचब्रह्मसिद्धान्ते । चान्द्रोमासो ह्यसङ्क्रान्तोमलमास प्रकीर्त्तित ॥ सत्यव्रतस्तु । राशिद्वय यत्र मासिसङ्क्रमेतद्दिवाकर । नाधि मासोभवेदेवमलमासस्तुकेवलम् । एकचमासद्वितय यद्दिस्याद्वर्षेऽधि-कतत्परोऽधिमास : । चयोदशस्तु स्मृतिराहमास चतुर्दश क्वापिनचा-स्तिदृष्टम् ॥ अय मासश्चान्द्रएवन-सौर । अस्तित्रयोदशोमास सच स्मृत्यानिगद्यते । असौचान्द्रोनसौ र.स्यान्नास्तिसौरत्रयोदश ॥

मलमासत्वम् । न॰ रविसङ्क्रान्त्य भावविशिष्टचान्द्रमासत्वे ॥

मलय । पु॰ ऋष्यमूकप्रदेशान्तरे स्वनाम्नाप्रसिद्धेऽद्रिविशेषे । भाषा दे । दक्षिणाचले । चन्दनाद्रौ क्षतमालाताम्रपर्णीप्रमुखामलयो-द्भवा । शैलाङ्गे ॥ देशविशेषे । मलेबार॰इ॰भा॰ ॥ आरामे न-न्दनवने ॥ अष्टादशोपद्वीपान्तर्ग-तद्वीपविशेषे ॥ मलते । मलधार-यो । अलिमलितनिभ्य कायम् ॥

ऋषभदेवस्यपञ्चमेपुत्रे ॥

मलयगन्धिनी । स्त्री॰ उमाया सखी विशेषे ॥

मलयज । पु॰ राहुग्रहे ॥ पु॰न॰ चन्दने ॥ मलयेजात । सप्तम्याज सेङ् ॥

मलया । स्त्री॰ त्रिवृतायामोषधौ ॥

मलयाचल । पु॰ सह्याद्रिसमीप-स्थे॰शैलविशेषे । दक्षिणाचले ॥ सताभिसेव्योहिमवान भोगिनाम-लयाचल ॥

मलयानिल । पु॰ वासन्ते । वसन्त कालिकवायौ ॥

मलयाल । पु॰ देशविशेषे । यथा । सुराम्बिकांसमारभ्यमलयाद्यन्तग-शिवे । मलयालाभिधोदेशोमन्त्रसि द्धिप्रदर्शक . ॥

मलयू । स्त्री॰ मलय्याम् । काकोदु म्बरिकायाम् ॥ मल यवति । युज् गुप्सायाम् । क्विप् । बाहुलका-द्दीर्घ ॥ यद्वा । मलते । मलधा-रणे । बाहुलकादयू ॥

मलयोद्भवम् । न॰ चन्दने ॥

मलवत्म । न॰ गुदे ॥

मलविलासिनी । स्त्री॰शङ्खपुष्प्या म् ॥

मलहन्ता । पुं॰ शाल्मलीकन्दे ॥

मला । स्त्री॰ भूम्यामलक्याम ॥

मलाका । स्त्री॰ दूत्याम् । कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न॰ पापमोचने ॥ मलस्यदूरीकरणे ॥

मलापहा । स्त्री॰ नदीविशेषे ॥ यथा। मलापहाभीमरथीचघट्टगायथाघक्का थाजलसाम्यगागुणे । मलापहा घट्टगयोस्तथापिपथ्य लघुस्वादुतरमुक्तान्दिम् ॥

मलावहम् । न॰ मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोड्त्यामद्यानुगतभोजनम् । फलेध. कुसुमस्तेयमधैर्यं चमलावहम् ॥

मलारि । पु॰ सर्वक्षारे । सावन॰ बु॰ भा॰ ॥

मलिनम् । न॰ दोषे ॥ टङ्कणे । घोले ॥ त्रि॰ मलयुक्तवस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनमलिन मलैः । तथाभवत्यबुद्धानामात्मापिमलिनीमलै रिति ॥ मलैः कर्मफलैरात्मा । अन्यथमलैर्घनरजोधूमादिभिराकाशवृत्त्यर्थं ॥ नित्यनैमित्तिकक्रियात्यागिनि ॥ कृष्णे ॥ दूषिते ॥ मलोस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु ॥ यद्वा । मलते । मल॰ । वहुलमन्यत्रापीतीनच् ।

मलिनमुख । पु॰ वह्नौ ॥ गोलाङ्गूले॰ मृगे ॥ प्रेते ॥ त्रि॰ क्रूरे । खले ॥

मलिनात्मा । पु॰ कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मनाप्रधानम् ॥

मलिनाम्बु । न॰ मस्याम् ॥

मलिनास्य । त्रि॰ खले ॥

मलिनिमा । पु॰ कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्वभाव । इमनिच् ।

मलिनी । स्त्री॰ रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या । अतइनिठनौ ।

मलिनीकरणम् । न॰ मलावहे ॥

मलिम्लुच । पुं॰ मलमासे ॥ यथा । तमतिक्रम्यतुरविर्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय प्रकृत स्मृत ॥ यद्वा दर्शान्तमासमतिक्रम्यततपूर्वमासान्त्यक्षणात्तिराशिस्थ सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्तरसयोग गच्छेत्॰ तदाद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय ।मलोसन्म्लोचति॰ गच्छतीति॰ मलिम्लुच । द्वितीयस्तुप्रकृत शुभकर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मत्स्यर्ते । मल॰ । उप॰ । मलि भूत म्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क ॥

मलिष्ठा । स्त्री॰ ऋतुमत्यानार्याम् ॥

मलीमस । पु॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु ॥

मलूक । पु॰ कृमिविशेषे ॥

मल्ल । पु॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ल । निच्छिवी । बाहुयोधिनि॰ मल्लितिनाम्नाप्रसिद्धे ॥ अयञ्चव्रात्यात् चत्रियात्सवर्णायाजात । यथा मनु । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ स्मृति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रञ्चमल्ला शाल्वा युगन्धरा । स्मृति । विराटपर्व्वणि १ अध्याय ॥ वर्ण सङ्करजातिविशेषे । माला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च ॰ लेटात्तीवरकन्यायाजात । ब्र॰ ब्र॰ वै॰ पु॰ ॥ तन्त्वाय्याकुन्दकाराज्जात । ब्र॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्ल स्तद्वृत्तिस्तपरायण ॥

मल्लक । पु दन्ते ॥ पुं॰ स्त्री॰ दृपाधारे ॥ कौशिकायाम । नारिकेलफलनिर्म्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । खुल् ॥

मल्लतूर्य्यम् । न॰ वाद्यविशेषे । मल्लास्तने ।

मल्लनाग । पु॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि । स्त्री॰ रङ्गभूमौ । अखाडे । आखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ मालज्याम् । मल्लानायुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानासङ्ग्रामे ॥

मल्ला । स्त्री॰ नार्य्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार । पु॰ षट्सुरागाणामध्येद्वितीयरागे ॥ मेघमल्लाररागस्यगानवर्षासुसर्व्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्या लोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा ॥ मेघरागस्यरागिण्याम् ।

मल्लि । पु॰ वर्त्ताहंद्विशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्व्वधातुभ्यइन् ॥

मल्लिक । पु॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे । किञ्चिद्धूसरवर्णैश्चञ्चुचरणैरुपलक्षितहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इन् । स्वार्थेक ॥

मल्लिका । स्त्री॰ तणशून्ये । भूपद्याम् ।

। शतभीरौ । वेल्लि॰ वेला॰ वेली॰ हू॰ प्र॰ पुष्पवृक्षे ॥ मल्लतिगन्ध॰ मल्ल्यतेवा । मल्ल॰ । सर्वधातुभ्यइन् । वाङीष् । स्वार्थेकन् । ह्रस्व । टाप् ॥ मल्लिकोष्णालघुर्वृष्यातिक्ताचकटुकाहरेत् । वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मीनविशेषे ॥ मृत्पात्रविशेषे ॥ पानपात्रे ॥ सवैय्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभनसौरभयुद्धविशुद्धयगते॰विधेहिविधेहिविवेकनिधेहिपुरोजगणानिहसप्तलगोसुमते । विशोभियशोभिरुपेतितयेतिविनिर्मितमल्लिकयैशरते॰ निधहिनिधेहिमुदहृदयेसदयेयशवन्तधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्कक्रमेणमण्डिताष्टवर्णकेन । वर्धिताकुतूहलेनमल्लिकेपिङ्गलेन ॥ यथा । वेदवेदिबालखिल्यनारदादिसस्तुताय । अस्तुमेनति सदैवतुभ्यमम्बुजप्रियाय ॥ भूपदीपुष्पे ॥ मल्लिकाया पुष्पम् । पुष्पमूलेषुबहुलमिति॰ अनुदात्तादेरञोऽणश्चलुप् । लुपियुक्तिवत् ॥ वर्णपात्रे ॥ हू॰ श॰ माला ॥

मल्लिकाच । पु॰ किञ्चिद्धूम्रवर्णैरसन्नु चरणैरुपलक्षितेहंसविशेषे ॥ शुक्लवर्णवेष्टितचक्षुर्द्वययुक्ताण्डे ॥ मल्लिकाकारमक्षियस्यशुक्लापाङ्गत्वात् । बहुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य । पुं॰ मल्लिकाख्याभिधे हंसे ॥

मल्लिकाख्या । स्त्री॰ मोहिन्याम् । त्रिपुरमालीतिगौडदेशप्रसिद्धेपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि

मल्लिकापुष्प । पु॰ कुटजवृक्षे ॥ काबचावृक्षे । करुणालेवु॰ हू॰ गौ॰ दे॰ भा॰ ॥ ख्यातनामप्रसिद्धपुष्पवृक्षे ॥

मल्लिगन्धि । न॰ मल्लिकागुरुणि ॥ मल्लिकापुष्पस्येवगन्धोयस्य । उपमानाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर । त्रि॰ चौरे ॥

मल्लु । पु॰ भाल्लुके ॥

मवित । त्रि॰ बद्धे ॥

मशक । पु॰ कीटविशेषे । वच्छतुण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा ॥ तन्नाशकधूपोयथा । त्रिफलार्जुनपुष्पाणिभल्लातकशिरीषकाम् । लाक्षासर्जरसञ्चैवविडङ्गञ्चवगुग्गुलु एतैर्धूपैर्मक्षिकाणामशकानाविनाशनम् ॥ क्षुद्ररोगविशेषे । मस्सा॰ हू॰ भा॰ प्रसिद्ध ॥ यथा । अवेदनस्थिरचैवयस्तुगात्रेप्रदृश्यते । माषवत्कृष्णमुत्सन्नमनिलन्मशकदिशेत् ॥ स्थिर

म॰मचलम् ॥ अत्रचिकित्सायथा । चर्मकीलजतुमणिमशकास्तिलकालकान् । उत्कृत्यशस्त्रेणदहेत्क्षारा ग्निभ्यामशेषत ॥ अपिच । लशुनाशनात्तुचूर्णं स्वर्णमिशकनाशन ॥ इति ॥

मशकी । पु॰ उदुम्बरवृक्षे ॥

मशहरी । स्त्री॰ चतुष्क्याम् । शयन तिरस्करिण्याम् ॥

मशुन । पु॰ कुक्कुरे ॥

मसनम् । न॰ सोमराजीवृक्षे ॥

मसरा । स्त्री॰ मसूरे ॥

मसार । ) पु॰ इन्द्रनील
मसारक । ) पु॰मणौ ॥

मसि । स्त्री॰ लिपिप्रयोजनायाम् । पत्राञ्जने । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिकावृक्षे ॥

मसिकूपी । ) स्त्री॰ मस्या-
मसिधानम् । ) न॰ धा-
मसीधाना । ) स्त्री॰ रे ।
मसिकूपिकायाम्

मसिनम् । न॰ सपिण्डके ॥

मसिपण्य । पु॰ लेखके ॥

मसिप्रसू । स्त्री॰ मस्याधारे ॥ मस्याप्रसू ॥ लेखन्याम् ॥

मसिमणि । पु॰ मस्याधारे ॥

मसिवर्द्धनम् । न॰ रसगन्धे ॥

मसी । स्त्री॰ मेलायाम् । लिपिसाधन भेदे । काली॰ इ॰गौ॰भा॰ । स्याही॰ इ॰ भाषा॰ ॥ शेफालिका वृक्षे । मस्यति । मसी॰ । पचाद्यच् । गौरादित्वान्ङीष् ॥

मसीजलम् । न॰ मस्याम् ॥

मसीधानम् । न॰ मस्याधारे ॥

मसीधानी । स्त्री॰ मस्याधारे ॥

मसीना । स्त्री॰ क्षमानाम्न्यातैधान्ये । उमायाम् ॥

मसीभ । पु॰ कायस्थे ॥ मस्याङ्कम ॥

मसुर । पु॰ मसूरे । मङ्गल्यके ॥ मस्यति॰ मस्यतेवा । मसी॰ । मसेरुरन् ॥ उपधाने ॥ मसुरा । स्त्री॰ वेश्यायाम् ॥ व्रीहिप्रभेदे ॥ टाप् ॥

मसुरी । स्त्री॰ पापरोगे । मसूर्याम् ॥

मसूर । पु॰ व्रीहिप्रभेदे । मङ्गल्य-के ॥ मसूरोमधुर पाकेसङ्ग्राही शीतलोलघु । कफपित्तास्रजिद्रूक्षोवातलोज्वरनाशन ॥ मस्यति॰ मस्यतेवा । मसी॰ । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरक । पु॰ उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलसिर्हा मा॰इ॰भा॰ ॥ मसूरे ॥ स्वार्थे क ॥

मसूरविद्‌ला । स्त्री॰ कृष्णत्रिवृतायाम् ॥ मसूरवद्विदलमस्या ॥

मसूरा । स्त्री॰ मसूर॰द्र॰ प्रसिद्धेब्रीहिभेदे । मण्डल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मझ्ख्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसस्थाना पिडका स्युर्मसूरिका ॥ अतीसारे ॥ मध्यर्याम् ॥ यथोक्तं पाश्चेक्रियायोगसारे । हशाखमयकाम्बेवर्षाकालेनिवारयेत् । मसूरिकाभिः प्राबल्यमस्य शायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवट्याम् । शीतलाख्यरोगे ॥ भिद्दति ॥ रक्तभिद्दति ॥

मसृण । पु॰ सोमे ॥ वि॰ अकर्कशे । अकठिने ॥ स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ क्स्ण ॥ यद्वा । समृच्छोति । ऋणुगती ॥ पृगुपधेतिक । पृषोदरादि ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्कर । पु॰ वेणौ । वंशे ॥ मस्कतेऽनेनवा । मस्कगती । बाहुलकादर ॥ यद्वा । मङ्कते।मखिमण्डने। अर । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रत्नावली ॥

मस्करी । पु॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगती । बाहुलकादर । मस्करोज्ञानमतिर्वाऽस्यास्ति । मस्करमस्करिणावितीनिः ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनिः ॥ यद्वा । माकृणु कर्म निषिद्धं शीलमस्य । मस्करमस्करिणावितिसाधुः ॥ यद्वा । मकुरइवशुद्धमन्तःकरणमस्यास्ति । प्राग्वन्निपातः ॥ यद्वा । मङ्कते । मखि॰ । बाहुलकादर । आगमशास्त्रस्यानित्यत्वान्नुम् ॥ मस्करोनिधिर्भेदोवाऽस्यास्ति । पूर्ववन्निपातः ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेऽस्मिन् । मसी॰ । क्त ॥

मस्तक । पु॰ न॰ उत्तमाङ्गे । शिरसि । मूर्धनि ॥ स्वार्थेकन् ॥

मस्तकस्नेह । पु॰ शिरोमज्जनि ॥

मस्तकाख्य । पु॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थमज्जाकारस्नेहे ॥ मस्यते॰ मसन वा॰ । मसी॰ । क्तिन् । मस्ति मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादि ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ द्र॰ भाषा ॥ दध्नस्तूपरिशोभागोघन स्नेहसमन्वितः । सजोवीसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्त्वम्लसरवल्य लघुभुक्ता-

भिलाषकृत् । स्रोतोविशोधनञ्चा दिवफलवातानिलापहम् । अतथ्य- प्रीणनशीघ्र भिन्नत्तिमलसञ्चयहम्॥ अपिच । तथाऽम्ल रुचिपित्तदञ्चम स्वरवल्य कषायसरभुक्तिच्छन्दकरद्ध मोदरगदश्लीपदार्शसानाशनम् । स्रो त शुद्धिकरककानिलहरविष्टम्भ शूलापहमृपाण्डु श्वासविकारगुल्म शमनमस्तुप्रशस्त लघु ॥ मस्यते । मसी॰ । सितनीतितुन् ॥

मस्तुलुङ्ग । पु॰ मस्तकस्थघृताकार वर्बे । मस्तिष्के ॥

मस्तुलुङ्गक । पु॰ मस्तिष्के ॥

मह । पु॰ उत्सवे॥ तेजसि ॥ महि षे ॥ महनम् । महपूजायाम् । घ- ञ् । सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभाव । घोवा ॥ यद्वा । महति । अच् । यज्ञे ॥

महक । पु॰ बहुलामोदे । महक॰ वू॰ भा॰ ॥

महत् । न॰ राज्ये ॥

महान् । पु॰ ज्ञानक्रियाशक्तिमतिम हत्तत्त्वे । बुद्धितत्त्वे । अध्यवसाय लक्षणे ॥ यथा । सविकारात्प्रधा नात्तु महत्तत्त्व प्रजायते । महानि- तियत ख्यातिर्लोकानांजायतेस दा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे॰ हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम्॥ महान्व्याप्यस्थितासर्वे

महानुवाप्रकृतिर्मतेतिदेवीपुराणा- त् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तशैक्त- भक्ते॰ शिवविशेषधर्मादौ ॥ त्रि॰ वृहत्ते । विशङ्कटे । बृहति । विशा- ले । बड्डे । विपुले ॥ उत्कटे ॥ अ तिप्रमाणे । अप्रमेये । आपातमधु रसांसारिकसुखनिस्पृहे ॥ यथा । महत्से वाद्वारमाहुर्विमुक्ते स्तमोद्वा रयोषितासङ्गिसङ्गम् । महान्तस्ते समचित्ता प्रशान्ताविमन्यव सु हृद साधवोये ॥ महति । मह॰ । वर्त्तमानेपृषद्वृहन्महदितिनिपा तित ॥ मह्यतेवा । महच्छब्दप्रयो गनियोयथा। शब्दखेतैलितयामा सेवेद्योतिपिक्विहिजे । याचायाप थिनिन्द्रायामहच्छब्दोनदीयते ॥ इ ति ॥ देशादिपरिच्छेदशून्ये सर्वग तेपरमात्मनि ॥

महती । स्त्री॰ नारदस्यवल्लक्याम् ॥ शततन्त्रीवीणामहतीति॰ स्वामी॥ विततायाम् ॥ बृहत्प्रमाणायाम् ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ म- हते । मह॰ । वर्त्तमानेपृषदिति साधु । गौरादि ॥

महतीद्वादशी । स्त्री॰ श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न॰ चतुर्विंशतितत्त्व न्त र्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने सम ष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्च । तम

हाभारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुश्चवीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिः स्मृतिः ॥ पर्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तर । पु॰ शूद्रविशेषे । ग्रामकू
टे । महत्ता॰ इ॰ भा॰ ॥ इ॰ वि॰
काण्डशेष ॥

महत्युक्थम् । न॰ वृहतीसहस्राख्य
यज्ञे ॥

महत्त्वम् । न॰ महतोभावे । यथा ।
महत्त्वषड्विधेहेतुरिन्द्रियकरणमतम्
। इ॰ भा॰ प॰ । महत्त्वषड्विधन्त्व
ति । द्रव्यप्रत्यक्षेमहत्त्वसमवायसम
वन्धेनकारणम् । द्रव्यसमवेताना
गुणकर्मसामान्यानाप्रत्यक्षे॰ स्वाश्र
यसमवेतसमवायसम्बन्धेनकारणम्
। इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त
सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰
त्रिगुणात्मिकायामायायाम् । स
र्वकार्यापेक्षयाधिकत्वात्कारणमह
त्॰सर्वकार्याणाबद्धिहेतुत्वरूपात्॰
वृहणत्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच
भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचे
तिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत्
ब्रह्मविद्योत्कर्षेणवर्तमानत्वात्॰भू
तपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीय । त्रि॰ पूजनीये ।

महर्घता । स्त्री॰ अधिकन्यूनत्वे ॥

महर्द्धि । स्त्री॰ समृद्धौ । ऋद्धेराधि
क्ये ॥

महर्लोक पु॰ भूरादिसप्तलोकान्त
र्गतचतुर्थलोके ॥ चतुर्मुखदिनस्या
न्तेजगदेतच्चराचरम् । तदादिदग्ध
तेसर्वेत्रैलोक्यभर्भुवादिकम् । जन
म्प्रयान्तितापार्तामहर्लोकनिवासि
न । चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्प
वासिन ॥ अपिच । यत्रोक्तकोटि
र्वेयास्तेमरीच्यादिमुनिव्रज ॥ भू
पृष्ठाद्दिकोट्यूर्द्ध्वायोमरीच्यादिमुनि
वृन्दस्थानमहर्लोकइत्यर्थ ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षि । पु॰ व्यासादिषु ॥ भृग्वा
दिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वर्षि
षु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृ
गुमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतु
म् । वसिष्ठञ्चमहातेजा सोऽसृजन्
मनसासुतान् ॥ सप्तब्रह्माणइत्येते
पुराणेनिश्चयङ्गता ॥ महाव्यासो॰
ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् ।
। अन्येतुवेदैकदेशदर्शनादृषय ॥

महल्लक । पु॰ अन्तःपुररक्षके ।
सौविदल्ले । कञ्चुकिनि ॥ महती
लाति । ला॰ । क । क ॥

महल्लिक । पुं॰ अन्तःपुररक्षके

अन्त पुरस्थायिजने ॥ तल्लक्षणं यथा । सुप्तशून्योऽनुपस्थोय स्त्री स्वभावोमहल्लिक ॥ इति ॥

मह । न॰ उत्सवे ॥ तेजसि ॥ महनम्॰मह्यतेवा । महपूजायाम् । सर्वधातुभ्योऽसुन् ॥

महसम् । न॰ ज्ञाने ॥ महति॰मह्यतेवा । मह॰ । अत्यविचमितमिन मिरभिलभिनभितपियतिपचिप-निमह्भ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री॰ गोपवल्लाम् । पृश्निपर्णीविशेषे ॥ धेनौ । मह्यतेपूज्यते । मह॰ । स्वनोघचेति॰घ ॥

महाकच्छ । पु॰ समुद्रे । प्रचेतसि । वरुणे ॥ पर्वते ॥ महान्कच्छोयस्यस । आन्महतइत्यात्वम् ॥

महाकण्टकिनी । स्त्री॰ क्षुद्रीभेदे । विश्वसारके । नागफणीथूहर॰इ॰भा॰ । फणिमनसा॰दुर्गो॰दे॰भा॰ ॥

महाकन्द । पु॰ लशुने ॥ चाणक्यमूलके ॥ मूलके ॥ रक्तलशुने । राजपलाण्डौ ॥

महाकपित्थ । पु॰ बिल्ववृक्षे ॥ महांश्चासौकपित्थश्च । आन्महत ॥

महाकपित्थाख्य । पु॰ बिल्वे ॥

महाकरञ्ज । पु॰ हस्तिकरञ्जे ॥

महाकर्णिकार । पु॰ आरग्वधे ॥

महाकान्ता । स्त्री॰ पृथिव्याम् ॥

महाकाय । पु॰ वृषाणके । प्रमथविशेषे । शिवद्वारपाले ॥ हस्तिकरौ रे ॥ त्रि॰तद्वति ॥

महाकार्त्तिकी । स्त्री॰ रोहिणीनक्षत्रयुक्तायाकार्त्तिकपूर्णिमायाम् ॥

महाकाल । पु॰ महादेवे ॥ प्रमथविशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमान विष्णुस्वरूपसमये ॥ उज्जयिन्यामहाकाल शङ्करीतत्रदेवता ॥

महाकाली । स्त्री॰ परदेवतायाम् ॥ महाकालपत्न्याम् ॥ जिनानाचतुर्विंशतिशासनदेवतान्तर्गतदेवीविशेषे ॥

महाकाव्यम् । न॰ सर्गबन्धे ॥

महाकुमुदा । स्त्री॰ काश्मर्याम् ॥

महाकुम्भी । स्त्री॰ कट्फले ॥

महाकुल । त्रि॰ कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महत्तत्कुलञ्चमहाकुलम् । आन्महतइत्यात्वम् । महाकुलमस्यास्ति । अच् ॥ महत्कुलमस्येतिविग्रहोवा । न॰सत्कुले ॥

महाकुलीन । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । कुलात्ख इत्यनुवृत्तौ महाकुलादञ्खञौ वितिपक्षेख ॥

महाकूप । पु॰ पादावर्त्ते ॥

महाकूल । पु॰ मत्कुणे ॥

महाकोशफला । स्त्री॰ देवदालीलतायाम् ॥

महाकोशल । पु॰ देशविशेषे ॥ यथा । गोकर्णेशात् पूर्वभागेआयावर्त्तात्तु चोत्तरे । तीरभुक्तात् पश्चिमे तु महापुर्य्याश्च सर्वत । महाकोशलदेशश्च सूर्य्यवंशपरायण ॥

महाकोशातकी । स्त्री॰ हस्तिघोषायाम् । मेनुवा॰ घीयातोरई॰ इ॰ भा॰ प्र॰ शाकि ॥ महाकोषातकी स्निग्धा सरा पित्तानिलापहा ॥

महाक्रतु । पु॰ अश्वमेधे ॥ महांश्चासौ क्रतुश्च ॥

महाखर । पु॰ अश्वतरे ॥

महागद । पु॰ ज्वरे ॥

महागन्ध । पु॰ कुटजवृक्षे ॥ अम्बुवेतसे । न॰ हरिचन्दने ॥ महान् गन्धोयस्य॰ यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री॰ चामुण्डायादेव्याम ॥ केविकापुष्पे ॥ नागवलायाम् ॥

महागव । पु॰ गवये । वनगवे ॥

महागिरि । पु॰ बौद्धभेदे ॥ बृहत्पर्वते ॥

महागुरु । पु॰ मातरि । पितरि ॥ आचार्य्ये ॥ यथा । मातापितात्रह्मदाता महान्तोगुरवः स्मृताः । इति ॥ महांश्चासौ गुरुश्च । आन्महतद्धृयात्वम् ॥ स्त्रियाः पतिरेवमहागुरु ॥

महागुल्मा । स्त्री॰ सोमवल्ल्याम् ॥

महागुहा । स्त्री॰ पृश्निपर्ण्याम् ॥

महागोधूम । पु॰ पश्चाद्देशभवेगोधूमविशेषे । वडा॰ गोहू॰ इ॰ भाषा ॥

महाग्रह । पु॰ सूर्य्ये ॥

महाग्रीव । पु॰ उष्ट्रे ॥ त्रि॰ बृहत् ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री॰ सुरायाम् ॥ महती घूर्णायस्यायया वा ॥

महाघोर । त्रि॰ अतिशयभयानके ॥

महाघोष । पु॰ अतिघोषणे । महाशब्दे । न॰ हट्टे । आपणे ॥ त्रि॰ उरच्छब्दयुक्ते ॥

महाघोषा । स्त्री॰ कर्कटशृङ्ग्याम् ॥ कुन्दरुल्याम् ॥

महाङ्ग । पु॰ उष्ट्रे ॥ महान्त्यङ्गान्यस्य । अनेकमितिबहुव्रीहि ॥ गोक्षुरके ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि॰ बृहद्वयवयुक्ते ॥

महाचञ्चु । पु॰ बृहच्चञ्चुमतिखगे ॥ शाकविशेषे । सुचञ्चुकायाम् । दीर्घपत्र्याम् । दिव्यगन्धायाम् ॥

महाचण्ड । पु॰ कालस्यभृत्ये ॥ त्रि॰ प्रचण्डे ॥

महाचीन । पु॰ देशविशेषे ॥ यथा कैलासानीरसमारभ्य सरयूपरित प

रे । अमरगामहेशानिमहाधीना भिधोभवेत् ॥

महाच्छद । पुं॰ देवताडवृक्षे । वृहत्पत्त्रे ॥

महाच्छाय । पुं॰ वटवृक्षे ॥ त्रि॰ वृहच्छायायुक्ते ॥ महतीच्छायाऽस्य ॥

महाच्छिद्रा । स्त्री॰ महामेदायाम् ॥ त्रि॰ वृहच्छिद्रयुक्ते ॥

महाज । पुं॰ वृहच्छागे ॥ त्रि॰ महाकुलोद्भवे । महाश्चासावजश्च ॥ महतोजायतेवा ॥

महाजटा । स्त्री॰ रुद्रजटायामोषधौ ॥ वृहत्यांजटायाम् ॥

महाजन । पुं॰ सज्जने । साधौ ॥ यथा । वेदाविभिन्ना स्मृतयो विभिन्नानाऽसौमुनिर्यस्यमत नभिन्नम् । धर्मस्यतत्त्वंनिहित गुहाया महाजनोयेनगत . सपन्था ॥ महाजनोपर्यनुक्रोशयुक्त सन्नाहरानाविवेक । यथा । आ पाप महामोहहतकसर्वथाहतस्त्वयाय महाजन । यत . । शान्तेऽनन्तमहिम्निनिर्मलचिदानन्दे तरङ्गावलीनिर्मुक्तेऽमृतसागरास्मिन्मना क्मग्नोपिनाचामति । निःसारे मृगतृष्णिकार्णवजले श्रान्तोपिमूढ पिबत्याधावत्यवगाहतेऽभिरमते मज्जत्ययोमज्जतीति ॥ मन्त्री । यथा । प्रायेणैतदिदं नमहाजनोय देव्याविमोहितमतिर्वतमायया जनम् । अव्याजडीकृतमतिमधुपुष्पितायांवैतालिकीमहतिकर्मणियुज्यमान . ॥

महाजम्बु । स्त्री॰ )
महाजम्बू । स्त्री॰ ) वृहज्जम्ब्वाम् । राजजम्ब्वाम् ॥

महाजव । पुं॰ गवये ॥ श्रीकारिविमृगे ॥ त्रि॰ अतिशयवेगवति ॥

महाजाति । स्त्री॰ वासन्त्यामूलतायाम् । माधव्याम् ॥ श्रेष्ठवर्णे ॥

महाजाली । स्त्री॰ पीतवर्णघोषायाम ॥ राजकोषातक्याम् ॥ जालयति । जालमाच्छादयति । ण्वु॰ । पचाद्यच् । गौरादि । महतीचासौजालीच ॥

महाज्यैष्ठी । स्त्री॰ नक्षत्रविशेषादियुक्तायाज्यैष्ठ्रापूर्णिमायाम् ॥ पश्चाच्छब्दकल्पद्रुमम् ॥

महाज्योतिष्मती । स्त्री॰ लताविशेषे । तेजोवत्याम् । वहुरसायाम् । कनकप्रभायाम् । लवणायाम् । वडीमालकांगणौ॰ हु॰ भा॰ ॥

महाज्वाल । पुं॰ यज्ञवह्नौ ॥ त्रिस्याम् ॥

महाज्वाला । स्त्री॰ जिनानाविद्याधरीविशेषे ॥ वृहदग्निशिखायाम् ।

महाडीनम् । न॰ पक्षिण . खद्रूपतनेनप्रकारावृत्तौ ।

महाढ्य । पु० कदम्बे ॥ त्रि० अतिशयधनवति ॥

महातपा । पु० विष्णौ ॥ महत्सृष्टिविषय तपोज्ञानमस्य । ऐश्वर्यं प्रतापोवामहदस्य ॥

महातमप्रभा । स्त्री० अतिशयान्धकारमयेनरकविशेषे ॥

महातरु । पु० स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न० पातालप्रभेदे ॥

महातारा । स्त्री० जिनानादेवीविशेषे ॥

महाताली । स्त्री० पावत्‌र्याम् ॥

महातिक्त । पु० महानिम्बे ॥ त्रि० अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री० यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री० भल्लातकवृक्षे ॥ त्रि० अतिशयतीक्ष्णे ।

महातुम्बी । स्त्री० राजालाब्वाम् ॥

महातेजा । पु० अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयदोयेनतेजसाभास्करादय । तत्तेजोमहदस्येतिमहातेजा वदीश्वर ॥ शौर्यशौर्यादिभिर्धर्म्मैर्महद्भि समलङ्कृत. । इतिवाख्यान्महातेजा भनुपातनदीश्वर ॥ न० पारदे ॥ त्रि० अतिशयतेजस्विनि ॥ महत्प्रकृष्टंतेजोयेत्यल्पयमस्य ॥

महात्मा । त्रि० महामनसि । महाशये ॥ अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्तःकरणे । शुद्धसत्त्वे । समुत्पन्नसम्यगृदर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अथ द्रवुद्धौ ॥ महानुषनेकजन्मसुकृते रक्षात शुद्धकामाद्यनभिभूत • आत्मा ।• अन्तःकरण यस्यस' ॥ महांश्चासावात्माचेतिवा ॥

महात्यय । पु० चतुर्थके० विषमज्वरे ॥ गम्भीरे ॥ मर्शतिकष्टे ॥

महादण्ड । पु० यमदूतप्रभेदे ॥

महादन्त । पु० गजदन्ते । ईशादन्ते । वृहद्दन्तमात्रे । त्रि० तद्वति।

महादानम् । न० श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे । यथा । आद्यन्तुसर्वदानानातुलापुरुषसञ्ज्ञितम् । हिरण्यगर्भदानञ्चब्रह्माण्ड तदनन्तरम् । कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच। पञ्चलाङ्गलक तद्वद्धरादानतथैवच । हिरण्याश्वरथस्तद्वत्‌ हेमहस्तिरथस्तथा। द्वादशविष्णुचक्रञ्चततःकल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैवच । महाभूतघटस्तथ

तृष्टोऽस्य परिकीर्त्तित" ॥

महादारु । न॰ देवदारुणि ॥

महादाह । पु॰ नरकान्तरे ॥

महादेव । पु॰ शिवे ॥ महांश्चासौ-
देवश्च । चान्महतइत्यात्वम् । म
हान्देवोन्द्रत्वादिरूपाक्रीडायस्येतिवा
॥ ब्रह्मादीनासुराणाञ्चमुनीनाब्रह्म
वादिनाम् । तेषाञ्चमहतोदेवोमहा
देव प्रकीर्त्तित ॥ महतीपूजिताविश्वे मूलप्रकृतिरीश्वरी। तस्यादेव पू
जितश्चमहादेव सचस्मृत ॥ इ॰
ब्र॰ वै॰ पु॰ ॥ सर्वदेवानामहनीय
त्वाच्चमहादेव । तथोक्त सात्वपुरा
णे । पूज्यतेयत्सुरे सर्वैर्महांश्चैव
प्रमाणत । धातुर्महेतिपूजायाम
हादेवस्ततस्मृत ॥ स्कादेपि । म
हतामपिदेवनामहमेवमहान्यत ।
नतुमत्तोमहानन्योमहादेवस्ततोह्य
हमिति ॥ कोटयोब्रह्महत्यानामग
म्यागमकोटय । सद्य प्रलयमा-
यान्तिमहादेवेतिकीर्त्तनात्॥ महा
देवमहादेवमहादेवे तिवादिनम् ।
वत्स गौरिवगौरीशोधावन्तमनुधाव
ति ॥ यद्योक्तमयव शिरसि । सर्वा
न्भावान्परित्यज्यात्मज्ञानयोगैश्व
र्ये महतिमहीयतेतस्मादुच्यतेमहा-
देवइति । यस्यार्थोविष्णुसहस्रनाम
भाष्यटीकायांद्रष्टव्य ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महती-
ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यव
हारयति॰ इतिमहादेवी। दिवु॰ ।
अच् । टित्वान्ङीप् ॥ पूज्यतेयासु
रे सर्वैर्महतीचप्रमाणत । धातु
र्महेतिपूजायांमहादेवीतत स्मृते
तिदेवीपुराणम् । सर्वद्रष्टमहादेवी
द्रष्टासाक्षीचसैवहीतिदेवीभागवत
म् । द्रष्टाजीव साक्षी॰ ईश्वर ॰
दृश्यसर्वंजगत्॰ इदञ्च सैवभगवती
भवतीत्यर्थं ॥ राज्ञ्याम् । महिष्या
म् । पट्टदेव्याम् ॥

महादैत्य । पु॰ भौत्यमन्वन्तरीयदै-
त्यविशेषे ॥ उत्कृष्टदैत्ये ॥

महाद्युति । त्रि॰ ईश्वरे ॥ महती-
बाह्याभ्यन्तरव्यापिनीद्युतिर्यस्य तन्य
लक्षणाखर्वामादिपराभवेनखण्डित
साधनोन्मुखे॰ पुरुषर्षभे । महती
द्युतिरस्य ॥

महाद्रिधृक् । पु॰ हरौमहान्तमद्रि-
मन्दरगोवर्द्धनवाऽमृतमथनेगोरक्ष-
णेवाधृतवानितिव्युत्पत्ति फलिता
र्थकथनपरा । वस्तुतस्तुमहाद्रयेधृ
ष्णोति॰ धत्तु मृप्रगल्भते । ञिधृ-
षाप्रागल्भ्ये । क्विप् । क्विन्प्रत्यय
स्यकु ॥

महाद्रुम । पु॰ अश्वत्थे ॥ महांश्चा
सौद्रुमश्च ॥ हहद्वृक्षे ॥

महाद्रोणा । स्त्री॰ देवलतायाम् । दि
व्यपुष्पायाम् ॥

महाद्रणी । स्त्री० महाद्रोणायाम्रुपे ॥
महाद्दन्त । पुं० युद्धवादो ॥ अतिकष्टे ॥
महाधनम् । न० महामूल्ये । बहुमूल्ये वस्तुनि । महगी० हू० भा० । सुवर्णे ॥ सिह्लके ॥ चारुवाससि । महद्धनमूल्यमस्य ॥ कृषिकर्मणि । त्रि० अतिशयधनयुक्ते ॥
महाधातु । पु० स्वर्णे ॥
महाध्वग । पु० उष्ट्रे ॥
महानट । पु० महादेवे ॥
महानद । पु० नदविशेषे ।
महानदी । स्त्री० पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातनजातुनजायतेम्बुजादम्बु । सुरहरतवविपरीतपदाम्बुजाद्यन्महानदीजाता ॥
महानन्द । पु० मुक्तौ ॥ अधिकाह्लादे ।
महानन्दा । स्त्री० अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥
महानन्दि । पु० नन्दिवर्धनाख्यराजपुत्रे ॥
महानरक । पु० अतिशयनानाप्रकारयातनास्थाने ॥
महानल पु० वृहदग्नौ ॥ दैवगतौ ।

महानवमी । स्त्री० आश्विनशुक्लनवम्याम् ॥
महानसम् । न० पाकस्थाने । रसवत्याम् ॥ तत्र स्मणीयजनानामाख्येउक्ता । यथा । सूदशास्त्रविधानज्ञापराऽभेद्याः कुलोद्गता । सर्वेमहानसेधार्याः ककशकेशनखाजना ॥ इति ॥ पुंलिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनश्च । अनोश्माय सरसाजातिसञ्ज्ञयोरितिसंज्ञायाटच ॥
महानसाधिकृत । त्रि० पौरोगवे ॥ महानसेऽधिकृत ॥
महानाटकम् । न० हनुमन्नाटके ॥ नाटकविशेषे ॥
महानाडी । स्त्री० कण्डरायाम् ॥
महानाद । पु० कुञ्जरे ॥ वर्षुकाब्दे ॥ महाशने ॥ ध्वनिराद्दे । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्य ॥
महानिद्रा । स्त्री० मरणे ॥
महानिम्ब । पुं० प्रवमेष्टे । पार्वते । बकायन० ट्रेक० ऊक० हू० भाषा । महानिम्बोहिमोरूक्षस्तिक्तो-ग्राहीकषायक । कफपित्तक्रमिच्छर्दिकुष्ठह्रासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशन ॥
महानिशा । स्त्री० निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यस्यप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थप्रहरद्वयम् । तत्रस्नाननकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमितिरघुनन्दन । देवलोक्तामहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीच । पु॰ रजके । अतिशयहीनवर्णे ॥

महानील । पु॰ भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृताद्रूत्यगस्त्योक्ते । तल्लक्षणं यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित । नीलततानुयात्सर्वंमहानील सउच्यते ॥ इतिगारुडे॰ ७२ अध्याय ॥

महानीला । स्त्री॰ महाजम्ब्वाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ वृहन्नील्याम् । श्रीफलिकायाम् । केशार्हायाम् ॥

महानुभाव । पु॰ औदार्ये ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपश्चाचारादिनिबन्धनोऽनुभाव प्रभावोयस्यस ॥

महान्तक । पुं॰ महेन्द्राचलपीठस्थेशिवे । स्त्री॰ देवीविशेषे ॥ महेन्द्रेचमहान्तका ॥

महापक्ष । पु॰ बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न॰ वृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ श्योनाक काश्मर्यं पाटलातथा । सर्वैस्तुमिलितैरेतैः ख्यातम्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ वृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चमुस्तको वत्सनाभक । शङ्खकर्णीतियो गोयमहापञ्चविषाभिध ॥

महापञ्चाङ्गुल । पु॰ स्थूलैरण्डे

महापत्र । पु॰ शाकवृक्षे ॥ मानके । मानकचू॰ हु॰ गौ॰ दे॰ भा॰ प्र॰ कन्दे ॥ त्रि॰ वृहत्पत्रयुक्ते ॥ महान्तिपत्राणियस्यस ॥

महापत्रा । स्त्री॰ महाजम्ब्वाम् ॥

महापथ । पु॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णपथि ॥ श्मशाने ॥ महतापन्था ॰ च ॥

महापथगम : । पु॰ मरणे ॥

महापद्म । पु॰ अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ शतकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न॰ सितपद्मे ॥

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानस्तेयगुर्व-
ङ्गनागमः । महान्तिपातकान्याहु
स्संसर्गश्चापितैः सह ॥ महापात
कजचिह्नं सप्तजन्मसु जायते । बाध
तेव्याधिरूपेणतस्यकृच्छ्रादिभि श
मः ॥ महच्चतत्पातकञ्च ॥

महापातकी । स्त्री॰ ब्रह्महत्याद्यन्यतम
पातकयुक्ते ॥ वीरहननाद्यन्यतममहा
पातकयुक्ते ॥ यथा । वीरघातीतथा
पापी गैरिणीगामी तथा । स्तेयी म
हापातकिनस्तत्संसर्गी च पञ्चमः ॥
सच पतितः ॥ यथा । महापातकि
नो ये च पतितास्ते प्रकीर्त्तिताः । प
तितानान्नदाहः स्यान्नान्त्येष्टिर्ना-
स्थिसञ्चयः । नचाश्रुपात पिण्डौ
वाकार्य्यं श्राद्धादिक क्वचित् ॥ ए
तानि पतितानान्तु यः करोति विमो
हितः । तप्तकृच्छ्रद्वयेनैव तस्य शुद्धि
र्नचान्यथा ॥ इति शुद्धितत्त्वधृतवि
ष्णुपुराणवचनम् ॥ महापातकिनो
जीवत एव तस्योदकक्रियावच्यमा
णरीत्यामपिण्डैः समानोदकैश्च या
मातृहिर्गत्वाऽऽहृत्य ऋत्विग्गुरुसन्निधा-
नैरिक्तायां नवम्यां तिथौ दिनान्ते कर्त्त
व्येत्याहमनुः ॥ पतितस्योदकं का-
र्य्यं सपिण्डैर्बान्धवैर्बहिः । निन्दि-
तेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्नि
धौ ॥ दासीघटमपां पूर्णं पर्य्यस्येत्प्रे
तवत्पदा ॥ अहोरात्रमुपासीरन्नशौ
चं बान्धवैः सह ॥ निवर्त्तेरंश्च तस्मा
त् सम्भाषणसहासने । दायाद्यस्य
प्रदानञ्च यात्रा चैव हि लौकिकी ॥
ज्येष्ठता च निवर्त्तेत ज्येष्ठावाप्यञ्च यद्ध
नम् । ज्येष्ठांशं प्राप्नुयाच्चास्य यवीया
न् गुणतोऽधिकः ॥ प्रायश्चित्ते तु च
रिते पूर्णं कुम्भमपां नवम् । तेनैव सा
र्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये
॥ स त्वप्सु तं घटं प्रास्य प्रविश्य भवन
स्वकम् । सर्वाणि ज्ञातिकार्य्याणि यथा
पूर्वं समाचरेत् ॥ एतदेव विधिं कुर्य्या
द्योषित्सु पतितास्वपि । वस्त्रान्नपा
नं देयन्तु वसेयुश्च गृहान्तिके ॥ महा
पातकमस्यस्यास्तीत्यन्या । इनि ॥
पारिभाषिकमहापातकी यथा ॥ कृ
तप्राणप्रतिष्ठान्नीयं धातुप्रतिमाच्छिन्न
दुर्गानप्रमेद्यस्तुः समहापातकी स्मृ
तः ॥ अपिच पितरमातरभार्य्यां
गुरुपत्नीगुरु परम । योनपुष्णातिका
पश्यातसमहापातकी भवेत् ब्र॰ वै॰
पु॰ ॥

महापाप्मम् । न॰ महापातके ॥ अत्यु
त्कटपापे ॥

महापाप्मा । पु॰ अत्युग्रे ॥ कामे ॥
महतः पापस्य हेतुत्वात् ॥

महापारेवतम् । न॰ द्वीपान्तरवते ।
द्वीपखर्ज्जूरे ॥

महापाश । पुं॰ यमदूतविशेषे । उ
ग्रत्यायो ॥

महापासक । पु॰ गोमिनि । चेलुकी । बुद्धभिक्षुशिष्ये ॥

महापिण्डीतक । पु॰ कृष्णवर्णमदनद्रुमे । वाराहे ॥

महापिण्डीतरु । पु॰ वृक्षविशेषे । श्वेतपिण्डीतके । श्लक्ष्णकोषतरौ । शरे । पिण्डीतरौ । पेंडिरा॰ इ॰ भा॰ ।

महापीठम् न॰ एकपञ्चाशत्पीठे ॥

महापीलु । पु॰ वृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न॰ एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच । वर्णनं प्रलयानाञ्चमोक्षस्यचनिरूपणम् । उत्कीर्त्तनं हरेरेवदेवानाञ्चपृथक् पृथक् ॥ दशाधिकंलक्षणञ्चमहतापरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे १३२ अध्याय ॥

महापुरुष । पु॰ नारायणे । श्रेष्ठनरे ॥ लक्षण वाराह्या ६७ अ॰ ॥ ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते ॥ महांश्चासौपुरुषश्च । सन्महदिति समास । आन्महतद्दृत्यात्वम् ॥

महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री॰ महाशताव्याम् ॥

महापुष्पा । स्त्री॰ अपराजितायाम् ॥

महापृष्ठ । पु॰ उष्ट्रे त्रि॰ वृहत्पृष्ठे ॥

महापौरुषिक । पु॰ वैकुण्ठनाथानुचरे ॥

महाप्रकृति । स्त्री॰ दुर्गायाम् ॥

महाप्रपञ्च । पु॰ स्थूलसूक्ष्मकारणप्रपञ्चानासमष्टौ ॥ यथाऽवान्तरवनानासमष्टिरेक महद्वनम्॰ यथाऽवान्तरजलाशयानासमष्टिरेकोमहान् जलाशयोभवति॰तद्वत्स्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ । त्रि॰ अतिशयदीप्तियुक्ते ॥

महाप्रभाव । त्रि॰ अतिशयतेजशक्तिविशिष्टे ॥

महाप्रभु । पु॰ जगन्नाथे ॥

महाप्रलय । पु॰ सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे ॥ महांश्चासौप्रलयश्च ॥ न्यायमते जन्यभावानधिकरणे कालोमहाप्रलय ॰ सचचरमध्वंसरूप ॰ ॥

महाप्रसाद । पु॰ विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्य नैवेद्यञ्चविशेषत । महाप्रसादइत्युक्त्वाग्राह्य विष्णौ प्रयत्नत ॥ ब्रह्मोत्तरखण्डमध्येत्वेवब्रह्मणेऽपि तवस्तुनि । तन्माहात्म्य महानिर्वाणतन्त्रेसम्यक्

निरूपितम्

महाप्रस्थानम् । न॰ शास्त्रीयदेहत्या गविशेषे ॥ महत्॰ आवृत्तिशून्यप्र स्थानम्॰ सर्पव्याघ्रकरिहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमनयाव च्छरीरपात तन्महाप्रस्थानम्॰ इत्यु च्यते ॥

महाप्राण । पुं॰ द्रोणकाके ॥

महाप्रेत । पु॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व । एतेपञ्चमहाप्रेताभूताधिपतयो मता ॥ चत्वारोमञ्चचरणा' पञ्चम प्रच्छदपट । सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल । पु॰ मालूरे । बिल्वे ॥ चि॰ उत्कृष्टफले ॥ न॰ वृहत्फले॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुबीजपुरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥

महाबल । पु॰ वायौ ॥ बुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्ट बलमस्य ॥

महाबला । स्त्री॰ अतिबलायाम् । पी तपुष्प्याम । पीतवाट्यालके ॥

महाबोधि । पु॰ बुद्धे ॥

महाब्राह्मण । पु॰ निन्दितब्राह्मणे । काव्या॰ अचारज॰ इ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट । पु॰ अतिशययोद्धरि ॥

महाभाग । त्रि॰ अतिधन्ये ॥ दयाद्य ष्टगुणयोगोमहाभागता॰ तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री॰ महालयतीर्थस्थाया देव्याम् ॥

महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारण यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकत । पुराकिलसुरैः सर्वैः समस्थतुलया धृतम् ॥ चतुर्भ्यः सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्त्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥

महाभिष । पु॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोजात प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता । स्त्री॰ लज्जालुवृक्षे ॥ त्रि॰ अतिशयभययुक्ते ॥

महाभीम । पु॰ शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि॰ अतिशयभयानके ॥

महाभीरु । पु॰ कीटविशेषे । गोपालिका॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ग्वाली॰ इ॰ दे॰ भा॰ ॥ अतिशयभयशीले ॥

महाभीष्म । पु॰ शान्तनुनृपे ॥

महाभूतम् । न॰ व्योमादिपञ्चसु । भूम्यादिपञ्चसु ॥ महाभूतानिपञ्चैव खानिलाग्न्यम्बुभूमय ॥

महाभृङ्ग । पु॰ नीलभृङ्गराजे ॥

महाभैरव । पु॰ शरभरूपिशिवरे ॥

महाभोग । त्रि॰ नारायणे । अतिसुखिनि ॥ महान्भोग सुखरूपोऽस्य ॥

महाभोगा । स्त्री॰ दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततः स्मृता ॥

महामण्डूक । पु॰ पीतमण्डूके ॥

महामति । त्रि॰ अतिशयबुद्धिविशिष्टे ॥

महामद । पु॰ मत्तगजे ॥ त्रि॰ अतिशयहर्षयुक्ते ॥

महामना । त्रि॰ सदन्त करणे । उत्कटे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते ॥ सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्भिर्धीरमन्यैरसममानमन्यमानमनोयस्स ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माखिलजगतांमनसैवकरोतीतिमहामना ॥ मनसैवजगत्सृष्टिं स हारञ्चकरोतिय इतिविष्णुपुराणम् ॥ मनसैव॰ सङ्कल्पमात्रेणैव ।

महामाघ । पु॰ योगविशेषे ॥ माघीचमघसंयुक्तामघायाचगुरुर्यदा । महामाघस्तदाप्रोक्तोब्रतोद्वाहादि वर्ज्जयेत् ॥

महामात्र । पु॰ प्रधाने । अमात्ये । सेनान्यादौ ॥ समृद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री॰ आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥

महामानसी । स्त्री॰ जिनाननाविद्यादेवीभेदे ॥

महामाय । पु॰ हरौ ॥ मायाविनामपिमायाकारित्वात् ॥ महतीप्रकृष्टामायास्य। महामायात्वचमायाविनामपिमयशम्बरप्रभृतीनाविविधप्रपञ्चविभ्रमकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री॰ दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनमाया॰ तस्याश्चमहत्त्वसर्वविषयत्वमितिव्याख्यानात् तस्या स्वरूपयथा । कालिकापुराणे । गर्भान्तर्ज्ञानसम्पन्नं प्रेरितसूतिमारुतै

। उत्पन्न ज्ञानरहितकुरुतैयानिरन्त रम् । पूर्वातिपूर्वसम्वस्सस्कारेण-नियोज्यच । चाहाराद्दीततोमोह ममत्व ज्ञानसश्रयम ॥ क्रोधोपरोध लोभैस्तुचिप्ताचिप्तापुन पुन । प स्वात्मा मेनसयोज्य चिन्तायुक्तामहर्निशम् ॥ चामोदयुक्ता व्यसनासक्त जन्तु करोतिया । महामायेतिसाप्रोक्तातेनसाजगदीश्वरी ॥ इति ।

महामायी । पु० ईश्वरे ॥

महामायी । स्त्री० दुर्गायाम् ।

महामारी । स्त्री० महाकाल्याम् ॥ स्त्रामर्थभूतायामहाजनक्षयकर्यांदेव तायाम् । सहारशक्तौ ॥ महतोमारयतीतितथा । महतीचासौमारी चेतिवा ॥ व्याप्तमयैतत्सकलब्रह्माण्ड मनुजेश्वर । महाकाल्यामहाकालीमहामारीस्वरूपया ॥ सैवकालेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थितिकरोभूतानांसैवकालेसनातनी तिमार्कण्डेयपुराणम् ॥ चतिशय मारके ॥

महामार्ग । पु० राजमार्गे ।

महामालिनी । स्त्री० नाराचाभिधेवृत्तविशेषे । यदिहनयुगलततोविटरेफैर्महामालिनीतिलक्षणम् ॥

महामाष । पु० राजमाषे । चौरा० लोबिया० इ० भा० ॥

महामुख । पु० कुम्भीरे न बृह न्मुखे ॥ त्रि० तद्वति ॥

महामुण्डी । स्त्री० महाश्रावणिकायाम् ॥

महामुनि । पु० नारायणे ॥ चगस्त्ये ॥ बुद्धे काले ॥ कृपाचार्ये ॥ व्यासे ॥ महांश्चासौमुनिश्च । सम्भवदितिसमास । चान्महतश्चात्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुवृक्षे ॥ न० कुस्तुम्बुरुणि । धन्याके ॥

महामूर्द्धा पु० शिवे ॥ त्रि० बृहन्मस्तकयुक्ते ॥

महामूल । पु० राजपलाण्डौ ॥ त्रि० लिङ्गिष्टे ॥

महामूल्य । पु० पद्मरागे ॥ न० महार्घे ॥ त्रि० तद्वति ॥

महामूषिक । पु० वृहदुन्दुरौ । महाखुः ॥

महामृग । पु० हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय । पु० मृत्योर्मृत्युकरे शिवमन्त्रविशेषे ॥ नित्यमष्टशत जपत्वामृत्युमृत्युपथ नयेत् ॥

महामेघ । पु० अतिशयमेघे ॥

महामेद । पु० अष्टवर्गान्तौषधे पुरोडवे ॥ वृहन्मेदे ॥

महामेदा । स्त्री० अष्टवर्गान्तौषधविशेषे । वसुच्छिद्रायाम् । जीवन्याम् । पाण्डुरागिण्याम् ॥ महामेदाभिध० कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्रकनिभ कन्दोलताजात सुपाण्डुर ।

महामेदाभिध प्रोक्तोदन्यभावप्र
काशके । मेदातुरा गुरुस्वादुर्बृष्य
स्तन्यकफापहम् । दृष्यशीतल
पित्तरक्तवातज्वरप्रणुत् ॥ तस्याश्च
लाभ यस्मा स्थानेशतावरीदेया ॥

महामैत्र । पु० बुद्धभेदे ॥ ॥

महामोह । पु० भोगेच्छारूपाज्ञाने
॥ महामोहस्तुविज्ञेयोग्राम्यभोगसु
खैषणा ॥ रागे । विषयंथविशेषे
सदशविध । शब्दादिषुपञ्चसु
दिव्यादिव्यतयादशविधेषुविषयेषु
रञ्जनीयेषुराग० आसक्तिर्महा
मोह० सचदशविधविषयत्वा
दशविध ॥

महामाढी पु० शिवप्रिये धत्तूरे
॥ स्त्रि० कहामोहाभिष्टे ॥

महाम्बुज । पु० नरकान्तरे ॥

महाम्रम् । न० तिन्तिडीके । बृहदा
म्र ॥

महारव । पु० दुग्धदुपासक्तविशेषे ॥

महायज्ञ । पु० अध्यापनादिपञ्चसु
॥ पाठोहोमश्चातिथीनासपर्यातर्प
णबलि । एतेपञ्चमहायज्ञाब्रह्म
यज्ञादिनामका ॥ अध्यापन ब्रह्म
यज्ञ पितृयज्ञस्तुतर्पणम् । होमो
दैवोबलिर्भौतोनृयज्ञोऽतिथिपूज
नम् ॥ अहुतञ्चहुतञ्चैवतथाप्रहुत
मेवच । ब्राह्म्यहुत प्राशितञ्चप
ञ्चयज्ञान्प्रचक्षते ॥ जपोऽहुतो

हुतोहोम प्रहुतोभौतिकोबलि
। ब्राह्म्यहुतद्विजाग्र्यार्चाप्राशित पि
तृतर्पणम् ॥ पञ्चैतान्योमहायज्ञा
न्नहापयतिशक्तित । सगृहेपिव
सन्नित्य सूनादोषैर्नलिप्यते ॥ दे
वताऽतिथिभृत्यानापितृणामात्म
नश्चय । ननिर्वपतिपञ्चानामु
च्छ्वसन्नसजीवति ॥ अपिच । एते
पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा
। ब्राह्मणानाहितार्थायइतरेषाञ्च
तन्मुखा ॥इतरेषाञ्चवर्णानाब्राह्मणै
कारिता शुभाः ॥एव कृत्वानरो
भुक्त्वाऽऽत्मशरीरीविशुद्ध्यति । अन्य
थाब्रीहयोऽन्नेतेएकोऽस्तगच्छति ॥
मन्तव्यादात्मभोक्तृणामहामास तुत
द्भवेत् ॥ इ० वराहपुराणे ॥

महायशा । पु० भूताश्वविशेषे ॥
न० कल्पभेदे ॥ त्रि० लोकेवेदेच
प्रसिद्धविभवे ॥ अतिशययशोयुक्ते ॥

महायशस्क । त्रि० अतिशययुक्ते ॥

महायोगी । पु० अद्रिकूटपीठस्थे
शिवे ॥

महारजतम् । न० स्वर्णे । धुस्तूरे ॥
बृहद्रौप्ये ॥ महच्चतद्रजत च । स
न्महदितिसमास । आन्महतद्व
च्यात्त्वम् ॥

महारजनम् । न० कुसुम्भे । कसू
भा० इ० भा० ॥ शातकुम्भे ।
स्वर्णे ॥ रज्यतेऽनेन । रञ्जरागे ।

ल्युट्। रजकरजनरञ्जनरजस्सु प सङ्ख्यानान्नलोप ।॥ रञ्चे क्युन् वा ॥ महच्चतद्रजन च। सन्महदिति समास ।

महारण्यम्। न० अरण्यान्याम् ॥ महच्चतदरण्यञ्च। सन्महत्परमोत्तमोत्कृष्टा पूज्यमानैरितिसमास । आन्महतइत्यात्वम् ॥

महारत्नम्। न० मुक्तादिनवसु ॥ मुक्ताफलहीरकञ्चवैदूर्यंपद्मरागकम्। पुष्परागञ्चगोमेदनीलगारुत्मत तथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ । पु० रथिकविशेषे । अयुतधन्विभि सहयोद्धरि ॥ यथा। एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम्। शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृत ॥ अपिच। आत्मानं सारथिञ्चाश्वान् रक्षन् युद्ध्येत योनर । समहारथसञ्ज्ञ स्यादित्याहुर्नीतिकोविदा । शिवे ॥ विष्णौ ॥ महान् महात्मा ॰ मन्दी ॰ गरुडोवारथोयस्य स ॥

महारम्भम्। न० गण्डलवणे। साभर॰ इ॰ भा॰ ॥

महारस । पु० खर्जूरे ॥ कोशकारे । इक्षु विशेषे । कोसियार॰ इ॰ भा॰ ॥ कशेरुणि ॥ पारदे । रसेन्द्रे ॥ न॰ काञ्जिके ॥

महारसाष्टकम्। न० हिङ्गुलाद्याष्टसु ॥ यथा। दरदपारद स..वै क्रान्त कान्तमभ्रकम्। माक्षिक विमलश्चेतिस्युरेतेष्टौमहारसा ॥

महाराज । पु० बुद्धभेदे। मञ्जुघोषे ॥ असपत्नराज्य इति । नृपश्रेष्ठे ॥

महाराजचूत । पु० उत्तमाम्रे । मन्मथानन्दे ॥

महाराजद्रुम । पु० आरग्वधे

महाराजिक । पु० गणदेवताविशेषे ॥ सत्यसुधन्यसवनाद्योविंशत्यधिकशतद्वयसङ्ख्यातागौरवाद्भदर्शिता । महाराजिकनामानो द्विशतैविंशतिस्तथा ॥ महतीराजिपङ्क्तिर्येषामितिविग्रहेमिश्राविभाषेतिकन् ॥

महारात्रि । स्त्री॰ महाष्टम्याम् । अर्द्धरात्रात्पर मुहूर्तद्वये ॥ ब्रह्मलयोपलक्षितायामहाप्रलयरात्राम् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पो भवेन्नृप। प्रकीर्त्तितामहारात्रि साएवचपुरातनैरितित्र॰ वै॰ पु॰ ।

महाराष्ट्र । पु० देशविशेषे ॥ त्रिपञ्चकसमारभ्यमध्येचोज्जयिनीशिवे। मार्जारतीर्थराजेन्द्रकोलापुरनिवासिनी ॥ तावद्देशोमहाराष्ट्र . कर्णाटस्वामिगोचर । इ॰ शक्तिसङ्गमे ७ पटल ॥ अपिच। नैऋतेद्र

विडानत्त महाराष्ट्रास्वरैवत । ज-
वन पल्लव सिन्धु पारसीबाद
थोमता ॥ इ० ज्योतिषतत्त्वे कू-
र्मचक्र ।।

महाराष्ट्री । स्त्री० जलपिप्पल्याम ।।
शाकविशेषे । मरैठी० इ० भा० ।।
भाषाप्रभेदे ।

महारिष्ट । पुं० महानिम्बे । गिरि
निम्बे ।

महारुद्र । पु० महादेवे ।

महारूप । पु० शिवे

महारूपकम् । न० नाटके ।।

महारोग । पुं० पापरोगे ।। सचाष्ट
विधोयथा । उन्माद १ । त्व-
ग्दोष २ । राजयक्ष्मा ३ । श्वास
४ । मधुमेह ५ । भगन्दर ६ ।
उदर ७ । अश्मरी ८ । इति ॥

महारोगी । त्रि० महारोगयुक्ते ॥

महारौरव । पु० नरकान्तरे ॥ महा
रौरवसन्तत्तुअधोर्द्ध्वं तामसम्पुटम् ।
धम्यतेखदिराङ्गारैगुं रुदारापनाय
क ॥ देवद्रव्यापहारीचपच्यतेका
लमचयम् ॥ महानुरौद्रोरवोऽत्र ।
अकान्यादित्वाद्वलोप । यहा ।
रुरुर्भारघ्नाख्योमृग । महतोरु
रोरयम् । अण् ॥

महार्घ । पु० लावकाख्यपक्षी ॥ त्रि०
महामूल्ये ॥

महार्णव । पु० महासमुद्रे ॥

महार्थ । पुं० परमार्थे ॥

महार्ह । पु० हस्तविशेषे । महाजा
इ० गौ० दे० भा० ॥

महार्द्रम् । न० चन्दने ॥

महार्द्रकम् । न० वनार्द्रके ॥

महार्बुदम् । न० दशार्बुदे । शतकोटि
१०००००००००० सङ्ख्यायाम् ।
पद्मे ॥

महार्ह । पु० त्रि० ॥ मह पूजा०
तामर्हति । अर्हइतिसूत्रात्वर्हते
कर्मण्युपपदेअच्प्रत्यय ॥ न०
श्वेतचन्दने ॥

महालक्ष्मी । नारायणशक्त्याम् । रा
धायाम् ॥ यन्माययामोहिताश्चब्र
ह्मविष्णुशिवादय । वैष्णवास्ता
महालक्ष्मींपराराधावदन्तिते ॥ यद
र्द्धांशामहालक्ष्मी प्रियानारायण
स्यचेति ब्र० वै० पुराणम् ॥

महालय । पु० विहारे ॥ तीर्थमहा
भागादेव्याश्चैव ॥ परमात्मनि ॥
पितृणामुत्सवाश्रयेकन्यागतापरपक्षे
कन्यागत० इ० भा० ॥

महालसा । स्त्री० देवीविशेषे ॥ दक्षि
णदेशे० महादिस्थानमितिविख्या-
ते० देवीस्थाने ॥

महालिकटभी । स्त्री० श्वेतकिणही
वृक्षे ॥

महालीलसरस्वती । स्त्री० तारादेव्या
प्रभेदे ॥ लीलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥
महालोध्र । पु॰ लोध्रे । पटियालो ध॰ हु॰ भा॰ ॥
महालोल । पु॰ काके ॥ चि॰ अ-तिचञ्चले ॥
महालोहम् । न॰ अयस्कान्ते ॥
महावनम् । न॰ महारण्ये ॥ वृन्दावनस्यचतुरशीतिवनान्तर्गतवनविशेषे ।
महावय । पु॰ महामेदे ॥
महावरा । स्त्री॰ दूर्वायाम् ॥
महावराह । पु॰ आदिवराहे ॥ महाश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणातपृथिव्युद्धरणाय ॥
महावरोह । पु॰ प्लवक्षे ॥
महाबलि । पु॰ नरबलौ ॥
महावल्ली । स्त्री॰ माधवीलतायाम् ।
महावस । पु॰ शिशुमारे ॥
महावाक्यम् । न॰ परमार्थबोधकेवेदिकोपदेशवाक्यविशेषे । सद्वस्यापरपर्यायेप्रतिष्ठाद्यावुत्सर्गवाक्ये ॥ योग्यताकाङ्क्षासत्तियुक्तिवाक्यसमूहे ॥
महावारुणी । स्त्री॰ तिथिविशेषे । सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायायदिलभ्येतकोटिसूर्यग्रहैःसमा ॥ सा॰ वारुणीत्यर्थः ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौशतभिषायदि । महामहेतिविख्या

ताभिःकोटिकुलमुद्धरेत् ।
महावार्त्त । पु॰ स्कन्दे ॥ क्षीरामे ॥
महावीर्यात्प्रत्यय । भस्मवधोर्मेह त्वचोक्तायुद्धकाण्डे । पितामहान्महावानृषत्वात्पृथिव्यायेचरक्षसा अहन्तुर्ययेणतान्हत्वामिच्छन्महरिणपेश्वरेति ॥
महाविद्या । स्त्री॰ देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशी भुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । बगलासिद्धविद्याचमातङ्गीकमलात्मिका । एतादशमहाविद्या सिद्धविद्या प्र-कीर्त्तिता ॥ तासांदशावतारत्व यथा । प्रकृतिर्विष्णुरूपाचपुरुषश्च महेश्वर । एवप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहः स्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्यःस्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयंभगवान्कृष्णः कालीरूपोभवद्धे ॥
महाविराट् । पु॰ महाविष्णौ ॥
महाविलम् । न॰ नभसि हृच्छिद्रे ॥
महाविष । पु॰ द्विमुखसर्पे । काल

सर्पे ॥

महाविषम् । न॰ मेषसङ्क्रान्तौ ॥ मसूर निम्बपात्राभ्यां योऽत्ति मेषगते रवौ । अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥

महाविष्णु । पु॰ महाविराजि ॥

महावीचि । पु॰ नरकविशेषे । महावीचिर्यमहाकल्लोलैर्मतुमीयते ॥

महावीष्यम् । न॰ विटपे । मुष्कवङ्क्षणयोरन्तरे ॥

महावीरः । पु॰ गरुडे ॥ शूरे ॥ सिंहे ॥ मखानले । यज्ञाग्नौ ॥ वज्रे ॥ श्वेततुरङ्गे । अन्तिमजिने ॥ कोकिले ॥ लक्ष्मणे । हनुमति ॥ एकवीरवृक्षे ॥ सन्तानविहगे । जराटके ॥ कामदेवे । मारे ।

महावीरा । स्त्री॰ क्षीरकाकोल्याम् ॥

महावीर्य्य । पु॰ ब्रह्मणि । महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्य ॥ बुद्धभेदे ॥ वाराहीकन्दे ॥ त्रि॰ महाप्रभावे । अतिशयबलयुक्ते ॥

महावीर्य्या । स्त्री॰ संज्ञायाम् । सूर्यपत्न्याम् ॥ वनकार्पास्याम् ॥ महाशतावर्य्याम् ॥

महावृक्ष । पु॰ स्नुहीद्रुमे ॥

महावृहती । स्त्री॰ वार्ताक्याम् ॥

महावेग । त्रि॰ अधिकवेगवति ॥

महाव्याधि । पुं॰ कुष्ठादिमहारोगे॥

महाव्रणम् । न॰ दुष्टव्रणे ॥

महाव्रतम । न॰ द्वादशवार्षिकव्रते ॥ यथा । तेनवधकालादूर्ध्वं विंशत्यधिकशतस्य यावदवदिष्ट तावत्परिमाणमहाव्रतानुरूपाधेनवोदातव्या शरत्कालिकदुर्गापूजने ॥ यथा । महाव्रत महापुण्य शङ्कराद्यैरनुष्ठितम् । कर्त्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितैः ॥ अरुणोदयकालिकमाघस्नाने ॥ अस्तिचयोगशास्त्रेऽत्रविशेष । समथा । अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमा ॥ ३० ॥ एते जातिदेशकालसमयाऽनवच्छिन्ना सार्वभौमामहाव्रतम् ॥ ३१ ॥ येचाहिंसाद्य यमाउक्तास्तएवजात्याद्यनवच्छेदेन॰ दृढभूमयोमहाव्रतशब्दवाच्या तत्राहिंसाजात्यवच्छिन्नायथा॰ मृगयोर्मृगातिरिक्तान्नहनिष्यामीति॰ सैवकालावच्छिन्नायथा॰ नचतुर्दश्यानपुण्येऽह्नीतिसैवप्रयोजनविशेषरूपसमयावच्छिन्नायथा॰ क्षत्रियस्यदेवब्राह्मणप्रयोजनव्यतिरेकेणनहनिष्यामीति॰ युद्धं विनानहनिष्यामीतिच । एवं विवाहादिप्रयोजनव्यतिरेकेणानृतं नवदिष्यामीति । एवमापत्कालव्यतिरेकेण सुहृदाद्व्यतिरिक्तं स्तेयं नकरिष्यामीति । एवमृतुकालव्यतिरिक्त

कासेपलीनगमिष्यामीति। एव गुर्वादिप्रयोजनमन्तरेणनपरिग्रही ष्यामीति॰यथायोग्यमवच्छेदोद्रष्टव्य। एतादृगवच्छेदोपरिहारेण यदासर्वजातिसर्वदेशसर्व्वकालसर्वप्रयोजनेषुभवा सार्वभौमा अहिंसादयोभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्रतशब्देनोच्यते। एवकाष्ठमौनादिव्रतमपिद्रष्टव्यम्। एतादृशव्रतदार्ढ्यंच॰कामक्रोधलोभमोहानाचतुर्णामपिनरकद्वारभूतानांनिवृत्तिः। तत्राहिंसयाक्षमयाचक्रोधस्य॰ब्रह्मचर्य्येणवस्तुविचारेणचकामस्य॰चस्तेयापरिग्रहरूपेणसन्तोषेणलोभस्य सत्येनयथार्थज्ञानरूपेणविवेकिनमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृत्तिरितिद्रष्टव्यम्। इतराणिचफलानिसकामानायोगशास्त्रेकथितानि॥

महाव्रती। पु॰ शिवे॥ हरस्कन्दे॥ त्रि॰महाव्रतयुक्ते॥

महाशक्ति। पु॰ कार्त्तिकेये॥ हरौ॥ महतीशक्तिः सामर्थ्यमस्य॥ अतिशयपराक्रमे॥ स्त्री॰मायाशबलब्रह्मरूपिण्याम्। निर्गुणायाम्॥ त्रि॰ तद्युक्ते॥

महाशङ्ख। पु॰ नरास्थनि। कर्णनेत्रयोर्मध्यगतास्थ्नि॥ कर्णनेत्रान्तरालास्थिमहाशङ्खं प्रकीर्त्तित॥ दशनिखर्वे १०००००००००००० निधिप्रभेदे। अलिके। ललाटे॥ बृहच्छङ्खे॥ याज्ञायोगान्तरे। यथा। स्त्रीस्वस्थे लाभगेशुक्रे चिकष्टे देवपूजिते। महाशङ्खाख्ययोग प्रतिपद्यापमानव॥

महाशठ। पु॰ राजधत्तूरे॥ त्रि॰अतिधूर्त्ते।

महाशणपुष्पिका। स्त्री॰ वृहच्छणपुष्प्याम्। वृत्तपर्ण्याम्। श्वेतपुष्पायाम्॥

महाशता। स्त्री॰ महाशतावर्याम्॥

महाशतावरी। स्त्री॰ सहस्रवीर्यायाम्। सुरसायाम्। शतवीर्यायाम्। मह.शतावरीमेध्याहृद्यावृष्यारसायनी। शीतवीर्यानिहन्त्यर्शोग्रहणीनयनामयान्॥

महाशन। पु॰ विष्णौ। आश्यासे सर्वग्रसनात्महत्अशनमस्य।पृ॰मस्य। महाभैरवे। कामे॥ महदशनविषयजातं यस्य॥ असुरे। त्रि॰अतिभक्षणशीले।

महाशफर। पु॰ पफसाख्यमत्स्ये॥ महाशफरसञ्ज्ञस्तुतिक्तः पित्तकफापहः। शिशिरोमधुरोरुच्योवातसाधारणः स्मृत॥

महाशय। त्रि॰ सदिच्छे॥ महान्आशयोयस्य॥ पु॰समुद्रे॥

महाशय्या । स्त्री॰ राजतल्पे । बह्वक्ष्य्यायाम् ॥

महाशर । पु॰ स्थूलशरे ॥

महाशल्क । पु॰ चिङ्गटमत्स्ये ॥

महाशाक । पु॰ शाकवृक्षे ॥

महाशाखा । स्त्री॰ नागबलायाम् ॥

महाशाल । पु॰ महागृहस्थे । विस्तीर्णाभि शाखाभिर्युक्ते । सम्पन्ने ॥ महतीविस्तीर्णाशाला॰गृहयस्यस ॥

महाशालि । पु॰ स्थूलशालौ । सुगन्धिके ॥ महान्श्रेष्ठ शालि ॥

महाशिव । पु॰ महादेवे ॥

महाशीता । स्त्री॰ शतमूल्याम् ॥

महाशुक्ति । पु॰ मुक्तामातरि ॥

महाशुक्ला । स्त्री॰ सरस्वत्याम् ॥ त्रि॰ अतिशुक्लवर्णयुक्ते ॥

महाशुभ्र । त्रि॰ अतिशुभ्रवर्णयुक्ते । न॰रजते ॥

महाशूद्र पु॰ आभीरे ॥

महाशूद्रा । स्त्री॰ महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रह ॥

महाशूद्री । स्त्री॰ आभीर्याम् ॥ महाशूद्रस्यस्त्री॰जातीयावा । पु॰योगादिति॰जातेरितिवाङीष् ॥

महाशोणी । स्त्री॰ श्वेतकिणिहीवृक्षे ॥

महाशौषिर । पु॰ दन्तरोगविशेषे ॥ दन्ताश्चलन्तिवेष्टभ्यस्तालुचाप्यवदीर्यते । दन्तमासानिपच्यतेमुखस्यपतुद्यते ॥ यस्मिन्ससर्वजोव्याधिर्महाशौषिरसज्ञित ॥

महाश्मशानम् । न॰ आनन्दवने । काश्याम् ॥ महान्त्यपिचभूतानिप्रलयेसमुपस्थिते । शेरतेऽत्रशवाभूत्वाश्मशानन्तुततोभवेत् ॥ वाराणसीतिविख्यातारुद्रावासइतिद्विज । महाश्मशानमित्थेवप्रोक्तमानन्दकाननम् ॥

महाश्यामा । स्त्री॰ शिशपावृक्षे ॥ श्यामलत्याम् ॥

महाश्रम । पु॰ तीर्थविशेषे ॥

महाश्रमण । पु॰ बुद्धभेदे । शाक्यमुनौ ॥

महाश्रावणिका । स्त्री॰ कदम्बपुष्प्याम् । महामुण्डाम् ॥

महाश्री । स्त्री॰ बुद्धशक्त्यन्तरे । तारायाम् ॥

महाश्रोत्रिय । पु॰ महत्त्वेसतिश्रुताऽध्ययनवृत्तसम्पन्ने ॥ महाश्चासौश्रोत्रियश्च ॥

महाश्वेता । स्त्री॰ शुक्लभूकूष्माण्डे । कटुगन्धिकायाम् ॥ क्षीराभूमिकूष्माण्डे ॥ सरस्वत्याम् ॥ श्वेतापराजितायाम् ॥ सितायाम् ॥ मधुजायाम् । श्वेतकिणिहीवृक्षे ॥ दुर्गायाम् ॥ महतीचासौश्वेताच ॥

महाषष्ठी । स्त्री॰ दुर्गायाम् ॥

महाष्टमी । स्त्री॰ आश्विनशुक्लाष्टम्याम्

। शरत्कालेऽष्टमायां तु सैव प्रोक्ता महाष्टमी। महारात्रिरिति ख्याता तस्यां सम्यग्यजेत् सुधीः ॥ अष्टम्यां रुधिरैर्मांसैर्महामासैः सुगंधिभिः । पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम् । सिन्दूरैः पट्टवासोभिर्नाना विधविलेपनैः । पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि॥ उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् । यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥ पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा । विसर्ज्जयेद्दशम्यां तु श्रवणे तावरीत्सवैः तत्रार्द्धरात्रपूजा यथा । कन्यासस्थे रवाविष्टे शुक्लाष्टम्यां प्रपूजयेत् । सोपवासो निशार्द्धे तु महाविभवविस्तरैः । पूजासमारभेद्ध्यानञ्च वारुणं पिबा । पशुघातञ्च कर्त्तव्यो गवलाजवधस्तथेति देवीपुराणे वाक्यपदेन पूर्वाषाढोच्यत इति रघुनन्दनः ॥ महाष्टम्युपवासे पारणन्तु । अष्टम्यां समुपोष्यैव नवम्यामपरेऽहनि। मध्यमासोपहारेण दद्यान्नैवेद्यमुत्तमम् ॥ तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथेति ॥

महासन्न । पुं॰ कुवेरे । त्रि॰ अतिनिकटे ॥

महासमङ्गा । स्त्री॰ ह्रस्वबलायाम् । खिरहिट्यास् । बलायाम् । कगहि या॰ कची॰ खरैटी॰ हि॰भा॰ ॥

महासर्ज्ज । पुं॰ असनवृक्षे ॥ पनसे ॥

महासह । पुं॰ कुब्जकवृक्षे ॥ त्रि॰ अतिक्षमे ॥

महासहा । स्त्री॰ माषपर्ण्याम् । अम्लाने । कठसरेय्या॰हि॰भा॰ ॥ महती चासौ सहा च । सन्महदिति समासः । आन्महतइत्यात्वम् ॥

महासान्तापनम् । न॰ व्रतविशेषे ॥ अत्र याज्ञवल्क्य । कुशोदकञ्च गोक्षीरं दधिमूत्रं शकृद्घृतम् । जग्ध्वापरेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ हारहसाध्यसान्तपनमनुक्राह । पृथक् सान्तपनद्रव्यैः षडह सोपवासकः । सप्ताहेन तु कृच्छ्रोय महासान्तपन स्मृतम् ॥ महासान्तपन धेनु षट्कादानसमम् ॥

महासार । पुं॰ दुर्ग्खदिरे । त्रि॰ युक्तियुक्ते ॥

महासाहसम् । न॰ अतिबलात्कारकृतकार्ये । अतिशयदण्डे ॥

महासाहसिक । त्रि॰ अतिसाहसयुक्ते ॥ प्रसह्यापहारिणि । महांश्चासौ साहसिकश्च ।

महासिंह । पुं॰ शरभे । पर्वताश्रये ॥ देव्यां सिंहे ॥ यथा । तीक्ष्णदंष्ट्रकरालास्यः शटाशोभितकन्धरः . ।

चतुरङ्गिर्वेञ्चनखोमहासिद्ध : प्रकीर्तितइति ॥

महासुख । पु॰ बुद्धे ॥ न॰ क्रीडारसे ॥ प्रचुरसुखे ॥ त्रि॰ तद्वति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥ त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥ त्रि॰ अतिशयसूक्ष्मे ॥

महासेन । पुं॰ कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध । पु॰ शरभे ॥ त्रि॰ उच्चतस्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पु॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायु । पु॰ कण्डरायाम् ॥

महास्रग्वी । पु॰ शिवे ॥

महास्वन । पु॰ वाद्यप्रभेदे । मन्नतूर्ये ॥ विष्णौ ॥ महान्जर्ज्जितस्वन नादोऽस्य । यद्वा । महान्स्वन श्रुतिलक्षणोनादोस्य ॥ सम्भवादितिसमासे॰आत्वम् ॥ उच्चशब्दे ॥ त्रि॰ तद्वति ॥

महाहनु । पु॰ शिवे ॥ हनूमति ॥ त्रि॰ उच्चहनुयुक्ते ॥

महाहवि । न॰ गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च॰ब्रह्मात्मनिसर्वंजगत्तदात्मतयाहूयतेइतिमहाहवि . । यद्वामहाग्निहवींषिघाज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवताऋपस्ययजमानरूपस्यवेतिमहाहवि . ॥

महाहास । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छाम् । शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महि । स्त्री॰ भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्त । सर्वधातुभ्यइन् ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह॰ । क्कुन्शिल्पिसञ्ज्ञयो ॥

महित । त्रि॰ पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेतिक्त ॥

महिनम् । न॰ राज्ये ॥ त्रि॰ पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेतिपक्षेइनन् ॥

महिमा । पु॰ शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰येनसमस्तब्रह्माण्डेपिनसमवैति ॥ विभूतिविस्तारे ॥ आत्मन कर्मनिमित्तवृद्धिचयराहित्ये ॥ महतो भाव । पृथ्वादिभ्यइमनिच् ॥ उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्यवति ॥

महिर । पु॰ सौर्ये । मिहिरे । सूर्ये ॥

इतित्रिकाण्डशेष ' ॥

महिला । स्त्री० फलिन्याम् । गुन्द्राया म् । प्रियङ्गौ ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्ता याम्योषायाम् ॥ महति० मह्यते वा । मह० । सलिकल्यौति० इल च् । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम । प्रियङ्गौ ॥ महिलायाआह्वयोय स्याः ॥

महिष । पुं० तुलाये । कासरे । यमवाहने । भैंसा० इ० भा० ॥ महिषस्यामिषस्वादुस्निग्धोष्णवात नाशनम् । निद्राशुक्रबलस्तन्यतनु दार्ढ्यकरं गुरु ॥ इष्यत्पुष्टिविण् मूत्र वातपित्तास्रनाशनम् ॥ महति० मह्यतेवा । मह० । अविमह्यो ष्टिषच् । यद्वामहतीमहिषव्रीटिषच् । आगमशासनस्यानित्यत्वान्ननुम् ॥ अर्हद्ध्वजविशेषे ॥ असुराधिप विशेषे । महिषासुरे ॥ ब्रह्मधारि णिस्त्रे कल्प्मातिविशेषे ॥ पुरायच विषयासीत्सगरेणास्यवेदाद्यनधि कारोविशान्यत्वं धर्मनाशसकृत ॥

महिषकन्द । पु० महाकन्दविशेषे । शुभ्रालौ ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज । पु० यमे ॥ अर्हद्विशेषे ॥ महिषोध्वजोयस्य ॥

महिषमर्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सौ म्यायाम् ॥

महिषवाहन । पु० यमे ॥

महिषाक्ष । पु० )
महिषाख्य । पु० ) गुग्गुलौ । भृङ्गा ञ्जनसमप्रभे ॥

महिषाक्षादि । न० महिषाक्षादिपञ्चा नागणे ॥ यथा । महिषाक्षस्तथा 'राल निर्यास सर्जकस्तथ । कृष्णा गुरु कदम्बश्चमहिषाक्षादिपञ्चकम् ॥

महिषासुर । पुं० महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव । पु० भूमिजगुग्गुलौ ॥

महिषासुरहन्त्री । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायाराज्ञ पत्न्याम् ॥ मह्यते । मह० । अविम ह्योष्टिषच् । टित्वान्ङीप् ॥ औष धीभेदे ॥ सैरिभ्याम् । मन्दगमना याम् । महाक्षीरायाम् । भैंस० इ० भा० ॥

महिषीगोष्ठम् । न० महिषीशालाया म् । भैंसवाड़ा० इ० भा० ॥ महि षीणास्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या स्तन्ये ॥ माहिषमधुर मभ्यात्स्निग्ध शुक्रकर गुरु । निद्रा करमभिष्यन्दि क्षुधाधिक्यकर हिम म् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे।शूल्याम्।शूलपल्याम्। अलाम्बयायाम्॥
महिष्मान्। पु॰ देशविशेषे॥ महिषा॰ सन्त्यस्मिन्। महिषाअस्तिअस्मिन्निति॰ ड्मतुप्॥
मही। स्त्री॰ भूमौ। पृथिव्याम्॥ मह्यते। मह॰। चुरादावदन्त। ण्यन्तादच्। कृदिकारादिति ङीष्॥ यद्वा। महीयते। महीङ् पूजायाम्॰ कण्ड्वादियगन्त। क्विप् चेति क्विप्। यलोपयलोपौ। कृदिकारादिति ङीष्। तदभावे विसर्गश्रवणात्। मालवदेशविहारिण्याम्॥ महीजम्बुसुखादुवल्क पित्तहर गुरु। गवि॥ हिलमोचिकायाम्॥ यथा हस्वश्च स्थुक्याप्रभेदे॥ यथा। लघुर्गुरु। महीस्मृता॥ यथा। हरोऽस्तुमे। मनोमुदे॥
महीक्षित्। पुं॰ नृपे। राजनि॥ महीं॰ क्षयते॰ ईष्टे। क्षिनिवासगत्योः। मह्यां क्षयतिवा। क्षिऐश्वर्ययोः। क्विप्। तुक्॥
महीज॰। पु॰ भौमे। मङ्गलग्रहे॥ न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम्॰ न॰ मृदापाषाणैर्वेष्टकैर्नवाविस्ताराद्द्विगुणोच्छ्रायैर्यद्वाद्वशहस्तादुच्छ्रितेनचतुर्द्वारंसुपरिभ्रमणयोग्येनसौवर्णगवाक्षादियुक्तेनप्राकारे
णावेष्टितेराज्ञांवासस्थाने॥
महीधर। पु॰ विष्णौ॥ महींगिरिरूपेणधत्ते। धरति। धृञ्॰। मह्याधर॥ अच्॥
महीध्र। पु॰ शिखरिणि। पर्वते॥ महींधरतिधारयतिवा। धृञ्॰। मूलविभुजादित्वात्क॥
महीपाल। पु॰ राजनि॥ महींपालयति। पाल॰। कर्मण्यण्।
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पु॰ पर्वते॥ नृपे॥
महीमय। त्रि॰ मृत्तिकानिर्मिते मह्याविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह। पुं॰ शाखिनि। पादपे। वृक्षे॥ शाकवृक्षे॥ मह्यारोहयति। स्ववीजजन्मनिप्रादुर्भावे। इगुपध तिक॥
महीलता। स्त्री॰ किञ्चुलुके। केंचुवा॰ इतिख्याते॥ क्षुद्रदीर्घत्वात् श्यामत्वाल्लतेव॥
महीसुत। पु॰ मङ्गलग्रहे। लोहिताङ्गे॥ मह्याः सुत॥
महेच्छ। त्रि॰ महाशये। महाभिलाषे॥ महतीइच्छाऽस्य॥
महेन्द्र। पु॰ कलिङ्गदेशस्थेकुलपर्वतविशेषे॥ सिद्धपीठोयमद्रि। यथा। महान्तकोमहेन्द्रेचपार्वती चमहान्तकीति॥ त्रिसामाऽप्यृषिकुल्यायामहेन्द्रप्रभवा स्मृता॥

इन्द्रे । महांश्चासौ•इन्द्रश्च महान्वा चायमभूद्योवृत्रमवधीदितिश्रुते । ईश्वरे । विष्णौ ॥

महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ।

महेन्द्रतनया । स्त्री॰ सरिद्भेदे ॥

महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ।

महेन्द्रपर्वत । पुं॰ तीर्थविशेषे ॥

महेन्द्रमद्भित् । पु॰ श्रीकृष्णे ॥

महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाफलायाम् । बड़ीमाकाल॰ इ॰ गौ॰ दे॰ भा॰ ॥

महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्त्री । महतीचासाविन्द्राणीचेतिवा ॥

महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य । महेन्द्राद्घाणौचेतिघ ॥

महेन्द्रीयम् । त्रि॰ माहेन्द्रे॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छ ॥

महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे । महदीरणमस्याः ॥ महमुत्सवमीरयतिवा । ईर॰ । ल्यु ॥

महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ इला भूमिः ॥ यद्वा । महति॰ महतेवा । सलिकलीतीलच् । पृषोदरादि ॥ माया॰ ईलाक्रीडावा । परमहेलारतोप्यपारदारिकइतिदमयन्तीकाव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥

महेश । पु॰ शिवे ॥ महेशाज्ञापरोदेव ॥

महेशबंधु । पु॰ श्रीफलवृक्षे । बिल्वे । महेशस्यबन्धुरिव ॥

महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम ॥ महाश्चासावीशिताच । सन्महदितिसमास ॥

महेश्वर । पु॰ शिवे । महादेवे । महेश्वरस्त्र्यम्बकएवनापरइतिरघु ॥ विश्वस्थानाश्चसर्व्वेषामहतामीश्वरः स्वयम् । महेश्वरस्ततःप्रोक्तमृषिभिस्तत्त्वदर्शिभि ॥ महाश्चासावीश्वरश्च । सन्महदितिसमास ॥ त्रि॰ अधीश्वरे ॥

महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । कपिलायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥

महेष्वास । पु॰ हरौ ॥ शिवे ॥ महानवितथइष्वासइषुर्च्चेपोयस्य ॥ त्रि॰ उत्तमधानुष्के ।

महेरण्ड । पु॰ स्थूलैरण्डे ॥

महेला । स्त्री॰ स्थूलैलायाम् ॥

महोक्ष । पु॰ हृष्टवृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेतिसाधु ॥

महोटिका । स्त्री० ) 
महोटी । स्त्री० ) वृहत्याम् ॥

महोत्पलम् । न० पद्मे । नलिने । अरविन्दे ॥ महच्चतत्उत्पलञ्च ॥

महोत्सव । पु० अतिशयितसुखजनककर्मणि ॥ यथा । दुर्गातन्त्रेपाम न्त्रेणकुर्याद्दुर्गामहोत्सवम् । महा-नवम्यामरदिवलिदानन्दपादय ॥

महोत्साह । पुं० राज्याङ्गप्रामराज-पुरुषे ॥ अतिशयोद्यमे ॥ त्रि०अतिशयोत्साहयुक्ते । महोद्यमे ॥ दुःसाध्यकार्य्येपिसाधनपरे ॥ महान् उत्साहोस्य ॥ परदेवतायाम् ॥ जगदुत्पादनाद्यर्थंमुद्युक्तत्वात् ॥

महोदधि । पु० समुद्रे ॥

महोदधिशय । पुं० नारायणे ॥ प्रलयेसर्वभूतानिसंहृत्यैकार्णवजगत् । कृत्वाऽधिशेते ।शीङ्स्वप्ने ।अ ॥

महोदय । पु० कान्यकुब्जदेशे ॥ आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ सदाकृतयुगश्चास्तुसदाचास्तूत्तरायणम् । सदामहोदयश्चास्तुकाश्यांनिवसतांसताम् ॥ महात्मनि । स्वामिनि ॥ दध्यक्तमधुनि ॥ न०पुरविशेषे । कान्यकुब्जे ।गाधिपुरे । कनौज०इतिमहीवाङ्गतिभाषा ॥ महानुदयोवैभवंयस्य०यथवा ॥

महोदया । स्त्री० मेरोरुत्तरवाटाख्योपूमेखलायाउदग्दिशिसोमस्यपुर्या-म् । यथोक्तम्भृगेन्द्रसंहितायाम् । महोदयाचन्द्रमस श्वेतायुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरैर्हिमगिरिप्रभैरिति ॥ नागवल्लायाम् ॥

महोदर । पु० वृहदुदरे ॥ त्रि० तद्वति ॥

महोदरी । स्त्री० रवे सङ्क्रमणविशेषे कुजाहेवरवैयदासङ्क्रमस्यान्महोदर्यसौतस्कराणांसुखाय ॥ अहाश्रतावर्याम् ॥

महोद्यम । त्रि० महोत्साहे । दुःसाध्यकार्य्येपिसाधनपरे ॥ महानुद्यमोऽस्य ॥

महोन्नत । पु० तालागमे । त्रि०महोन्नतिविशिष्टे ॥

महोन्नति । स्त्री० अतिशयवृद्धौ ॥ यथा । भूयात्तेमहदैश्वर्यंप्रभादीनामहोन्नति । अव्याधिनाशरीरेणचिरञ्जीवसुखीभव ॥

महोन्माद । पुं० फलकयाम् । फलु-इ०माधइ०गौ०दे०भा०प्र०मीने ॥

महोपसर्ग । पु० मायादिषु ॥

महोरग । पु० वासुकिसर्पे ॥ वृहत्सर्पे ॥ महांश्चासावुरगश्च ॥ न०तगरमूले ॥

महोल्का । स्त्री० क्रूरग्रहे ॥ उल्काविशेषे ॥ उल्कालक्षणन्तु । वृहच्छिखावसूक्ष्मायारक्तनीलशिखोज्वलापी

कणीषप्रभावो नभश्चानानाविधाश्च ता ॥

महौजा । त्रि० वीर्यवति । महानु भावे ॥ महत्योजोयस्ये तिविग्र- हः ॥

महौषधम् । न० शुण्ठ्याम् ॥ विषाया म् । अतिविषायाम् । अतीस० इ० भा० । लशुने ॥ भूम्याहुल्ये ॥ वा राहीकन्दे ॥ वत्सनाभे । पिप्प- ल्याम् ॥ मुरायाम् ॥ महौषध य- ज्जीवानांतु अविसारकमहत् । आनन्दजनकयच्चतदाद्यातस्वपक याम् ॥ महच्चतत्‌ औषधम् ॥

महौषधि । स्त्री० दूर्वायाम् ॥ लज्जा लुकुपे ॥

महौषधिगण । पु० पृश्निपर्ण्यादिषु ॥ यथा । पृश्निपर्णीश्यामलताभृङ्गरा जशतावरी । गुडूचीसहदेवाचमहौ षधिगण : स्मृत ॥

महौषधी । स्त्री० छिन्नमोचिकायाम् ॥ श्वेतकण्टकार्याम् ॥ कटुकायाम् ॥ अतिविषायाम् ॥

महौषध्यष्टकम् । न० महास्नानीयद्रव्य विशेषे ॥ यथा । सहदेवीतथाव्या घ्रीवलाचातिवलातथा । शङ्खपुष्पी तथासिंहीअष्टमीचसुवर्चला ॥ महौ षध्यष्टकप्रोक्तंमहास्नानेनियोजयेत् ॥

मा । अ० वारणे ॥ विकल्पे ॥

मा । स्त्री० लक्ष्म्याम् ॥ मानायाम् ॥ विद्यायाम् ॥ मागे ॥ मातरि ॥

मानम् । माधातो सम्पदादि त्वात्क्विप् ॥

मासम् । न० पिशिते । तरसे । पल ले । आमिषे । पललो । रक्तजधा तौ । मांस० इ० भा० ॥ मासवा तहरसर्वंच वृष्यंवलपुष्टकृत् । प्री णनंगुरुहृद्यञ्चमधुररसपाकयो . ॥ मांसवर्गोद्विधाज्ञेयोजाङ्गलाऽनूपभे दत. ॥ तत्रसद्योहतादिमांसेषुविशे षउच्यते । यथा । सद्यो हतस्यमांसस्याद्व्याधिघातियथामृ तम् । वयस्थं हृद्यसात्म्यमन्यथा तद्विवर्जयेत् ॥ स्वयंमृतञ्चाबल्य मतीसारकरगुरु ॥ दुर्वामांदोषल मांस वालानांबलदंलघु ॥ त्रिदोष कृद्व्यालजुष्ट शुष्कशूलकर गुरु ॥ विषाम्बुवज्रस्तथैतन् मृत्युदोषक आवहम् ॥ छिन्नमुत्क्लेदजनकाक्षमं वातप्रकोपनम् ॥ तोयपूर्णशिरा आजस्तमसुखविदोषकृत् ॥ स्त्रिष्टे दुपुमान्श्रेष्ठ श्चौचतुष्पदजातिषु । परार्धं लघुपुंसांस्यात्स्त्रीणापूर्वा र्धमादिशेत् ॥ उरसमध्य गुरुप्राय सर्वेषाप्राणिनांस्मृतम् । पक्षीत् स्पादिकक्कानांसदेवलघुकाध्यते ॥ गुरुण्य ङानिसर्वेषागुर्वीग्रीवायप क्षिणाम् । उरस्कन्धोदर मूर्धापाणी पादौकटिस्तथा । पृष्ठत्वगयकृद

-आपिगुरूणीडयथोत्तरम् ॥ लघुवा तहर मास खगानांधान्यचारिणा म्। मत्स्याशिनापित्तकर वातघ्न गुरुकीर्त्तितम् ॥ फलाशिनांश्लेष्म हर लघुरुक्षमुदीरितम्। तू इथ गुरुवातघ्न तं पामिषफलाशिनाम् ॥ तुल्यजातिष्वल्पदेहामहादेहे षुपूजि ताः। अल्पदेहेषुग्रहणन्ते तथैवस्थ् लदेहिन ॥ चेष्टावतांपर मास छ्य रुच्य लघुस्मृतम्। ॥ येमताबि हगायेषदूरावासप्रचारका । तै षाभिष्यन्दिन सर्वं विपरीतम तोन्यथा ॥ जलानूपचरा सर्वं त थास्थलचरास्मृते। गुरुम् क्यागुरुव र तेषामाससुदीरितम् ॥ धान्योत्प त्तिप्रचारोणा लघुस्याल्लघुपक्षिणा म्। यान्य मास वनजमयवानूपज वाबिलोत्थ प्रक्षे त पीत हरितमरुण यावित सूपकारै। तच्च शुल्य सरसमधुरखे दित वह्नित वायस्य- प्रायोयदभिरुचित स्तू यतेतेनतडि॥ अपिच। मांसन्तुत्रिविध ज्ञेय मृदु लकठिनंवनम् ॥ पारावताजचट कामप्रशूकरटिट्टिभा । क्षुद्रमत् स्यादिका सर्वं मांसे षुमृदुला. स्मृता ॥ मृगरोहितकाद्याश्चमत् स्या ममकिमस्वरा। एतेकठि नमांसा स्मृ. पक्षिणोजलचारि ण। गजकुम्भीरखड्गाद्या सग



स्थावर्काराद्य। गोधागोश्वालुला याद्या घनमासा प्रकीर्त्तिता ॥एकत्र सर्वमासानिविरुद्धान्यन्ये परस्परम्॥ वैद्यशास्त्रोक्तविधिनामासस्योक्तागु- णाहमे। मनूक्तविधिनावक्ष्ये विधि भक्षणवर्जने ॥ प्रोक्षितभक्षयेन्मास आह्मणानाञ्चकाम्यया। यथाविधि नियुक्तस्तुप्राणानामेवचात्यये ॥ प्रा णस्यान्नमिदन्सर्वंप्रजापतिरकल्पयत्। स्थावरजङ्गमञ्चैवसर्वंप्राणस्यभोजन म् ॥ चराणामन्नमचराद्ष्ट्रिणाम प्यदष्ट्रिण। अहस्ताश्चसहस्ताना- शूराणाञ्चैवभीरव ॥ नात्तादुष्य त्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि। धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्ता रएवच ॥ यज्ञायजग्धिर्मासस्येत्ये षदैवोविधि स्मृत। अतोन्यथा प्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥ क्री त्वास्वयवाप्युत्पाद्यपरोपकृतमेववा। देवान्पितृ श्चार्चयित्वाखादन्मासन दुष्यति ॥ नाद्यादविधिनामासवि धिज्ञोऽनापदिद्विज। जग्ध्वाह्यवि धिनामाससप्रेत्यतैरद्यतेऽवश ॥ नतादृशभवत्येनोमृगहन्तुर्धनार्थिन। यादृशभवतिप्रेत्यवृथामासानि- खादत। नियुक्तस्तुयथान्यायये मासनात्तिमानव। सप्रेत्यपशुता यातिसम्भवानेकविंशतिम् ॥ असं स्कृतान्पशून्मन्त्रै नाद्याद्विप्र क

दाचन । अन्वैस्तुसक्षतानद्याच्छा
ख्वतविधिमास्थित ॥ कुर्याद्घृतप
शुसङ्गे कुर्यात्पिष्टपशुतथा । नत्वे
वतुवृथाहन्तु पशुमिच्छेत्कदाचन-
॥ यावन्तिपशुरोमाणितावत्कृत्वोह
मारणम् । वृथापशुघ्न प्राप्नोति
प्रेत्यजन्मनिजन्मनि ॥ यज्ञार्थंप
शव सृष्टा स्वयमेवस्वयम्भुवा ।
यज्ञोऽस्यभूत्यै सर्वस्यतस्माद्यज्ञे वधो
ऽवध ॥ ओषध्य पशवोवृक्षास्ति
र्यञ्च पक्षिणस्तथा । यज्ञार्थंनिधन
प्राप्ता प्राप्नुवन्त्युच्छ्रृती पुन ॥
मधुपर्केचयज्ञे चपितृदैवतकर्मणि ।
अत्रैवपशवोहिंस्यान्नान्यत्रे त्यब्रवी
न्मनु ॥ एष्वर्थेषुपशून्हिंसन्वेद
तत्वार्थवद्द्विज । आत्मानञ्चपशूञ्चै
वगमयत्युत्तमागतिम् ॥ गृहेगुरा-
वरण्येवानिवसन्नात्मवान्द्विज ।
नवेदविहिता हिंसामापद्यपिसमा-
चरेत् ॥ यावेदविहिताहिंसानि
यतास्मिञ्चराचरे । अहिंसामेवतां
विद्याद्वेदाद्धर्मोहिनिर्बभौ ॥ योऽहिं
सकानिभूतानिहिनस्त्यात्मसुखेच्छ
या । सजीवञ्चमृतश्चैवनक्कचित्सु
खमेधते ॥ योबन्धनवधक्लेशान्प्रा
णिनानचिकीर्षति । ससर्वस्यहित
प्रेप्सु सुखमत्यन्तमश्नुते यद्ध्या
यतियत्कुरुतेधृतिंबध्नातियत्रच ।
तदवाप्नोत्ययत्नेनयोहिनस्तिनकि



ञ्चन ॥ नाकृत्वाप्राणिनांहिंसामांस
मुत्पद्यतेक्वचित् । नचप्राणिवध
स्वर्ग्यस्तस्मान्मांसंविवर्जयेत् ॥ स
समुत्पत्तिञ्चमांसस्य वधबन्धौचदेहि
नाम् । प्रसमीक्ष्यनिवर्त्तेतसर्वमां
सस्यभक्षणात् ॥ नभक्षयतियोमां-
सविधिंहित्वापिशाचवत् । सलोके
प्रियतांयातिव्याधिभिश्चनपीड्यते॥
अनुमन्ताविशसितानिहन्ताक्रयवि
क्रयी । संस्कर्त्ताचोपहर्त्ताचखाद-
कश्चेतिघातका ॥ स्वमांस परमां
सेनयोवर्द्धयितुमिच्छति । अनभ्यर्च्य
पितॄन्देवान्ततोन्योनास्त्यपुण्यकृ
त् ॥ वर्षेवर्षेश्वमेधेनयोयजेतशतस
मा । मांसानिचनखादेद्यस्तयो
पुण्यफलसमम् ॥ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानाञ्चभोजनै । नतत्-
फलमवाप्नोतियन्मांसपरिवर्जना
त् ॥ ५४ ॥ मांसभक्षयितामुत्रयस्य
मांसमिहाद्म्यहम् । एतन्मांसस्य
मांसत्व प्रवदन्तिमनीषिण ॥ न-
मांसभक्षणेदोषोनमद्येनचमैथुने ।
प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा-
फला ॥ अपिच । श्रीमहानिर्वाणत
न्त्रे । मांसन्तुत्रिविधंप्रोक्तं जलभूच
रखेचरम् । यस्मात्तस्मात्समानी
तंयेनकेनविघातितम् ॥ तत्सर्वं दे-
वताप्रीत्यै भवेदेवनसंशय । साध
कीच्छाबलवतीदेयेवस्तुनिदैवते ॥ य

द्राद्रात्मप्रियद्रव्यतत्तद्दिष्टायकल्पयेत ।। बलिदानविधौदेवविहित पुरुष पशु । स्त्रीपशुर्नचहन्तव्यस्तत्रशाभवशासनात् ॥ मन्यतेदेवादिप्रीत्यर्थम् । मनस्त्राणे । म नेदोंर्वधेतिस ॥

मांस । पु॰ काले । कीटे ॥

मांसकारि । न॰ रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री॰ मांसरोहिणीविशेषे । मांसाम् । सुलोमायाम् ॥

मांसजम् । न॰ मेदसि ॥

मांसतेज । न॰ मेदसि ॥

मांसदलन । पु॰ ग्रीष्मद्रवे ॥

मांसद्रावी । पु॰ अम्लवेतसे

मांसपचनम । न॰ मांसपाके ॥

मांसपेशी । स्त्री॰ गर्भस्थावयवविशेषे॥ यथा । वुद्वुद सप्तरात्रंचमांसपेशी भवेत्तत । द्विसप्ताहात्भवेत्पेशी रक्तमांसचिताद्दढा ॥ बीजस्येवाङ्कुरः पेश्य पञ्चविंशतिरात्रत ॥

मांसप्रलेह । पु॰ प्रलेहविशेषे ॥ पथ्यप्रलेहम् ॥

मांसफला । स्त्री॰ वार्त्ताक्याम् ॥

मांसभक्ष । त्रि॰ मांसभक्षणकर्त्तरि ।

मांसमाषा स्त्री॰ माषपर्ण्याम् ॥

मांसरस पु॰ औल॰ रसा॰ इति ख्यातेमांसस्यजले ॥ सिद्धमांसरसो रुच्य श्रमश्वासक्षयापह । प्रीणनोवातपित्तघ्न : क्षीणानामल्परेतसाम् ॥ विश्लिष्टभग्नसन्धीनाशुष्कानाशुद्धकाङ्क्षिणाम् । स्मृत्योजोवलहीनानाज्वरक्षीणक्षतोरसाम् ॥ शस्यतेस्वरहीनानाद्दष्ट्यायु श्रवणार्थिनाम् ॥

मांसरोहिणी । स्त्री॰ सुगन्धिद्रव्यविशेषे । चर्म्मकषायाम् । चर्मकषायाम् । विकषायाम् ॥ स्यान्मांसरोहिणीवृष्यासरादोषत्रयापहा ॥

मांसलम् न॰ काव्यस्यगौडीरीत्यन्तर्गतस्यौजोगुणस्याङ्गविशेषे॥ यथा । ओज समासभूयस्त्व मांसलपदडम्बरम् ॥ त्रि॰ असले । बलवति ॥ स्थूले ॥ यथा । निसःखक्करेखास्तुनिंद्रव्यास्विवुद्धे क्षणे । मांसलेखधमोपेताश्चवक्त्रे रधनेन्दपा ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पु॰ माषे ॥

मांसलफला । स्त्री॰ वृन्ताक्याम् ॥

मांसविक्रयी । त्रि॰ वैतसिके । कौटिके ॥ सद्यदपिमांसविक्रयकारिणि ॥ सद्य पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध । त्रि॰ मांसखण्डने ॥ मांसस्यव्यधनम् ॥ व्यधजपोरनुपसर्गे॰ इत्यप् ॥

मांसशृङ्गाटकम् । न॰ मांसप्रकारवि

श्रंपि । मासकाचिखूट० इतिभाषा ॥ शुष्कमासतनूकृत्यकर्त्तितखेदितं जले । लवङ्गहिङ्गु लवणमरिचार्द्र-कसयुतम् ॥ एलाजीरकधान्याकनि म्बूरससमन्वितम् । घृतेसुगन्धेतत्त् ष्टपूरणप्रोच्यतेबुधै ॥ शृङ्गाटकसमितयाकृतपूरणपूरितम् । पुनसर्पिषसम्भृष्ट मासश्टङ्गाटकवदेत् ॥ मांसशृङ्गाटकरुच्यवृष्य बलकृद्गुरु ॥ वातपित्तहर हृष्यकफघ्न वीर्यवर्द्धनम्

मांससार । पु० मेदसि ॥ मांसस्य सार ॥

मासस्नेह । पुं० मेदसि ॥

मांसहासा । स्त्री० चर्मणि ॥

मासिक । त्रि० मासविक्रयजीविनि । वैत सि०॥ मास पण्यमस्य । तदस्यपण्यमितिठक् ॥ यद्वा । मास नियुक्तदीयतेऽस्मै । श्रावणामांसौदनादितिठिठन् । टित्वान्ङीप् ॥ इकारउच्चारणार्थं ॥

मासिका । स्त्री० मांस्याम् ॥ मन्यते । मनज्ञाने । मनेर्दीर्घश्चेतिस । गौरादि । स्वार्थेकन् ॥

मासिनी । स्त्री० जटामांस्याम् ॥

मांसी । स्त्री० ककोल्याम् ॥ मांसच्छदायाम् ॥ तपस्विन्याम् । जटामांस्याम् ॥ मांसीतिक्ताकषायाचमे-ध्याकांतिबलप्रदा । स्वादीहिमाचि दोषास्रदाहवीसर्पकुष्ठनुत ॥ मन्यते । मन० । मनेर्दीर्घश्चेतिस । गौरादि ॥

मासिष्टा । स्त्री० पक्षिप्रभेदे । वल्गुलायाम् । दिवाधायाम् वादुड इ०भा०॥

मासौदनम् । न० मासस युक्तौदने । पलौदने ॥

मासौदनिक । त्रि० मांसौदनार्हे ॥ मांसौदननियुक्तं दीयतेऽस्मै । श्रामामांसौदनाट्टिठन् । टोङीवर्थ । इकारउच्चारणार्थ ॥

माख्यादि । पु० जटामांस्यादिसमागणे ॥ जटामासीनखपर्णीलवङ्गतगररसः । शिलयागन्धपाषाण सप्तमास्यादिकाक्षमी ॥

माकन्द । पु० सहकारे ॥

माकन्दी । स्त्री० आमलकीफले ॥ नगरविशेषे ॥ बहुमूल्याम् । मादन्याम् । गन्धमूलिकायाम् । माद्राणी०मागनी०इ०भा० ॥ पीतचन्दने ॥

माकरी । स्त्री० आधशुक्लसप्तम्याम् ॥ यद्यज्जन्मकृतपापमयासप्तसुजन्मसु । तन्मरोकच्चशोकच्चमाकरीहन्तु सप्तमीतिपठित्वास्त्रायात् ॥ एषसप्तमीतिनामाक्षरम् ॥ रौकचिद्रम् ॥

माकिम् । अ०)

माकिर् । अ०)वर्ज्जने ॥

मागध | मागधी

माक्षीम् । अ० वर्त्मनि ॥
माकोट । पु मुकुटेश्वर्य्याश्चाणी ॥
माकोटे मुकुटेश्वरीतिदेवीगीता॥
माक्षिकम् । न० मधुनि ॥ मक्षिकाभि कृतम् । तस्यायामित्यण् ॥
तैलवर्णमधुनि ॥ मक्षिका . पिङ्गवर्णास्तु महत्योमधुमक्षिका । ताभि कृततैलवर्णं माक्षिकपरिकीर्त्तितम् ॥ माक्षिकमधुपुश्रेष्ठ नेत्राम यहरलघु । कामलार्शं क्षतश्वास कासक्षयविनाशनम् ॥ धातुमाक्षिके । स्वर्णमाक्षिके ॥ तापिच्छे । पीतमाक्षिके माक्षिकद्विविध प्रोक्तमेमाख्तारमाक्षिकम् । भिन्नवर्णं विशेषत्वाद्रसवीर्यादिक पृथक् ॥ तारपादादिकैतारमाक्षिक सुप्रशस्यते । देहेहेमाभकंभस्त रोगहृद्दलपुष्टिदम् ॥
माक्षिकजम् । न० सिक्थके ॥
माक्षिकधातु । पुं० माक्षिके । स्वर्णमाक्षिके ॥
माक्षिकफल । पु० मधुनालिकेरके ॥
माक्षिकशर्करा । स्त्री० सिताखण्डे ॥
माक्षिकाश्रयम । न० सिक्थके ॥
माचीकम् । न० मधुनि ॥
माचीकशर्करा । स्त्री० सिताखण्डे ॥
मागध । पुं० वैश्यात : क्षत्रियायामुत्पन्ने वर्णसङ्करजातिविशेषे । भाट
स्तुतिख्याते ॥ शुक्लजीरके ॥ जरासन्धनृपे ॥ कीकटदेशान्तर्वर्त्ति देशविशेषे । मगधे ॥ पाणिखनके ॥ वंशक्रमेणमहत्त्ववेदिनिराजादिस्तुतिकारिणि । मधुके । वन्दिनि । स्तुतिपाठके । तस्योत्पत्तिर्विष्णुपुराणे यथा । ततोऽस्यदक्षिणहस्त मन्युस्ते तदाद्विजा । मथ्यमानेच तत्राभूत्पृथर्वैण्य प्रतापवान् ॥ त स्यैवेजातमात्रस्ययज्ञे पैतामहेशुभे । सूत सूत्यासमुत्पन्न सौत्येऽह निमहामते ॥ तस्मिन्नेवमहायज्ञे ज ज्ञे प्राज्ञोथमागध । प्रोक्तौतदामुनिवरै स्तावुभौसूतमागधौ ॥ स्तूय तामेषनृपति पृथुर्वैण्य प्रतापवान् ॥ सूत्यामितिसूति ० अभिषूति ० अभिषूयतेकण्डनेत्रा- सोऽस्यामितिसूति सोमाभिषवभूमिरस्याम् । सौत्येऽहनि० तस्मिन्नेवदिने० इत्यर्थ ॥ व श्यपरम्परा प्रशंसकोह्ययम् ॥ मगध्यतियाचते । मगधपरिवेष्टने कण्ड्वादियक्‌ अच् । यस्यहलइतियलोप । प्रज्ञाद्यण् ॥ मागधावंशशंसका । वशोदोरयेनयेयाचन्ते ० तेमागधाइत्यर्थ ॥ त्रि० मगधोद्भवे ॥
मागधादेवी । स्त्री० राधिकायाम ॥
मागधी । स्त्री० कणायाम् । पिप्पल्याम् ॥ यूथ्याम् ॥ भाषाप्रभेदे ॥

उक्तादिभरतसूत्रे । भिन्नुकन्नपया करान्नसान्न पुरावासिन्चेटकादीनां मागधीति मगधे •देशेभवा । तत्रभवइत्यण् ॥

मागमा । स्त्री• कर्कव्या ॥

माघ । पु॰ मासविशेषे । तपसि ॥ ग्रचजातस्फलम् । यथा । विद्याविनीतस्वकुलप्रधानसदासदाचारयुत प्रवीण । योगानुरक्तोविषयेपुसक्तो माघेयमासे मघवानिवेश इति॥ माघीपौर्णमास्यस्मिनपौषमासो स्यण् ।। श्रीदत्तकसूनौशिशुपाल वधमहाकाव्यकर्त्तरि ॥ तस्यनाम्ने बख्याते महाकाव्ये ॥ यथा। पुष्पेषुजातीनगरेषुकाशी नारीषुरम्भा पुरुषेषुविष्णु । नदीषुगङ्गानृपतीचराम काव्येषुमाघ कवि कालिदास ॥ इत्याधुनिक कश्चित्

माघवती । स्त्री• पूर्वदिशि ॥

माघवनम् त्रि॰ इन्द्रसम्बन्धिनि ।। मघवतइदम् । अण् ॥

माघी । स्त्री• तपोमासस्यपूर्णिमायाम् ।। मघयायुक्तापौर्णमासी । नक्षत्रेणस्यण् । ततोङीप् ॥

माघोनी स्त्री• पूर्व्वदिशि ॥

माघ्यम् न॰ कुन्दपुष्पे ॥ माघेसाधु । तत्रसाधुरितियत् ॥ माघेभवम् । दिगादित्वाद्यत् ॥

माङ् । अ॰ निषेधे ॥ आशङ्कायाम्॥

माङ्गलिक । पु॰ प्रणवे अथशब्दे ॥ प्रणवश्चाथशब्दश्चद्वावेतौब्रह्मण पुरा । कण्ठं भित्त्वाविनिर्यातौतस्मान्माङ्गलिकावुभौ ॥ मङ्गलायहितमार्थे तूर्यादिवाद्ये ॥ अर्थाभीष्टार्थसिद्धिर्मङ्गलम् । मङ्गलप्रयोजनमस्य । प्रयोजनमितिठक् ॥ यथा माङ्गलिकआचार्य्य इति ॥

माङ्गल्यम् । न॰ मङ्गलक्रियायाम् ॥ मङ्गलायहिते ।। यथा । माङ्गल्ये षुविवाहेषुकन्यास वरणेषुच । दशमासा प्रशस्यन्ते चैत्रपौषविवर्जिता ॥ इतिराजमार्त्तण्ड ॥ मङ्गलस्यभाव । भावेष्यञ् ॥

माङ्गल्यार्हा । स्त्री• त्रायमाणायाल ताया ॥

माच । पु॰ पथि ॥

माचल । पु॰ बन्दिचौरे । रुजि ॥ ग्राहे ॥

माचिका । स्त्री• माक्षिकायाम ॥ अम्बष्ठायाम् ।। मोइया• इ॰ पश्चिमदेशप्रसिद्धायामौषधौ ॥ माचिकाक्षारसे पाकिकषायाशीतलालघु । पक्कातीसारपित्तास्रकफकण्ठाम यापहा ॥

माचिरम् । अ॰ शीघ्रे ॥

माचीपत्रम् । न॰ सुरपर्णे ॥

माजल । पु॰ चाषपक्षिणि ॥

माञ्जिष्ठम् । न॰ लोहितवर्णे ॥ त्रि॰ तद्वति ॥ मञ्जिष्ठयारक्तम् । तेनरक्त रागादित्यण् ॥

माटामक । पु॰ वृक्षविशेषे ॥

माठार । पु॰ व्यासो पार्श्विके । सूर्यानुगे ॥ व्यासे विप्रे ॥ मठन्त्यनेन । मठमदनिवासयो । पुंसीतिघ । मठ राति । रा॰ । क । मठस्यापत्यम् । शिवादित्वात् ॥ मगादित्वात् माठर्य ॥

माड । पु॰ वृक्षविशेषे । ध्वजवृक्षे । वितानके । मद्यद्रुमे । माडवेतौ॰ द्रू॰ कोंकणे प्रसिद्धे ॥

माडक । पु॰ वर्ण सङ्करजातिविशेषे यथा । निटखो वरकन्यायाजनया माणवकुमाभवान् । मात्र मगधमाडकस्य भद्र कोल कलन्दर ॥

माडुक । पु॰ माडुकिके ॥ मडुकझर्झरादन्यतरस्यामित्यण् ॥ मडुकवादनशिल्पमस्य । मडुकझर्झराद्-

माडुकिक । पु॰ माडुके ॥ मडुकवादनशिल्पमस्य मडुकझर्झरादितिपक्षे ठक् ॥

माढि । स्त्री॰ पत्रभङ्गे ॥ पत्रशिरायाम् ॥ दैन्यप्रकाशने ॥ देशविशेषे ॥ अर्चायाम् ॥ मडगमनयाचा । मड॰ । क्तिन् । ढत्वष्टुत्वढलोप दीर्घा ॥

माढी । स्त्री॰ दन्तशिरायाम् ॥

माणक । पु॰ वृक्षविशेषे । स्थलपद्मे । वृहच्छदे ॥ न॰कन्दविशेषे । मानकचू॰दू॰गौ॰दे॰भा॰ ॥

माणव । पु॰ बालके ॥ अपत्येकुत्सितेमूढे मनोरौत्सर्गिकः स्मृत । नकारस्यचमूर्द्धन्यस्तेनसिद्ध्यतिमाणव ॥ मनोरयम् । तस्य दमित्यण् । ब्राह्मणमाणवेतिनिपातनाण्णत्वम् ॥ षोडशयष्टिकहारे ॥

माणवक । पु॰ विंशतियष्टिकाभिनिर्मितेहारविशेषे ॥ बालके । षोडशवर्षपर्यन्तप्रथमवयस्के ॥ कुपुरुषे ॥ माणवेबाल ॰ सबुव । दूवैप्रतिक्तताविति कन् ॥ यथा । अल्पोमाणव ॥ अल्पद्युतिक ॥ न॰अनुष्टुप्प्रभेदे ॥ माणवकगामामाणवकम् ॥ यथा । अब्रह्मचूड चपलैर्व्रतकुले केलिपरम् । ध्यायत्र खिलग्रसुख नन्दसुत माणवकम् ॥

माणवकक्रीडम् । न॰ अनुष्टुप्छन्दो विशेषे । माणवके ॥ भादिगणक-र्णधर सान्तमिद वृत्तवरम् । पन्नगराजेनकृत माणवकक्रीडमिदम् ॥ यथा । कोकवधूशोकहर पद्मवनीबोधकरम् । गाढतमोनाशकर मौमिलरासुख्यकरम् ॥

माणवीनम् । त्रि॰ माणवसम्बन्धिनि ॥ माणवायहिते ॥ माणवचरकाभ्यां-

खञ् ॥

माणव्यम् । न० माणवबृन्दे ॥ माणवानासमूह । ब्राह्मणमाणववाडवाद्यन् ॥ माणवस्त्वे ॥ माणवस्यकर्म भावोवा । ब्राह्मणादित्वात्ष्यञ् ॥

माणिका । स्त्री० अष्टपलपरिमाणे ॥

माणिक्यम् । न० रत्नविशेषे । शोणरत्ने । रत्नराजि । रविरत्नके । पद्मरागे । कुरविन्दे । माणिक०माणक०इतिभाषा ॥ तस्यलक्षण यथा स्निग्ध गुरुगात्रयुत दीप्त स्वच्छ सुरङ्गद समाङ्गम् । इतिजाल्य माणिक्यकल्याण धारणात्कुरुते ॥ तस्यदोषायथा । द्विच्छायमभ्रपिहित कर्कशमार्करिल भिन्नधूम्रम् । विरूप रागविमल लघुमाणिक्य नधारयेद्धीमान् ॥ तस्यचतुर्विधाजातिर्यथा तद्रक्त यदिपद्मरागमथसत्पीतातिरक्त द्विधाजानीयात्कुरुविन्दकयद्रुण स्यादेषसौगन्धिकम् । तन्नील यदिनीलगन्धिकमितिज्ञेय चतुर्धाबुधैर्माणिक्यकषघर्षण्यविकलरागैर्वजात्यलघु ॥ विशेषोऽन्यच युक्तिकल्पतरौद्रष्टव्य ॥ मणिकमेव । चतुर्वर्णादीनास्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री० ज्येष्ठाम् । मुसल्याम । गृहगोधायाम् । पलल्या

म् ॥

माणिमन्थम् । न० सैन्धवलवणे ॥ मणिमन्थाख्ये पर्वतेभवम् । तत्रभव इ० अण् ॥

माण्डलिक । पु० ग्रामस्यराज्ञि ॥ मण्डलस्यव । अङ्गुल्यादित्वाठक् ॥

माण्डूक्यम् । न० उपनिषद्विशेषे ॥

मातङ्ग । पु० श्वपचे । गजे । हस्तिनि ॥ अर्हदुपासकविशेषे ॥ मतङ्गस्यायम् । तस्येदमित्यण् ॥ मतङ्गस्यापत्यम । शिवाद्यण्वा ॥

मातङ्गनक्र । पु० मातङ्गाकारेग्राहे ॥

मातङ्गमकर । पु० महामत्स्यप्रभेदे । मातङ्गाकारेनक्रे ॥

मातङ्गी । स्त्री० महाविद्याविशेषे ॥ मतङ्गस्यमुनेः कन्यामातङ्गीसाप्रकीर्तिता ॥

मातरपितरौ । पु० द्विवचनान्तोऽयम् । सहोक्त्यामातापित्रो ॥ माताच पिताच । मातरपितरावुदीचामितिपूर्वपदे० ऋकारस्यारङादेशोनिपातनात् ॥

मातरि । अ० अन्तरीक्षे ॥ सप्तम्यन्तप्रतिरूपकमव्ययम् ॥

मातरिश्वा । पु० वायौ । सर्वप्राणभृतांक्रियाहेतुभूते ॥ मातरि० अन्तरिक्षेश्वयतिवर्द्धतेगच्छति । टुओश्वि गतिवृद्ध्योः । यद्वा । मातरि-

ञ्जनन्याम् ० ञ्जयतिवर्द्धते० सप्तस-
प्तकत्वात्० गर्भस्थएवायसर्न्न योन
पञ्चाग्न्राग ञ्जतञ्चस्य पाव्यायते ।
ञ्जन्न घन्निनितिसूत्रे च० कनिप्रत्ययोधा
तोरिकारलोपश्चनिपातनात्० सप्त
म्याश्चलुक्च ॥ मातरीतिसप्तम्यन्त
प्रतिरूपकमव्ययवा ।

मातलि: । पु० इन्द्रस्यसारथौ ॥ मत
लाति । चातोनुपेतिक । मतल
स्यापत्यम । चतइञ् ॥

मातापितरौ । पु० द्विवचनान्तोय
म्०० पित्रो । मातरपित्रो । ॥
माताचपिताच । चानङ्ऋतोद्वन्
द्वे ॥ अभ्यर्हितत्वात्पूर्वनिपात ।
चतुर्दशगुणमातागौरवेणातिरिच्य
ते ॥

मातापुरम् । न० सह्याद्रौरेणुकाधिष्ठि
तेचम्बिकास्थाने ॥

मातामह । पु० मातु पितरि ॥
मातु पिता । मातृपितृभ्यापित-
रिडामहच् ॥

मातामही । स्त्री० मातुर्जनन्याम् ॥ मा
तुर्माता । मातरिषिच्चेतिडामहच् ।
षित्त्वान्ङीष् ॥

माति । स्त्री० मानि ॥ अवच्छेदे ॥
मानम् । माङ्० । क्तिन् ॥

मातुल । पुं० मातुर्भ्रातरि । पितृ-
व्यादि । मातुर्भ्राता । पितृव्यमातु-
लेतिनिपातनात्० मातुर्डुलच् ।

औषधिप्रभेदे ॥ मदनद्रुमे ॥ सर्पविशे
षे ॥ धूस्तूरे ॥ मासि० नास्तितुला
यस्य ॥ मा० भ्री तुलाऽस्येतिवा०
कनकनामकत्वात् ॥

मातुलक । पुं० धूस्तूरवृक्षे ।

मातुलपुत्रक । पुं० धतूरस्यफले ॥
मातुलस्यपुत्रएव । कन् ॥ मातुल
स्यसुते ॥

मातुला । स्त्री० मातुलान्याम् ॥

मातुलानी । स्त्री० मातुलस्यस्त्रिया-
म् ॥ मातुलस्य स्त्री । इन्द्रवरुण-
भवादिनामातुलशब्दात्पुयोगे० मा
तुलोपाध्याययोरानुक्० ङीष्च ॥
कलाये ॥ भगायाम् ॥ मायास्तु
ला० मातुलामानयति । अनप्राय
नेगर्भोवा । कर्मण्यण् । ङीप् ॥
मातुलस्यधत्तूरस्यस्त्रीववा । पूर्व
वम्ङीषानुकौ ॥ शणे ॥ प्रियङ्
गुवृक्षे ॥

मातुलाहि । पु० चित्रसर्पे । मातु
धाने ॥ मातुलयति । मूलविभुजा
दित्वात्क । मातुलश्चासावहि-
श्च । मालुयासाप० फेयुयाटी० इ-
तिचयस्गौडदेशेप्रसिद्धि । । अय
खट्वाकृतिरायतदेहोदीर्घलाङ्गूलश्च-
तुष्पादितिकेचित् ॥

मातुली । स्त्री० मातुलान्याम् ॥ मातु
लस्यस्त्री । मातुलोपाध्याययोरानु
म्वेत्यानुगागमाभावे० इन्द्रवरुण

तिक्तीषु ॥ भल्लायाम् ॥

मातुलुङ्ग । पु॰ बीजपूरे । क्षोलङ्गे । टावालेबुडु॰ गौ॰ दे॰ भाषा ॥ मिमाक्ष्यरुचिम् । मीञ्हिंसायाम् । बाहुलकात्तुन् । लुङ्ग्यते । लुगिर्भासार्थं । घञ् । चजोरिति कुत्वम् । न्यङ्क्वादित्वाद्वा । मातु चासौलुङ्गश्च ॥

मातुलुङ्गक । पु॰ क्षोलङ्गवृक्षे । फलपूरे । बीजपूरे । रुचिके ॥ स्वार्थेकन् ॥

मातुलुङ्गा । स्त्री॰ मधुकुक्कुट्याम् ॥ यथा । मातुलुङ्गासुगन्धान्यागिरि आपूतिपुष्पिका । भव्यस्वादेवदूतीच सा क्षेपिन्यमधुकुक्कुटी ॥ इतिरत्नमाला । मखुर॰ इ॰ मद्र॰ इ॰ गौ॰ देशभाषा॰ ॥

मातुलुङ्गिका । स्त्री॰ वनबीजपूरे ॥

मातुलेय । पु॰ स्त्री॰ मातुलस्यापत्ये । शुभ्रादित्वात् ढक् ॥

माता । त्रि॰ प्रस्थादिनाधान्यादिमातरि ॥ मिनोति । डुमिञ्॰ तृच् पु॰ साधिष्ठानबुद्धिस्थचिदाभासरूपेप्रमातरि ॥

माता । स्त्री॰ जनयित्र्याम् । प्रस्वाम् । जनन्याम । सवित्र्याम । मा॰ इ॰ भाषा ॥ घापदिमातेवचरणम ॥ षोडशमातारामातरो यथा । स्तनदात्रीगर्भधात्रीभक्तदात्रीगुरुप्रिया । अभीष्टदेवपत्नीचपितुः पत्नीचकन्यका ॥ सगर्भजायाभगिनीपुत्रपत्नीप्रियाप्रसूः । मातुर्मातापितुर्मातासोदरस्यप्रिया तथा ॥ मातुः पितुश्चभगिनीमातुलानी तथैव च । जनानांवेदविहितामातरः षोडशस्मृता ॥ तस्यांगौरवं यथा । अन्नदोजन्मदानत्वात्पालनाच्च पितास्मृतः । गरीयान्जन्मदातुश्च योऽन्नदातापितामुने ॥ विनान्नं ध्वस्तदेहोनरस्यपितुरन्नदः । तयोः शतगुणं मातापूज्यामान्या च वन्दिता ॥ गर्भधारणपोषाभ्यां साचताभ्यांगरीयसी । इतिब्र॰ वै॰ पु॰ । अत्रमनुर्यथा । उपाध्याया न्दशाचार्यआचार्याणांशतं पिता । सहस्रंतुपितृन्मातागौरवेणातिरिच्यत इति ॥ नपितुर्वचनं कार्यं यथा । मातुः सुतेनवै । पिताच पतितस्त्याज्योनमातासत्सुतैनवै ॥ गर्भधारणपोषाभ्यांतेनमातागरीयसी । इत्यविप्राङ्उपाध्यायोगौरवेणातिरिच्यते ॥ तेभ्यः पितादशभ्यश्च मातापिच गरीयसी । मातृतोन्योनदेवोस्तितस्मात्पूज्यासदासुतैः ॥ मातुश्चवचितं किञ्चित्कुरुतेभक्तिः प्रमान् । तद्धर्मं विविधानीयादेवधर्मविदोविदुः ॥ पितुर्भगिन्यांमातुश्च ज्यायस्यांचस्वसर्यपि

मातृवत्त्वत्पित्रमातिष्ठे नृमातातांभ्यो गरीयसीतिमनु । त्वमाद्येजगतां मातापिताब्रह्मपरात्परम् । युव-योः प्रीणनंयस्मात्तस्मात्किंपुण्यातप ॥ स्वभावतोभवेन्माता-पुत्रे तिकरुणावती। तेनभक्तोऽस्मताच्यान्तुवक्तव्य किंतत परम् । धिगस्तुजन्मतेषांवैकृतघ्नानान्तु पापि-नाम् । येसर्वंमातरदेवींस्वोपास्या-मभजन्तिवे ॥ मधिवोपासनानि-त्यानविष्णूपासनातथा । नित्योपास्ति पुरादेव्यानित्याश्रुत्ये वचोदिता ॥ किमयावत्तुवक्तव्यंस्थानेसंश-यवर्त्तिते । सेवनीयापदाम्भोजभगवत्यानिरन्तरम् ॥ गवि ॥ भूमौ ॥ दुर्गायाम् ॥ लक्ष्म्याम् । रेवत्याम् ॥ आखुकर्ण्याम् ॥ इन्द्रवारुण्याम् ॥ मृत्राश्रावण्याम् ॥ जटामांस्याम् ॥ गौर्यादिषु ॥ यथा । गौरीपद्माशचीमेधासावित्रीविजयाज-या । देवसेनास्वधास्वाहाशान्ति पुष्टिधृ ति क्षमा । आत्मनोदेवता-चैवतथैवकुलदेवता ॥ ब्राह्म्यादिषु । यथा । ब्राह्मीमाहेश्वरीचैन्द्रीवारा-हीवैष्णवीतथा । कौमारीचैवचामुण्डाचर्चिकेत्यष्टमातर ॥ सप्तमातरोयथा । ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा । वाराहीचतथेन्द्रा-णीचामुण्डासप्तमातर . ॥ मान्य

ते॰ पूज्यन्ते लोकमातृत्वादितिमा-तर । मानपूजायाम् । नप्तृने-ष्टृ॰ इत्यायुणादिसूत्रे चनिपाति-त ॥ मान्तिशिवपरिवारत्वेनस-माविशन्तीतिवा ॥ मातिगर्भोऽस्यांवा ॥ विभूतौ ॥

मातृकम् । त्रि॰ मातुरागते ॥ तत-आगतइत्यधिकारे॰ ऋतठञ् ॥

मातृका । स्त्री॰ धातृकायाम् । उप-मातरि ॥ मातरि । जनन्याम् ॥ देवीप्रभेदे ॥ वर्णमालायाम् । आदिवान्तवर्णे ॥ करणे ॥ स्वरे ॥ ई-श्वर्याम् । गृहावरे । मातेव । स्वार्थे तद्धित ॥

मातृकेशट । पु॰ मातुले ॥

मातृतुल्या । स्त्री॰ । मातु समानासु । तायथा । मातृष्वसामातुलानीपितृव्यस्त्रीपितृष्वसा । श्वश्रू पूर्वजपत्नीचमातृतुल्या प्रकीर्त्तिता ॥ मात्रातुल्या ॥ मातृशब्दसम्भाषयामातृतुल्यस्त्वयथा । मातरित्येवशब्देनयाञ्चसम्भाषतेनर सा मातृतुल्यासत्येनधर्म्म . साध्वी-सतामपि ॥

मातृनन्दन :। पुं॰ कार्त्तिकेये । म-हासेने ॥

मातृबान्धव । पुं॰ मातुर्मात्रादिषु ॥ मातुर्मातापिताभ्रातामातुर्भ्रातु . सुतास्तथा । मातु पितु. सोदरा

स्त्रियमिदंयामातृवान्धवा

मातृभोगीण । त्रि० मातुर्हिते ॥ मातुर्भोग शरीरम् ॰ तस्मै हित । आत्मविश्वजनेत्यादिनाख ॥

मातृमुख । त्रि० जडे ॥ इतिचिका गडशेष ॥

मातृयोग । पुं० यात्रायोगान्तरे ॥ यथा । अधिमात्रांशगेसौम्येसितेवाप्यसुरार्चिते । लग्नगेमातृयोगोयस्तूपासम्भिन्नतत्सदा ॥

मातृवाहिनी । स्त्री० वल्गुलायाम् । मांसिष्टायाम् । पक्षिविशेषे ॥

मातृशासित । पुं० मूर्खे ॥

मातृष्वसा । स्त्री० मातुर्भगिन्याम् ॥ मातुः स्वसा । मातृपितृभ्यांस्वसेतिषत्वं ॥

मातृष्वसेय । पुं० मातृष्वसुःसुते । मातृष्वसेये । मातृष्वसुरपत्यम् । ढकिलोप । अतएवज्ञापकाड्ढक् ॥

मातृष्वसेयी । स्त्री० मातुर्भगिनीसुतायाम् ॥ ङीप ॥

मातृष्वस्रीय । पुं० मातृष्वसुःसुते ॥ मातृष्वसुरपत्यम् । मातृष्वसुश्चेतिछण् ।

मातृष्वस्रीया । स्त्री० मातुर्भगिन्याः कन्यायाम् ॥ टाप् ॥

मातृष्विड़ी । स्त्री० वासके ॥

मात्रम् । न० कात्स्न्र्ये ॥ यथा । जीवमात्रं नहिंसेत ॥ अवधारणे ॥ यथा । पयोमात्रं भुङ्क्ते ॥ मीयते॰ अनयावा । मति॰ मिमीतेवा । मामाने । माङ् मानेवा । इयामाशुभसिभ्यस्त्रन् ॥ स्वार्थे ॥

मात्रा । स्त्री० कर्णभूषणे ॥ वित्ते । द्रव्ये ॥ माने ॥ अक्षप्रज्ञादीपरिच्छदे ॥ अक्षराऽवयवे ॥ स्वल्पे ॥ काले । अकारादिलघ्वक्षरकाले ॥ वृत्ते ॥ कालविशेषे ॥ यथा । स्वाधिनयावतापाणि . पर्येतिजानुमण्डलं । सामात्राकविभिः प्रोक्ताऽक्षरदीर्घंप्लुतेमता ॥ अपिच । वामजानुनितस्त्रमणं यावताभवेत् । कालेनमात्रासाज्ञेयामुनिभिर्वेदपारगै ॥ पुनश्च । स्वजानुनः करावर्त्तं कुर्याच्छोटिकयायुतम् । एषामात्राभवेदेकासर्वत्रैवेषनिश्चय ॥ याथार्थ्ये ॥ विषयेषु ॥ मीयन्ते॰ इ॰ मात्रा विषयाः ॥ उपभोगयोग्यविशेषे ॥ इन्द्रियवृत्तिषु ॥ इन्द्रियेषु ॥ मीयतेऽनया॰ इतिमात्रा॰ परिच्छित्ति ॥ मियन्ते विषयाआभिरितिमात्रा ॰ इन्द्रियवृत्तय ॥ मीयते॰ अनयावा । मातिं॰ मिमीतेवा । मामाने॰ माङ् मानेवा । ष्ट्रन् । अनित्य षित्वात् ङीष् । टाप् ॥ इयामेतिवाचन् ॥ पञ्चलघ्वक्षरेकाले ॥ अंशे ॥ यथा । नयोषित्रः . पृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डमात्राभ्यस्तु

निरासायत स्म इति । पिण्डेभ्य स्त्वल्पिकामात्रामितिच ॥

मात्राकाल । पु० कालविशेषे । निमेषानन्तरयावताकालेनस्वभावतउन्मेषोभवतितावतिकाले ॥ निमेषोन्मेषयोर्मात्राकालोलघ्वक्षरतथेतिपुराणम् ॥

मात्रायाम् । अ० अल्पपरिमाणे ॥

मात्रीय । त्रि० मात्रेस्थिते ॥ तत्र स्थितमितिछ ॥

मात्सर्य्यम् । न० अन्यशुभद्वेषे ॥ मत्सरएव । ष्यञ् ॥

मात्स्यिक । त्रि० मत्स्यघातिनि ॥ मत्स्यान्हन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् । मत्स्यस्यङ्यामिति परिगणनात् सूर्य्यतिष्येतियलोपोन ॥

माथ । पु० पथि । पथि ॥

माथुर । त्रि० मथुरायांजाते ॥ तत्र जातइत्यण् ॥ शेषिकोष्वर्थेष्वपीव ॥

माद । पु० दर्पे ॥ हर्षे ॥ मदे ॥ मदनम् । मदीहर्षे । सधमाद्ययोरिति ज्ञापकात् क्वचिदपवादेविन्यायाद्वा० घञ् ॥

मादक । पु० दात्यूहपक्षिणि ॥ त्रि० मत्तताजनके ॥

मादन । पु० कामदेवे ॥ मदनवृक्षे ॥ धत्तूरे ॥ न० लवङ्गे ॥ त्रि० हर्षकारयितरि ॥

मादनी । स्त्री० भङ्गायाम् । विजयायाम् ॥ माकन्याम् ॥

मादृश । त्रि० मत्सदृशे ॥ अहमिव दृश्यते । त्यदादिष्विव्यादिनाकञ् । आसर्वनाम्न ॥

माद्री । स्त्री० अतिविषायाम् ॥ नकुलसहदेवयोर्मातरि । मद्रपुत्र्याम् ॥ भर्गादित्वात्तद्राजस्यनलुक् ॥

माद्रीपति । पु० पाण्डुनृपे ॥

माद्रीसुत । पु० नकुले ॥ सहदेवे ॥

माधव । पु० विष्णौ । नारायणे । लक्ष्मीपतौ ॥ मधुविद्यायाऽवबुध्यते० इतिमाधव । शैषिकोऽण् । आदिवृद्धि गुणाभावादेशौ ॥ मायालक्ष्म्या० विद्यायावा० धव पति ॥ यद्वा । यदोर्ज्येष्ठ पुत्रोमधु ० तस्यापत्यं माधवस्तद्वंश्यत्वात् । मधोर्वंश्ये तिवा । शेषे० कृत्यण् ॥ माधवस्त्रस्तकपायामूलप्रकृतिरीश्वरी । नारायणीतिविख्याता विष्णुमायासनातनी । महालक्ष्मीस्वरूपाचवेदमातासरस्वती । राधा वसुन्धरागङ्गातासांस्वामीचमाधव ॥ मधौ । वसन्ते ॥ राधे । वैशाखे ॥ मधुमकरन्द० सोस्मिन्नस्ति । मधोर्अचेतिञ ॥ यादवे । मधूकवृक्षे ॥ मुद्गे ॥

माधवक । पु० मधूकपुष्पमद्ये । म

ध्वासवे ॥ मधूकपुष्पमधु । मधुना
कृत सञ्चित:। कुलालादिभ्यो-
वुञ् ॥

माधवद्रुम । पुं॰ आम्रवृक्षे ॥ माध
वस्यवसन्तस्यद्रुमः ॥

माधवप्रियम् । न॰ पीतचन्दने ॥

माधवि । पु॰ प्रद्युम्ने ॥ माधवस्या-
पत्यम् । अतइञ् ॥

माधविका । स्त्री॰ माधवीलतायाम्
॥ सङ्कृतिवृत्ति २४ प्रभेदे ॥ य-
था । भवन्तिपुरोजगणावदिसमल-
तोयगणोङ्गितदाकरयन्न ' प्रकाम
मतीवमुदेननुमाधविकामितिताक
ययन्त्यतिसन्त । तुषारधराधररा
जसुतापरिवारकभूमिपतीयवनन्त
तमानयमानयवत्समदोतिमदोवत
गर्वहरस्वकमन्त ' ॥

माधवी । स्त्री॰ मिसौ ॥ मधुशर्करायाम्
। सिताखण्डे ॥ कुट्टन्याम् ॥
मदिराया प्रभेदे ॥ यथा । पोत्वा
ह्यमाधवींमिष्ठांप्रातयामिरणाङ्गणे॰
इतिमत्स्य प्रसिद्धेश्वाश्च भागवते
। गोमहिष्यादिसम्पत्तौ ॥ दुर्गाया
म् ॥ तुलस्याम् ॥ सुभद्रायाम् ॥
पुष्पलताविशेषे । अतिमुक्ते । पुण्ड्र
की । वासन्त्याम् । लतायाम् । मा
धवीमधुराशीतालघ्वीदोषत्रयापहा
॥ मधौपुष्प्यति । कालात्साधुपु
ष्प्यत्पच्यमानेष्विति पुष्प्यर्थेऽ-
ण् । ङीप् ॥ उर्व्याम् । भूमौ ॥ त्व
मयाइत्युक्तदाधारात्त्वत्सृष्टात्वामुपा-
श्रिता । माधवीतिचलोकोयमभि
धत्तेततोहिमामितिविष्णुपराणम् ॥

माधवेष्टा । स्त्री॰ वाराहीकन्दे ॥

माधवोचितम् । न॰ कक्कोलके ॥

माधवोद्भव : । पु॰ राजादन्याम् ॥

माधुक । पु॰ वर्णसङ्करजातिवि-
शेषे ॥

माधुपर्किकम् । न॰ मधुपर्कदानकाले
पूज्यतयाऽर्च्यधनादौ ॥

माधुमत । पु॰ काश्मीरदेशे ॥ काश्मी
रास्तुमाधुमता सारस्वतास्तुविकर्णि
का' ॥ इतिहेमचन्द्र ॥ मधुमदभि
जनोऽस्य । सिन्धुतक्षशिलादिभ्योण
आभिजनः ॥

माधुरम् । न॰ मल्लिकायाम् ॥ त्रि॰
मधुरसम्भवे ॥

माधुरी । स्त्री॰ मद्ये ॥ माधुर्ये ॥ त्रि
सक्षणपदारविन्दरसिकांसामाधुरी
माधुरी ॥

माधुर्य्यम् । न॰ निसर्गसौम्यत्वे ॥
रामणीयके । रसिकतायाम् ॥ का
व्यगुणभेदे ॥ यथा । आह्लादकत्व
माधुर्यंशृङ्गारेद्रुतिकारणम् । शृङ्गा
रे॰ अर्थात्सम्भोगेद्रुतिर्गलितत्वमि
व । श्रव्यत्वपुनरोज ' प्रसादयोर॰
पि । करुणे विप्रलम्भे तच्छान्ते॰चा-
तिशयान्वितम् । अत्यन्तद्रुतिहेतु

स्यात् ॥ मधुरस्यभाव . । दृढादित्वा त्ष्यञ् ॥

माधूकम् । त्रि॰ मधूकस्यावयवे ॥ तद्विकारे कोपधाच्चेत्यण् ॥ मधुरभाषिणि ॥

माध्यन्दिन । पु॰ यजुर्वेदीयशाखाविशेषाध्यायिनि ॥ त्रि॰ मध्यमे ॥ मध्येभव । मध्यमध्यन्दिनण्चास्मादितिवक्ति ॥

माध्यमम् । त्रि॰ मध्यमीये ॥ मध्येभवम् । मध्यान्मण् ॰ इतिवक्ति ॥

माध्यमिक . । पु॰ बौद्धावान्तरभेदेशून्यवादिनि ॥ विज्ञान क्षणिक नात्माविद्युद्दम्भनिमिषवत् । अन्यस्यानुपलब्धत्वाच्छून्य माध्यमिकाजगु ॥

माध्यस्थम् । न॰ मध्यस्थत्वे ॥ यच्चेगुण्यात्पुरुषस्यमाध्यस्थम् ॥ मध्यस्थस्यभाव । ष्यञ ॥ मध्यस्थकरणे ॥

माध्याह्निक । पु॰ बन्धूके ।, त्रि॰ मध्याह्नभवे ॥ ठञ् ॥

माध्वकम् । न॰ माध्वीके ॥

माध्वी । स्त्री॰ मद्ये ॥ मध्वादिकृतसुरायाम् । मधुरकण्टकमत्स्ये ॥

माध्वीकम् । न॰ मधूकपुष्पे . कृतेमद्ये । मध्वासवे । माधवके ॥ मृद्वीका॰द्राक्षा॰तत्राविकार । तस्यविकारइत्यण् । अनुदात्तादेरञ्- ष्यञ्वा । पृषोदरादि . ॥ मधुनप्रभेदे ॥

माध्वीकफल । पु॰ मधुनालिकेरके ॥

माध्वीमधुरा । स्त्री॰ मधुखर्जूरिकायां ॥

मान । पु॰ चित्तसमुन्नतौ ॥ चित्तस्यसमुन्नतिरक्षुद्रतामान । धनाद्युत्कर्षेणात्मनिचित्तोन्नतिर्मान । मत्समोनान्योस्तीतिमननमान ॥ गर्वे । अपूज्यत्वेपिपूज्यत्वख्यापने ॥ आत्मनिपूज्यत्वाध्यासे ॥ पूज्यत्वे ॥ यथा । अधमा कालिमिच्छन्तिसन्धिमिच्छन्तिमध्यमा । उत्तमामानमिच्छन्तिमानोहिमहताधनम् ॥ मानोहिमूलमर्थस्यमानेम्लानेधनेनकिम् । प्रभ्रष्टमानदर्पस्यकिंधनेनकिमायुषा । सत्कारे ॥ आत्मन्यविद्यमानगुणारोपेणोत्कर्षबुद्धौ ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिर्गुणत्वधीरूपस्त्रयोपि मानेन्तर्भवति ॥ ग्रहे ॥ आदरे । सन्माने ॥ कोपविशेषे ॥ स्त्रीणामीर्ष्याकृत कोपोमानोन्यासङ्गिनिप्रिये । प्रियापराधसूचिकाचेष्टामान ॥ अनुरक्तयोर्दम्पत्योर्भावविशेषे ॥ यथा । दम्पत्योर्भावएकवसतोरप्यनुरक्तयो । स्वाभीष्टाश्लेषवीक्षादिनिरोधोमानउच्यते ॥ न॰प्रमाणे । प्रस्थयादौ ॥ भावुक

बोधकमानमिति मानलक्षणम् । भागा नाखविषयावभ. सकत्वनिरपेक्षमि- तितार्किका । बात्मसापेक्षमिति वैदिका । मानाधीनामेयसिद्धिर्मा नसिद्धिश्चलक्षणादिभ्याइ ॥ प्रस्था दौ परिमाणे । मीतवे । द्रवये । याप्ये ।' तस्त्तुलाङ्गुलिप्रस्थैस्त्रि विध भवति । तत्रतुलायज्ञर्म मो- न्मानाद्युपलच्यते । बङ्गुल्याहस्ता दि । प्रस्थेनद्रोणादि ॥ ऊर्द्ध- मानकिलोन्मानपरिमाणन्तु सर्वत । बायामस्तुप्रमाण स्यात्सङ्ख्या- वाह्यातुसर्वत ॥ मननम् । मनु- अवबोधने । घञ् ॥

मानक । पु० म०कच्चौप्रभेदे । महा पत्र । मानकाचू०मानसागर०इ० भा०प्रसिद्धकन्दे । मानक शोथघ्न शीत पित्तरक्तहरोलघु ' ॥

मानग्रन्थि ' । पु० अपराधे ।

मानधन ' । त्रि० अभिमानवति ।

मानधानिका । स्त्री० कर्कव्याम् ॥

मानना । स्त्री० हनने मानने ॥ म नस्तम्भे चुरादि । ततोयुच । स्त्रि योलुक् ॥

माननीय त्रि० मान्ये पूजनीये ॥

मानफलम् । न० अज्ञातार्थप्रकाशने ॥

मानभाक् । त्रि० अभिमानवति ॥ मान्ये ॥ यथा तेषामुसमवेता नामान्यौस्नातकपार्थिवौ । राजस्ना तकयोश्च वस्नातकोनृपमानभागि ति ॥

मानरन्ध्रा । स्त्री० ताम्र्याम् । तांबी० इ० गौ० दे० भा० प्र० वाद्यविशे ॥ यथा । याम्यघोषोऽघताम्रीस्या न्मानरन्ध्राघिकालिकेति०त्रिकाण्ड शेष ॥

मानव । पु० मनुष्ये । मनुजे ॥ मनोरयम् । तस्येदमित्यण् ॥ य हा । मनोरपत्यम् । ब्राह्मणमाणवे तिज्ञापकादण् ॥ त्रि० मनुप्रोक्ते ॥ न० उपपुराणविशेषे ॥

मानवक । पु० वाले ॥

मानवर्ज्जित । त्रि० मानरहिते ॥ नीचे ॥

मानवान् । त्रि० सत्कारवति ॥ स्त्री पर्वति । मानोविद्यतेऽस्य । मतु प् ॥ स्त्री० उगितत्वान्ङीपि० मानवती ॥

मानवी । स्त्री० मनो कन्यायाम् ॥ मानुष्याम् ॥ ग्रासनर्दवीविशेषे ॥ मनुप्रोक्तायाम् ॥ मनोरियम् । तस्येदमित्यण् । ङीप् । विद्यादे वीविशेषे ॥

मानस । पु० जपविशेषे ॥ यत्कि ञ्चिदपि मनागपि नचलतिसमानस विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गु णै । उपांशु स्याच्छतगुण सा हस्रोमनस ' स्मृतइतिमनूक्ते ' ॥

न॰ स्वान्ते । मनसि ॥ अत्यगुणा यथा । परापरत्व सङ्ख्याद्या प स्त्ववेगश्चमानसे । इति॰ भा॰ प॰ ॥ मानसतापोयथा । कामक्रोध भयद्वेषलोभमोहविषादजः । शोकासूयावमानेर्ष्या मात्सर्यादिभयस्त था मानसोपिद्विजश्रेष्ठतापोभ वतिनैकधा । इ॰वि॰पु॰ ॥ मा नसत्रिविध कर्म यथा । परद्रव्येष्व भिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्चत्रिविध कर्ममा नसम् ॥ सरोविशेषे ॥ यथोक्तमा र्षे रामायणे । कैलासपर्वते राम मनसानिर्मितपरम् । ब्रह्मणानरशा र्दूल तेनेदमानससर ॥ तस्मात् सुस्रावसरस साथोध्यामुपगूहते । सर प्रवृत्तासरयू पुण्याब्रह्मस रश्च्युता ॥ इति॥ मृगेन्द्रसंहिता यान्तु॰मेरोर्याम्ये गन्धमादनोनाम विष्कम्भशैलस्तस्यमूलेनन्दनाख्यमु पवनमस्ति॰तत्रमानसनामसरइत्यु क्तं यथा । यामाद्रिमूलेगन्धर्वसुरसि द्धाप्सरोवृतम् । नन्दन मानसतत्रस रोमानसतस्करम् ॥ इति ॥ चि॰ मनोभवे ॥ यथा । विषयेष्वतिस रागोमानसोमलउच्यते ॥ अनूढा ब्रह्मपौर्णेवममेय मानसीव्यथा ॥ सङ्कल्प कर्ममानसमिति ॥ न॰ गिरिविशेषे ॥ मन्यतेऽनेन । मन

स्थाने । असुन् । तत प्रज्ञाद्यण् ॥

मानसतीर्थम् । न॰ रागादिरहिते मनसि ॥ मनोनिर्मलतीर्थं हिरागा दिभिरनाविलमिति ॥

मानसपूजा । स्त्री॰ मनोरचितद्रव्यक रणकसपर्यायाम् ॥

मानसयाग । पुं॰ यागेषुप्रथमे । अ कृत्वामानस यागयोन्य याग समा- रभेत् । अभिव सतुविर्ज्ञ्येनमो क्षायविधीयते ॥ आत्मयागेकृतेचे- वदेहशुद्धि प्रजायते ॥

मानसवासना । स्त्री॰ कामक्रोधदम्भ दर्पाद्यासुरसम्पदि ॥ काम्यमानत्व इच्छाजन्यसंस्कारे ॥

मानसव्रतम् । न॰ अहिंसादौ ॥ यथा । अहिंसासत्यमस्तेयब्रह्मचर्यमक ल्पता । एतानिमानसान्याहुर्व्रता नितुवराधरे ॥ इ॰ वराहपुराण म् ॥

मानसालय । पु॰ हंसे ॥ मानस मालयोऽस्य ॥

मानसिकम् । न॰ मन कल्पिते ॥

मानसी । स्त्री विद्यादेवीविशेषे ॥ म- न कल्पितायाम् ॥

मानसूत्रम् । न॰ स्वर्णादिनिर्मितक टिसूत्रे ॥

मानसोत्तर । पुं॰ मेरो प्राकारवत् परित . स्थितेमहापर्वते ॥

मानसौका । पुं॰ हंसे॥ मानससर

ष्वोक्तोऽत्र ॥

मानाथ । पु० लक्ष्मीकान्ते । नारायणे ॥

मानार्थकम् । न० यौतवे ॥ मानमर्थोयस्यतत् ॥

मानास । त्रि० पराहङ्कारहारिणि ॥ मानमस्यति । असु० । कर्मण्यण् ॥

मानिका । स्त्री० मद्ये ॥ शरावे । सेर० इतिभाषा ॥ इतिवैद्यकपरिभाषा

मानित । त्रि० पूजिते ॥ मान सञ्जातोऽस्य । तारकादित्वादितच् ॥

मानिता । स्त्री० अभिमानितायाम् । मानिनोभाव । तल् ॥

,, नित्वम् । न० विद्यमानैरविद्यमानैर्वागुणैरात्मन श्लाघने ॥ भावेत्व ॥

मानी । पु० सिंहे ॥ त्रि० मानविशिष्टे ॥ अहङ्कारिणि ॥ मननशीले ॥ मानोऽस्यास्ति० अस्मिन्वा । इनि । अनात्मवस्तुष्वात्माभिमानोमान । सोऽस्यास्तीतिमानी ॥

मानिनी । स्त्री० फल्याम् । प्रियङ्गौ ॥ मानवत्याम् । स्त्रीविशेषे ॥ उभयोरिति । मानश्चित्तोन्नतिरस्त्यस्या । इनि । ङीप् ॥ कोपनायाम् ॥ स्त्रीणामीर्ष्याकृत कोपो

मानोन्यासङ्गिनिप्रिये० इतिलक्षणात् ॥

मानिषाद । पु० श्रीरामे ॥ मा० लक्ष्मीरस्मिन्विष्णौनिषीदति० तिष्ठति । षद्लृ० । इगुपधेतिघञ् । सदिरप्रतेरितिषत्वम् ॥

मानुष । पु० मनुष्ये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥ आसुरविवाहे ॥ शुल्केनासुरइति हारीतसूत्रात् ॥ त्रि० मनुष्यसम्बन्धिनि ॥ मनुष्यस्यायम् । तस्येदमित्यण् । आपत्यस्येतियलोप ॥ येऽषुधामन्दमतयोविधिनामुषिताश्रये । तेप्राप्यमानुष जन्मपुनर्बन्धमियन्त्युत ॥

मानुषतीर्थम् । न० तीर्थविशेषे ॥

मानुषवित्तम् । पुं० शरीरपाटवे ॥ गोभूहिरण्यादिसाधनसम्पत्तौ ॥ मानुषस्यतद्वित्तञ्च ॥

मानुषी । स्त्री० नरभार्यायाम् ॥ मनोरपत्य स्त्री । मनोर्जातावञ्युतौषुक्च । टिड्ढेतिङीप् ॥ जातिविवक्षायापरत्वान्ङीष् ॥ प्रयोगे तुङीष् ॥ चिकित्साप्रभेदे ॥ यथा आसुरीमानुषीदैवीचिकित्सासा-त्रिधामता ॥

मानुष्य । पुं० त्रिविधभौतिकसर्गे ॥ सर्वैकविध० ब्राह्मणाद्यवान्तर-जातिभेदाविवक्षया० संस्थानस्

चतुर्व्वर्ग्गपिवर्ग्गव्वविशेषात् चैतन्यो त्कर्षनिष्कर्षतारतम्याभ्यामूत्ताधोम ध्यभानेनत्रैविध्यबोध्यम् ॥ न० मनुष्यत्त्वे ॥ मनुष्यशरीरे ॥ मानु ष्येयरस्त्रीसम्भवि सासरीरमार्ग णम् ॥

मानुष्यकम् न० मानुषसं० घे । मनु ष्याणांसमूहः । गोत्रोक्षोष्ट्रोरभ्रा जराजन्यराजपुत्रवत्समनुष्याजाद् ञ् । प्रक्कत्याश्रीराजन्यमनुष्ययुवान इतियलोपोन ॥ मनुष्याणाभावेयो पधाद्गुरूपोत्तमाद्वुञ् ॥

मानोज्ञकम् । न० मनोज्ञतायाम् ॥ मनोज्ञस्यभावः । द्वन्द्वमनोज्ञादि भ्यश्चेतिवुञ् ॥

मान्त्रर्थिकम् । न० मन्त्रवर्णोक्तो० प्रयर्थि ॥

मान्द्यम् । न० मन्दत्त्वे । मन्दस्यकर्म भावयो ॥ पत्यन्तपुरोहितादिभ्यो यक् ॥ रोगे ॥

मान्धाता । पु० युवनाश्वनृपात्मजे । सौवनाश्वे राजनि ॥ मामयधास्य तीतिइन्द्रवचनात्० मान्धाता नामतोऽभवत् । यावत्सूर्यउदेति सयावच्चप्रतितिष्ठति।सर्वंतद्यौवना श्वस्यमान्धातु क्षेत्रमुच्यते ॥

मान्य । वि० पूज्ये । मन्तव्ये । मानार्हे ॥ मानपूजायामस्माद् रा दिभ्यश्चादर्हार्थे यत्प्रत्ययः ॥

मान्यस्थानम् । न० पूज्यत्वकारणे ॥ ॥ यथा । वित्तबन्धुर्वयः कर्म वि द्याभवतिपञ्चमी । एतानिमान्य स्थानानिगरीयोयद्यदुत्तरम् ॥ प ञ्चानांत्रिषुवर्णेषुभूयांसिगुणवन्ति च । यत्रस्यु सोऽत्रमानार्हः शू द्रोपिदशमींगतः ॥

मान्या । स्त्री० पूजायाम् । मरुन्मा लायामौषधौ ॥

मापक । पु० प्रमापके । प्रमाणमके । शब्दे ॥

मापत्य । पु० कामदेवे ॥

मापन । पु० तुले ॥ न० परिमा णे ॥

मापित । वि० परिच्छिन्ने ॥ मात मतौवा०घ्यन्तात्कर्मणिक्तः । अर्त्तिह्रीस्यादिनापुगागमः ॥

माभी । स्त्री० अभये ॥ नञर्थमा शब्दस्यभीशब्देन सुप्सुपेतिसमा सः ॥

माभीद । वि० अभयप्रभेदे ॥ माभीं ददाति । बुदाञ्० । आतश्चोप कः ॥

मामक । पु० मातुले ॥ कृपणे ॥ वि० मदीये ॥ ममतायुक्ते ॥ ममा यम् । अण् । ममकादेशः ॥

मामकीन । वि० मदीये । मामके । ममाऽयम् । युष्मदस्मदोरन्यतरस्या खञ्चेति खञ् । तवकममकावेक

प्रतिभासप्रतिबन्धे जातस्वप्रतिभास हेतुरावरणविक्षेपशक्तिद्वयवत्यविद्या • सर्वप्रपञ्चप्रकृति । विद्यमानवस्तु रूपमावृणोति • अविद्यमानञ्चविक्षि प्य दर्शयति • या • सा • माया । निरस्त्वाकार्यगम्यास्यशक्तिर्मायेतिविश्रुता । निखिलप्रपञ्च प्रतिमायाया कारणत्वम् । मूलोच्छेदविनाका-श्चित्प्ररोहन्तिपुन पुन । यथा-लतातथाविभ्रमज्ञानप्रशम विना । अतोस्यामूलमज्ञानमेव । अतएव । पूर्णांशतसहस्रनतुतिष्ठन्त्यव्यक्तचिन्त का । दशमन्वन्तराणीहतिष्ठन्तीन्द्रियचिन्तका । भौतिकास्तुशत पूर्णं सहस्र त्वाभिमानिका । बौद्धादशसहस्राणितिष्ठन्तिविगतज्वरा ॥ पुरुष निर्गुण प्राप्यकालसङ्ख्यानविद्यते । इतिपुराणे ऽव्यक्तादीन् पुरुषबुद्ध्योपासितवतापुनर्जन्माभिधाय • पुरुष निर्गुणमित्यादिनामूलाज्ञाननिवर्त्ति तवत पुरुषसाक्षात्कारेणपुनर्जन्माभाव प्रतिपादित । ॥ तुच्छाऽनिर्वचनीयाचवास्तवीचेत्यसौत्रिधा । ज्ञेया मायात्रिभिर्बोधै श्रौतयौक्तिकलौकिकै । अस्यास्वरूप स्पष्टमुक्त श्रीदेवीभागवतस्यसप्तमस्कन्धे देवीगीतायाभगवत्या । यथा । तस्यका चित्स्वत । सिद्धाशक्तिर्मायेतिविश्रुता । ॥ काचित् • अनिर्वचनीया • तस्यममात्मरूपस्य • स्वत सिद्धा • अनादिभूताशक्तिरस्ति • सामायेत्यादिपदै सर्वश्रुतौविश्रुताप्रसिद्धास्ति । मायान्तु प्रकृतिंविद्यात् • मायावापषानारसिंहीत्यादिश्रुतिषु ॥ साकीदृशीवर्त्ततेतदाह । नसती • सानासती • सा • नोभयात्माविरोधत । एतद्विलक्षणाकाचिद्वस्तुभूतास्तिसर्वदा ॥ अत्रविरोधतइत्यावृत्त्या • स्थानत्रयेपियोज्यम् । ब्रह्मवत्कालत्रयाबाध्य । सती • नवर्त्तते • ब्रह्मज्ञानेनबाध्यत्वरूपविरोधात् । नापिवन्ध्यापुत्रवत् • असती • व्यावहारिकसत्तावत्त्वविरोधात् । नाप्युभयात्मा • सत्त्वासत्त्वविशिष्टविरुद्धधर्मयो सत्त्वासत्त्वयोरेकत्रसहावस्थानविरोधात् । अतएतत्त्रयविलक्षणाकाचिदनिर्वचनीया वस्तुभूतास्तिसर्वदा • अनादियावन्मोक्षस्थायिन्यस्तीत्यर्थ । तथाचतापनीयश्रुति । मायाचतमोरूपानुभूतेस्तदेतज्जड मोहात्मकमनन्तु तुच्छमिद रूपमस्याव्यञ्जिकानित्यनिवृत्ताविमूढै रात्मैवदृष्टास्यसत्त्वमसत्त्वञ्चदर्शयति ॥ तद्दृष्टान्तमाह । पावकस्येति ॥ ॥ पावकस्योष्णतेयमुष्णांशोरिवदीधिति । चन्द्रस्यचन्द्रिकेवेयममै

यसङ्गजाभुवा ।। सङ्गजाऽमादि ॰ भुगायावन्मोचस्थायिनीमायामस्ति मैमास्तीत्यर्थः । एतेन मायाशक्त्या सद्वितीयत्त्व ब्रह्मणोस्तीति॰ कथंजगत्सृष्टे पूर्वंब्रह्मसजातीयभेदशून्य मितिशङ्कापरास्ता॰ शक्ते श-क्तानतिरेकात्॰ नहिवह्निशक्तिर्व-ह्नेः पृथक्त्वेन॰ क्वचित्कदाचि दृश्यते । किन्त्वद्वितीयं सत्यपदा र्थीनास्तीत्यर्थ एकमेवाद्वितीयब्रह्मेति श्रुतेरर्थः । तथाचास्यामायया स-द्वितीयत्वे पिदोषाभावात्॰ इति ॥ विश्व माख्यस्याम्॰ मिमीतेवा । मामाने॰ माङ् मानेवा । माच्छा ससिभ्योय । मायातिवा । यातो रुपितिक ' ॥ वर्णव्यत्यारे ॥ तत्र यथम् । कृत्वाकर्णौकुण्डलयुक्तौकु करम दत्त्वापादनूपुरयुक्तक्षुद्रहारम् । मायाव्रतपिङ्गलनागोदितमेतज् जानीताऽद परिडतवक्त्राम्बुजसारम् ॥ यथा । उद्यद्याधासम्प्रतिराधामधुमासी॰ शङ्के सङ्के । तत्प्रति-याताकिमुदासी । केलीकुञ्ज शून्यम वैद्यास्तरङ्गाप्राणेषाण भाविकथ यावदतस्या ॥

मायाकार । त्रि॰ ऐन्द्रजालिके । प्रातिहारिके । मायां॰ स्थानजला दौजलस्थलादिज्ञानंकरोति । कृञ् अ॰ । कर्म्मण्यण् ।

मायाकृत् । पु॰ मायाकारे । प्राति हारिके ॥

मायाजीवी । पु॰ प्रातिहारिके । बाजीकर इ॰ भा॰ प्रसिद्धे ॥

मायाति । पुं॰ नरपतौ ।

मायाद । पु॰ कुम्भीरे ॥

मायादेवी । स्त्री॰ शाक्यमुनेर्जनन्याम् ॥

मायादेवीसुत । पुं॰ शाक्यमुनौ । शाक्यसिंहे । गौतमे । सर्वज्ञे । बुद्धभेदे ॥ मायानामोदेवीच । तस्या सुत ॥

मायाधमन । पुं॰ मायाशमने॰ भगवति ॥

मायाफलम् । न॰ फलविशेषे । छि द्राफले । मायिफले । माइफल॰ इ॰ गौ॰ भा॰ ॥

मायामय । त्रि॰ मायाविनाकृते ॥ न॰ जगति ॥ नन्तिरुपयितु शक्या विस्पष्ट भासतेचया । सामायेती न्द्रजालादौलोका सम्प्रतिपेदिरे॥ स्पष्ट भातिजगच्चेदमशक्यतन्निरूपणम् । मायामयजगत्तस्मादीक्षस्वापक्षपातत ॥

मायामोह । पु॰ सर्वधर्मप्रवर्त्तके॰ भगवद्देहेऽसुराणांमोहायोत्पन्ने ॥

मायारसिक । त्रि॰ परप्रतारके ॥ मायायारसिक ।

मायावान् । त्रि॰ मायासंयुक्ते । मा

यादिनि॥ मायाख्यस्यास्मिन्वाम तुप्॥

मायावती। स्त्री॰ कामदेवपत्न्याम्। रत्याम॥ उगित्वान्ङीप्।

मायावी। पुं॰ कंसासुरे। बिडाले॥ त्रि॰ मायाकारे। व्यसनी। ऐन्द्रजालिके॥ मायाऽस्ति॰ अस्मिन्वा। अस्मायामेधास्रजोविनि॥

मायाविनोद। पु॰ दैत्यदानवादौ॥ मायायामायायावाविनोदस्यमल्लारविशेष क्रीडावायस्येतिविग्रहः॥

मायाशक्ति। स्त्री॰ आवरण विक्षेप शक्तिसम्पन्नायाम्॥

मायासीता। स्त्री॰ योगेनाग्निकृत सीताप्रकृतौ।

मायासुत। पु॰ बुद्धे॥ मायाया सुतः॥

मायिक। पु॰ मायाकारे॥ मायास्तिचास्य। व्रीह्यादिपाठाट्ठन्॥ न॰ मायाफले॥ त्रि॰ मृषात्मके॥

मायी। पु॰ मायाकारे। धूर्त। जालिके॥ मायाविनि। मायाशक्तिमति॰ महेश्वरे। मायाया प्रकृते र्नियामके॥ मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरम्। समाख्यस्ततेत्याह श्वेताश्वतरश्रुतिः॥ मायाअस्य॰ अस्मिन्वाअस्ति। व्रीह्यादिपाठादिनि।

मायु। पु॰ पित्ते॥ मिनोति॰ प्रक्षिपतिदेहेऽस्याणम्। डुमिञ्प्रक्षेपणे। कृवापाजिमीत्युण्॥

मायुराज। पु॰ कुवेरात्मजे। वर्ण्य कवौ॥

मायूरम्। न॰ मयूरसमूहे॥ मयूराणां समूहः। अनुदात्तादेरञ्॥ मयूरमांसे॥ मयूरस्यावयवोविकारोवा। प्राणिरजतादिभ्योऽञ्॥ मायूरपाचित मांसघृतेचोपस्करान्विते। ईषल्लवणसयुक्तं मरिचैलासमन्वितम्॥ कषायमुष्णं मायूरकफानिलहरगुरु। वर्षाकालेनतत्सेव्य दुष्टकीटादिभक्षणात्॥

मायूरिक। पु॰ मयूराद्विपक्षिणाकुनिके॥ मयूरान्हन्तिपक्षिमत्स्यमृगान्हन्तीतिठक्॥

मायूरी। स्त्री॰ अजमोदायाम्॥

मार पु॰ अनङ्गे। स्मरे। मारयति॰ विरहिणम्। पचाद्यच्॥ मृतौ॥ विघ्ने॥ धत्तूरे॥ मारणे। म्रियतेऽनेन। मृङ्॰। करणे घञ्॥

मारक। पु॰ मरके। उत्पाते॥ पक्षिविशेषे। घातपक्षिणि। वाज॰ इ॰ भा॰॥ त्रि॰ मारणकर्त्तरि॥

मारजित्। पुं॰ जिने। बुद्धे॥ मारं कामंजयति। जि॰। सत्सूद्विषेति क्विप्। तुक्॥

मारणम्। न॰ प्रतिघातने। वधे॥

अभिचारविशेषे ॥ प्राणिनांप्राणहर या मारण समुदायकम् ॥ मृदिसा-याम । स्वार्थेण्यन्त : । ल्युट् ॥
मारि । स्त्री॰ मारणे ॰ वर्षे ॥ जन क्षये । मरके ॥
मारिषिकम् । त्रि॰ मरिषे संस्कृ-ते ॥ संस्कृतमितिठक् ॥
मारित । त्रि॰ नष्टीकृते ॥ भस्मी-कृते ॥
मारिव्यसनवारक । पुं॰ राजर्षिवि शेषे ॥
मारिष. । पु॰ नाट्योक्त्या॰आर्ये । मा न्ये । श्रेष्ठे ॥ मर्षणात्॰सहना न्मारिषः । पृषोदरादि ॥ मर्श॰ तू॰प्र॰शाकविशेषे ॥ श्वेतरक्तप्रभे देनद्विविधोमारिषः स्मृत ॥ मारि षोमधुर ' शीतोविष्टम्भीपित्तनुद्गु-रु ' । वातश्लेष्मकरोरक्तपित्तनुद्वि-षमाग्निजित् ॥ रक्तमार्षोगुरुर्नाति सक्षारोमधुर सरः । श्लेष्मल : कटुक पाकेस्वल्पदोषउदीरित । रक्तनाडादयश्चान्ये तज्जातीयास्त द्गुणा ॥
मारिषा । स्त्री॰ दक्षाम्बायाम । वा र्क्ष्यांम । प्रचेतसाभार्यायाम् ॥
मारी । स्त्री॰ चण्डयाम् ॥ जनक्षये ॥ मारीनामयुगपदनेकलोकक्षयहेतु-रुत्पातोविशिष्टदेवताधिष्ठान . । साचदेवताप्रे तपतिनाक्षम।यचक्र-चित् कार्यंकरोति ॥ मारीश्चर्यांश-क्षौ ॥
मारीच । पु॰ राक्षसविशेषे । ताड काराक्षसीपुत्रे । रावणानुचरे ॥ अयश्वसीताहरणकालेमायामृगरूप: श्रीरामेणहत ॥ कक्कोले ॥ याज कद्विपे ॥ याजकद्विजइतिपाठ ॥ राजोगजे ॥ काश्यपे ॥ मरीचेर पत्यम् । तस्यापत्यमित्यण ॰इ तिकाशिका । वस्तुतस्तु॰बाह्वादि-भ्यश्चे ति॰इञाभाव्यम् । तथाच॰ सिद्धोन्यात् परइतिसूत्र भाष्यम् । मरीचिशब्दोवाह्वादिषुपठ्यतइति। न॰मरीचानावने ॥
मारीची । स्त्री॰ देवताविशेषे । माया देव्याम् । पीविरथायाम् । विसु-खायाम् ॥
मारुण्ड । पुं॰ भुजङ्गाण्डे ॥ प-थि । मार्गे ॥ गोमयमण्डले ॥
मारुत । पुं॰ श्वसने । स्पर्शने । वायौ ॥ म्रियन्तेऽनेनप्रहीणेन॰विना वा । मृङ्॰ । मृग्रोरुति । मरु देव॰प्रज्ञाद्यण् ।
मारुतव्रतम । न॰ राज्ञोव्रतविशे षे ॥ यथा । प्रविश्यसर्वभूतानियथा चरतिमारुत । तथाचारैः प्रवे-ष्टव्यव्रतमेतद्धिमारुतम् ॥
मारुतात्मज । पु॰ हनुमति ॥ मरु तस्यात्मज ॥

मारुतापह । पुं॰ वरुणवृक्षे ॥ त्रि॰ वायुनाशके ॥

मारुताशन । पु॰ पवनाशने । सर्पे ॥ त्रि॰ वायुमात्रभक्षके ॥

मारुति । पु॰ हनूमति ॥ भीमसेने ॥ मारुतस्यापत्यम् । अत इञ् ॥

मार्कण्ड । पु॰ मार्कण्डेयमुनौ ॥ मृकण्डस्यापत्यम् । अण् ।

मार्कण्डिका । स्त्री॰ लताविशेषे । मृदुरेचन्याम् । भुञ्जिखखसा॰ इ॰ भा॰ ॥ मार्कण्डिकाकुष्ठहरीऊर्द्ध्वकायशोधिनी । विषदुर्गन्धकासघ्नीगुल्मोदरविनाशिनी ॥

मार्कण्डी । स्त्री॰ मार्कण्डिकायाम् ॥

मार्कण्डीयम् । न॰ भूम्याहुल्यै महौषधे ॥

मार्कण्डेय । पुं॰ मुनिविशेषे ॥ सप्तकल्पावस्थोऽप्ययंमुनिः । यथोक्तम् । चतुर्दशेन्द्रावच्छिन्नोब्रह्मणोदिनमुच्यते । तावतीब्रह्मणोरात्रिः साचब्राह्मीनिशानृप ॥ त्रिंशराशिसमार्द्धयावेदेषुपरिकीर्त्तिता । एव सप्तकल्पजीवीमार्कण्डेयोमहातपा ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ मृकण्डस्यापत्यम् ॥ शुभ्रादित्वाड्ढक् । शुभ्रादिषुकारान्तपाठे तु॰ ढे कोपीबोध्य ॥ त्रिभुजजटिलसौम्यसुव्रतंचिरजीविनम् । मार्कण्डेयनरोभक्त्यापूजयेच्चचिरायुषम् ॥ न॰ नवसहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा । चतुर्दशसहस्रञ्चमत्स्यमाद्य प्रकीर्त्तितम् । तथाग्रहसहस्रन्तु मार्कण्डेयमहाद्भुतमितिदेवीभागवतम् ॥

मार्क्व । पु॰ भृङ्गराजे । भंगरा॰ इ॰ भा॰ ॥ मारयति । क्विप् । मारि॰ केशशौक्ल्यानाशनं॰ कूयते । कुङ्शब्दे । इदोरप् ॥

मार्ग । पु॰ मृगमदे ॥ मार्गशीर्षमासे ॥ अन्वेषणे ॥ सौम्यर्क्षे । मृगशिरोनक्षत्रे ॥ पायौ । गुदे । अपाने ॥ लग्नात्सप्तमभवने ॥ गानप्रकारे। देशविशेषनं रमेच्छ्येय शास्त्रप्रतिपादितेसार्वत्रिकरागप्रकारे ॥ अध्वनि । पथि॥ तत्रपरिमा यथा । त्रिंशद्धनूंषिविस्तीर्णोदिशि मार्गस्तुतै कृत । विंशद्धनुर्या मग्राम सीमामार्गोदशैवतु ॥ धनूंषिदशविस्तीर्णः श्रीमान्राजपथः कृत । नृपाजिरथनागानामसम्बाध सुसञ्चर ॥ धनूंषिचैवपञ्चस्युर्विशाखारथ्यास्तुनिर्मिता । त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यका ॥ जङ्घापथश्चतुष्पादस्त्रिपादग्रहान्तरम् । वृतीपादस्त्वर्द्धपादः प्राग्वश पादक स्मृत ॥ अवकर परीवार पानमात्र समन्तत: । प्रावृट्कालेतुप्राकृतीकार्त

दौर्गन्ध्य गौरवकण्डूक्लमलमरी चकम् । खेदवीभत्सताद्यनिशरी रपरिमार्जनमिति ॥ देवीगृहमार्ज नफलंयथा । देव्यागृहान्तुय शुर्भ्रं सम्मार्जयतिनित्यशः । सभवेद्बलवा न्सौख्यसर्वसम्पत्तिसयुत इति ॥ मद्दनानाध्वमनार्थमसृत्दिताश्र सापुष्करलेपनि ॥ मार्ष्टिजनेन । मृजूशुद्धौ । ल्युट् ॥

मार्ज्जना । स्त्री॰ मलस्यापकर्षणे । मार्ष्टौ । मार्जने । मांजना॰ इ॰भा॰ ॥ मार्जनम् । मृजू॰ । मृजूशौ चालङ्करणयोर्वा । चुरादि । ण्यास श्रन्थोयुच् ॥ मुरजध्वनौ ॥

मार्ज्जनी । स्त्री॰ सम्मार्जन्याम् । शो धन्याम् । सोहनी॰ इ॰भा॰ ॥ मार्ज्यतेऽनया । मृजू॰ । करणे ल्युट् । वृद्धि॰ । ङीप् ॥

मार्ज्जनीय : । त्रि॰ सङ्करे मयक रे ॥ मार्ज्जितुयोग्य । अनीयर् ॥

मार्ज्जार । पु॰ खट्टाशी । रक्तचित्र कै ॥ बोलौ । विडाले । चस्य स्पर्शनेदोषोयथा । अभोज्यसूति काशण्ढमारजाराखुश्वकुक्कुरान् । पतितापविद्धचण्डालमृतहाराश्चध र्मवित् । सस्पृश्यशुध्यतेस्नाना दुदक्यायामशूकरौ ॥ मार्ष्टिमुखम् । मृज॰ काशिमृजिभ्यांचि दित्यारन् । मृजेर्वृद्धि । मारि

भाषिकमार्जारीयथा । दृश्यार्थजर तेयश्चतप्यतेयजतेतथा । नरपचार्थं मुद्यक्तोमार्जार परिकीर्त्तित ॥

मार्ज्जारक । पु॰ मयूरे । सिताप ङ्गे ॥

मार्ज्जारकरणम् । न॰ रतबन्धान्तरे ॥ यथा । प्रसारितैपाणिपादेशय्यायां स्त्रिमुखोरसि । उन्नताया स्त्रिया: कण्ठ्यामार्ज्जारकरणं विदु ॥

मार्ज्जारकर्णिका । स्त्री॰ चामुण्डादे व्याम् । चर्म्ममुण्डायाम् ॥

मार्ज्जारकर्णी । स्त्री॰ चामुण्डायाम् ॥

मार्ज्जारगन्धा । स्त्री॰ मुद्गपर्णीविशे षे ॥

मार्ज्जारगन्धिका । स्त्री॰ मुद्गपर्ण्याम् ॥

मार्ज्जारलिङ्ग । त्रि॰ वैडालव्रति कै ॥

मार्ज्जारी । स्त्री॰ मार्ज्जारस्त्रियाम् ॥ कस्तूर्याम् ॥ जन्तुविशेषे । पूतिका याम् । गन्धचेलिकायाम् । गन्ध गोकुला॰खाटाशी॰इ॰गौ॰देशभा षा ॥

मार्ज्जारीय । पु॰ मार्जालीये ॥

मार्ज्जाल । पु॰ मार्जारे ॥

मार्ज्जालीय । पु॰ शूद्रे ॥ विडाले ॥ कायशोधने ॥ मार्ष्टि । मृजू॰ । आचतिमृजेरालच्, बालआलीय च इतिसूत्रे रालयच् ॥

मार्ज्जित । त्रि॰ कृतमार्ज्जने । मृज क्त ॥

मार्ज्जिता । स्त्री॰ रसालायाम् । शिखरिण्याम् ॥ त्रि॰ शोधिते ॥ मार्ज्यतेस्म । मृजूशौचालङ्कारयोः । क्त । टाप् ॥

मार्त्तण्ड । पु॰ तरणौ । सूर्ये ॥ मृताण्डेभव । शकन्ध्वादि ॥ क्रोडे । शूकरे ॥

मार्त्तण्डवल्लभा । स्त्री॰ सूर्यपत्न्याम् । आदित्यभक्तायाम् ॥

मार्त्ताण्ड । पु॰ सूर्ये । मृताण्डेभव । अण् । क्रोडे । भूदारे ॥

मार्त्तिक । पु॰ शरावे ॥ त्रि॰ मृत्तिकारचिते । मृत्तिकायाविकार । तस्यविकारइत्यण् ॥

मार्द्दङ्गम् । न॰ पत्तने ॥

मार्द्दङ्गिक । त्रि॰ मौरजिके । मृदङ्गवादके । मृदङ्गवादनशिल्पमस्य । शिल्पमितिठक् । अत्र॰मृदङ्गवादने॰प्रकृतेर्लक्षणा । मुख्यार्थवृत्तेस्त्वनभिधानात् ॥

मार्द्दव । पु॰ वर्णसङ्करजातिविशेषे । न॰मृदुतायाम् । परदुःखप्रदर्शनतपीडत्वे ॥ अक्रूरत्वे । मृदुपर्श्वादिकातिच्छपिशिष्यादि पु॰ष्यञ्भावपादिव्यतिरेकेणवो भावलत्त्व । चित्ताकाठिन्ये । मृदोर्भाव । इगन्तश्चेत्यण् ।

मार्द्वीकम् । न॰ मधुनि । द्राक्षामद्ये ॥ मृद्वीकाद्राक्षा॰तस्याविकार । तस्यविकारइत्यण् । अनुदात्तादेरञ् वा ॥

मार्ष । पु॰ मारिषशाके ॥ नाट्योक्त्यार्य्ये ॥ मर्षणात्सहनात्॰मार्षः ॥

मार्षिका । पु॰ मारिषशाके ॥

मार्ष्टि । स्त्री॰ प्रोञ्छनादिनाङ्गस्य निर्म्मलीकृतौ । मार्ज्जनायाम् ॥ मार्ज्जनम् । मृजूशुद्धौ । मृजूशौचालङ्करणयोर्वा॰चुरादि । क्तिन् । तितुत्रेतिनेट् । णिलोप ॥

माल । पु॰ उन्नतभूतले॰ध्वर्वे । म्लेच्छजातिविशेषे ॥ यथा । मालाभिल्ला . किराताश्च सर्वेपिम्लेच्छजातय ॥ देशविशेषे ॥ सच॰ मेदिनीपुरप्रदेशे मालभूमित्वेनख्यात ॥ न॰ कपटे ॥ वने ॥ उन्नतभूतले ॥ ध्वर्वे । माति । मामाने । अच्चीन्द्रायवज्रविप्रकुत्रचुत्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामाला । इतिरन् । निपातनाल्लत्वम् ॥

मालक । पु॰ निम्बवृक्षे । मलते । मलधारणे । ण्वुल ॥ न॰ स्थलपद्मे ॥

मालका । स्त्री॰ माल्ये ॥

मालकौश । पु॰ कौशिके । रागवि

ध्वेनिंत्य माखसीसामनोहरा ॥ अपिच । गान्धारीदीपिकाचैवक ल्याणीपूरवीतथा । धन्नवारीका नडाचगौरीकेदारपाहिडा ॥ माध वीमालसीनाटीभूपालीसिन्धुडात था । सायान्हेरागिणीरेता । प्रगा यन्तिचतुर्द्दश ॥

माला । स्त्री॰ स्रजिपुष्पादिदामनि । माल्ये ॥ मूर्द्ध निन्यस्तपुष्पादिदा मनि ॥ ग्रेव्याम् । पङ्क्तौ ॥ गला भरणे ॥ पृक्कायाम् ॥ मल्यते । मलधारणे । घञ् । टाप् ॥ मां॰ लक्ष्मीशोभांबालाति । ला॰ । वा तोनुप तिकोवा ॥ यद्वा । माति । मामाणि । कल्प्रेन्द्रायेत्यादिना॰ रन् । निपातनाल्लत्वम् ॥ माषा वृत्तविशेषे ॥ तल्लक्षणोदाहरणे यथा । विजवरनवगणमिहकुरुतद नुरगणमपिकलय कमलमुखिभव तिललितमपिकर्णं बच्छेषे । अप रदल गाथायामालावृत्तविचित्र त त् ॥ यथा । खरनखरमुखदलित दितितनयकठिनहृदयरुधिरनिव हभवदभिनवसुखितमानसोवन्या त् । भवद शोनरसि शोदिविषलु मह्योपसङ्घात ॥ लघ्वादिविकाले । ऽ ॥ पु॰ जपसाधनभूतायाम् । शुष्णनिकायाम् ॥ सात्रिविधाय था । मालातुत्रिविधादेविवर्णायपर्व

भेदतद्वतिमक्षसूत्तम् ॥

मालाकण्ठ । पु॰ अपामार्गे ॥

मालाकन्द । पु॰ कन्दविशेषे । वा विलकन्दे । त्रिशिखदलायाम् ॥

मालाका । स्त्री॰ मालायाम् ॥

मालाकार । पु॰ वर्णसङ्करजाति- विशेषे । मालिके । वनार्वके । पु ष्पाजीविनि । मालो॰इ॰भा॰ ॥ अ यन्तुशूद्रायांविश्वकर्मणोजातइति ब्र॰वै॰पु॰ ॥ तैलिक्यांकर्मकारा- न्मालाकारस्यसम्भवः । इ॰परा- शरपद्धति । मालांकरोति । डुकृ ञ॰ । कर्मण्य ण् ॥

मालाग्रन्थि । पु॰ मालादूर्वायाम् ॥

मालातृणम् । न॰ भूस्तृणे ॥ अति- च्छत्रतृणे ॥ मालाकाराणितृणानि॥

मालादीपकम् । न॰ अर्थालङ्कारविशे षे ॥ तल्लक्षणादिकयथा । मालादी पकमाद्यञ्चेद्यथोत्तरगुणावहम् । पू र्वेणपूर्वेणवस्तुनोत्तरमुत्तर चे दुपक्रि यते॰तन्मालादीपकम् । यथा । स ङ्ग्रामाङ्गणमागतेनभवताचापेस- मारोपितेदेवाकर्णयेनयेनसहसा यद्यत्समासादितम् । कोदण्डेन शरा शरैररिशिरस्तेनापिभूमण्डलं तेन त्वं भवताचकीर्त्तिरतुला- कीर्त्यांचलोकत्रयम् ॥

मालादूर्वा । स्त्री॰ दूर्वाविशेष । ग्रन्थि लायाम् । पर्वबल्ल्याम् । गोठि-

याटूवद्०भा० ॥

मालाधर । पु० वर्णवृत्तविशेषे ॥ द्विजवरगणान्वितोगजपति पुनस्तूर्यवान्० करतलपरिस्फुरत्कनककुण्डलेमान्वित । सुरपतिगुरुश्रियापरिगत समतात्सखे०जयतिभुविवृत्तभूपतिरयन्तुमालाधर ॥ यथा। क्वचिदपिवयस्ययासङ्गविमोदमातन्वती० कतिपयकथारसैर्मयतिवासरौयांरुनम्। सुभगतवकामिनीसमधिगम्यसायामिनी ममुभवतिभामिनी मदनवेदना मत्त त ॥

मालारिष्टा।स्त्री० पाच्याम्। मरकतपत्र्याम् । हरितलतायाम् ॥

मालालिका । स्त्री० पृक्कायाम् ॥

मालाली । स्त्री० पृक्कायाम् ॥

मालि । पु० सुकेशराक्षसपुत्रे ॥

मालिक । पु० मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् ॥ मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री० सप्तलायाम् ॥ पुत्र्याम् ।। ग्रीवालङ्करणे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री० मालिकयोषिति । मालिन्० इ० भा० ॥ टिड्ढेति ङीप् ॥

माली । पु० मालावति॥ मालास्यास्य ।सुखादिषु०मालाचेपे०इतिपाठादिनि ॥ व्रीह्यादित्त्वाद्वा० इनि । सतुर्वेपाठस्यचापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री० मालकायाम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालाअस्ति अस्याः अस्यावा । व्रीह्यादित्वादिनि । ङीप् ॥ यद्वा। मलती। मलधारणे। णिनि । ङीप् । अग्निशिखायाम् ॥ दुरालभायाम् ॥ अतिशक्करीछन्दो १५ भेदे ॥ यथा । ननमययुतेय मालिनीभोगिलोकैः ॥ मृगमदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डावद्धधम्मिल्लपाशा। अनृजुनिहितमसैव शमुतुक्काणयन्तीध्धुतमधुरिपुलीलामालिनीपातुराधा ।।

मालिन्यम् । न० मलिनत्वे ॥

मालाय । त्रि० मालायाभवे।। दृषाच्च ॥

मालु । स्त्री० पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधान । पु मातुलाहौ। चित्रसर्पे ॥ मालुरोषधी०तत्रधानमस्य ॥ महापद्मे ॥

मालुधानी । स्त्री० लताम्बरे ॥

मालूक । पु॰ कृष्णार्जके ॥

मालूर । पु॰ ग्रन्थिलव्यवृक्षे । श्रीफले । बिल्वे । बेल॰ हि॰ भा॰ ॥ मालक्ष्मीं परेषां लुनाति । लूञ्छेदने । बाहुलकादूरक् ॥ कपित्थवृक्षे ॥

मालेया । स्त्री॰ स्थूलैलायाम् ॥

माल्यम् । न॰ कुसुमे । पुष्पे ॥ मालायां साधु माल्य पुष्पमिति विवरणम् यथा । यथाचाल्पे ममाल्पे नवासित तिलसर्षपम् । मनुस्मृतिस्तकगन्ध तद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्द्धिन्यस्तपुष्पदामनि ॥ केशकलापादिष्वि माल्यधारणनिषेधो यथा । नविगर्ह्यकथां कुर्याद्बहिर्माल्यं नधारयेत् । गवांचयानं पृष्ठेन सर्वथैव विगर्हितम् ॥ रत्नमयस्त्रि ॥ मालामात्रे ॥ मल्यते । मल धारणे कर्मणि ण्यत् ॥ यद्वा । मालैव । चतुर्वर्णादित्वात्ष्यञ् ।

माल्यपुष्प । पुं॰ शणवृक्षे ॥

माल्यपुष्पिका । स्त्री॰ शणपुष्प्याम् ॥

माल्यवान् । पु॰ पर्वतविशेषे । मेरुत प्राच्यामानीलनिषधयाम्योत्तरायतौ द्विसहस्रयोजनविस्तीर्णे केतुमालेलावृतवर्षयोर्मर्यादाद्रौ ॥ माल्याकारतास्यास्तिमतुप् ॥ राक्षसभेदे ॥

माष । पु॰ लेटात्तीवरकन्यायामुत्पन्ने॰ सङ्करजातौ ॥

माषवी । स्त्री॰ मल्लयाषायाम् ॥

माषब्दिक । त्रि॰ प्रतिषेद्धरि । निषेधके ॥ माशब्द इतियथाहस । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥

माष । पु॰ व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोजने । माष॰ उडद॰ हि॰ भा॰ ॥ माषस्यफलमाष । अवयवेत्रप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामिति लुपि॰ युक्तवद्भाव ॥ माषोगुरुस्वादुपाक स्निग्धोरुच्योऽनिलापह । उष्ण सन्तर्पणोबल्य शुक्रलोवृष्य पर ॥ भिन्नमूत्रमलस्तन्यमेद पित्तकफप्रद. । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा कफपित्तकरंदधि । कफपित्तकरामत्स्या वृन्ताककफपित्तकृत् ॥ शूलकमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्विकृष्णलैसमधृते विज्ञेयोरूप्यमाषक ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

द्यकान्तरे १० गुञ्जापरिमाणम् । यथा। गुञ्जाभिर्दशभिर्माष माषो माषचतुष्टयमितिवैद्यकपरिभाषा । मासादूति भाषा। ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम्। यथा। पलन्तुलौकिकैर्मानैः साष्टरक्तिद्विमाषकम्। तोलकश्चितयञ्चेयज्योतिर्ज्ञैः स्मृतिसम्मतमितितिथ्यादितत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम्। एतेनमाषकपरिमाणद्वादशरक्तिकभवति॥ मूर्खे॥ त्वग्दोषभेदे। मस्यादूति भाषा॥

माषक । पु॰ पञ्चरक्तिकपरिमाणे॥ गुञ्जा पञ्चाद्यमाषकद्रूत्यमर॥ दृशार्द्धगुञ्जप्रवदन्तिमाष माषाह्वयैः षोडशभिश्चकर्षमितिलीलावतीच॥ षड्भिस्तुरक्तिकाभिः स्यान् माषकोहेमधान्यकौ। माषोगुञ्जाभिरष्टाभिः सप्तभिर्वाभवेत्क्वचिदितिभावप्रकाश॥

माषपर्णी। स्त्री॰ महासहायाम्। ऋष्यपुच्छौषधौ। काम्बोज्याम्। वनमाषे। माषाणीति॰ गौ॰दे॰मा॰॥ माषपर्णीहिमातिक्ताद्रूक्षाशुक्रबलासकृत। मधुराग्राहणीशोथवातपित्तज्वरास्रजित्॥

माषवर्द्धक । पुं॰ स्वर्णकारे॥

माषवटी स्त्री॰ वटिकाविशेषे। उड़दी॰ बड़ी॰ इ॰ भा॰॥ माषाणापिष्टिकाहिङ्गुलवणाद्रकसंस्कृता। तयाविरचितावस्त्रेवटिकासाधुशोषिता॥ तलितास्तप्ततैलेतास्थवासुप्रलेहिता । वटकस्यगुणैर्युक्तासातव्यारुचिदाभृशम्॥

माषश । अ॰ प्रतिमाषम्॰ वृत्त्यर्थे॥

माषाद । पु॰ कच्छपे॥ त्रि॰ माषभक्षके॥

माषादि । पु॰ शमीधान्यगणे। माषादियस्तगणविशेषस्य। माषोमुद्गोराजमाष कुलत्थस्चणकस्तिल। काकाण्डश्चीवरदूतिशमीधान्यगण स्मृत॥

माषीणम्। न॰ माषचेत्रे। माष्ये॥ माषाणांभवन क्षेत्रम्। विभाषातिलमाषोमाभङ्गाणुभ्यद्रूतिपक्षे खञ्॥

माषेगुडरी। स्त्री॰ कुगुडरे॰ कुन्दरे॰ सेफ॰ इतिहिमप्रवर्तप्रसिद्धेखाद्यद्रव्ये॥

माष्यम्। न॰ माषीणे। माषक्षेत्रे॥ माषाणांभवनम्क्षेत्रम्। विभाषातिलमाषेतिपक्षेयत्। माषेभ्योहित वा। खलयवमाषेत्यादिना यत्॥

मा । पु॰ चन्द्रे॥ मासे॥ मिमीते आनन्दमितिमा। बाहुलकात्के

वलादध्यसि ॥

मास । पु० श्रामे । वर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध शुक्लादि कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तंशुक्लादि । कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्यन्तं कृष्णादि ॥ माश्चन्द्रस्तस्यायम् । अण् । सौरादिषु । यथा । मासश्चतुर्विध प्रोक्त सावनादिप्रभेदत । त्रिंशद्दिनात्मकस्तत्रसावन . परिकीर्तित ॥ एकस्मात्सङ्क्रमादासङ्क्रान्ति सौरोभिधीयते । शुक्लपक्षादिकृष्णान्तश्चान्द्र स्यादन्यथापिवा ॥ सप्तविंशतिनक्षत्राणांचारोमासउच्यते ॥ तत्र । आब्दिकेपितृकृत्येचमासश्चान्द्रमस स्मृत । विवाहादौस्मृत सौरोयज्ञादौसावनोमतइतिविवेक ॥ मस्यते परिमीयते चन्द्रवृद्धिक्षयाभ्याम् । मसीपरिणामे । कर्मणिघञ् ॥

मासजात । त्रि० जननादूर्ध्वंयस्यमासोगतस्तत्र ॥ तत्रैवव्यवहारात् । मासोजातस्ययस्य स । कालाः परिमाणिनेतिसमास ॥

मासज्ञ । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम । पु० मासस्यपूरणे ॥ नित्यं शतादीतिडटस्तमडागम । अतएवज्ञापकात्डट् ॥

मासनम् । न० सोमराज्याम् ॥

मासमान । पु० वत्सरे ॥ न० मासपरिमाणे ॥

मासर । पु० निस्रावे । भक्तसमुद्भवे मण्डे । माड० पीच० दू० भा० ॥ मास्यते । मसीपरिणामे० ध्यन्त । बाहुलकादरन् ॥ यद्वा । मा० श्री . सरत्यत्र । सृ० । पुंसीति घ ।

मासवर्त्तिका स्त्री० सर्पपोषधिविशेषे ॥

मासान्त । पु० अमावास्यायाम् ॥ सङ्क्रान्तिदिने ॥

मासिकम् । न० अन्वाहार्ये । दर्शश्राद्धे ॥ पितॄणांमासिकं श्राद्धमन्वाहार्यं विदुर्बुधा । तच्चामिषेणकर्त्तव्यं प्रशस्तेनप्रयत्नत ॥ मासेभवम् । कालाट्ठञ् ॥ प्रेतस्य० संवत्सराभ्यन्तरे० प्रतिमासं मृताहेक्रियमाणेश्राद्धे ॥ मासोदेवताऽस्यवा । कालेभ्योभववत ॥ ऋणे ॥ मासेदेय । देयमृणे । ठक् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासेभववा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वाद्यण् ॥

मास्म । अ० अलम् । वारणे ॥ माच स्मच । अनयो समाहार ॥

माहाकुल । त्रि॰ महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ्खञाविति अञ् ॥

माहाकुलीन । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादिति पक्षे खञ् ॥

माहाजनिक । त्रि॰ महाजनायहिते ॥ महांश्चासौ जनश्च । महाजनाट्ठञ् बहुव्रीहिस्तु । महाजनीय ॥

माहात्म्यम् । न॰ महात्मत्वे ॥ प्रभावे ॥ महात्मनोभाव । ष्यञ् ॥ अनतिशयैश्वर्य्ये । विश्वसृष्ट्यादिकर्तृत्वे प्यविकारित्वे । शुभाशुभकर्म्मकारयितृत्वे प्यवैषम्ये । बन्धमोक्षादिफलदातृत्वे प्यसङ्गौदासीन्ये ॥

माहाराजिक । पु॰ गणदेवताभेदे । महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञिति॰ठञ् ॥ महाराजोभक्तिर॰ स्य । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री॰ पाशुपतव्रतसम्बन्धिन्यापद्धती ॥

माहिनम् । न॰ राज्ये ॥ महतेऽस्मिन । मह॰ महेरिनण्चेतीनण् त्रि॰महनीये ॥

माहिर । पु॰ देवराजे । इन्द्रे ॥

माहिषम् । न॰ महिष्याधर्म्मे । षण्महिष्यादिभ्य ॥ त्रि॰ महिषसम्बन्धिनि । महिषोपजीविनि । महिष्या॰ महिषस्यवा॰इदम् वाण् ॥

माहिषमस्तक पु॰ शालिप्रभेदे ॥

माहिषिक । पु॰ महिषाजीवके ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यते नारीयाचस्यादव्यभिचारिणी । तादृशांकामयतिय सवैमाहिषिक स्मृत ॥ भगद्वारोपार्ज्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितधनम् । उपजीवतियस्तस्या सवैमाहिषिक स्मृतइति ॥

माहिष्मती । स्त्री॰ शिशुपालनगर्याम् ॥

माहिष्य पु॰ वर्णसङ्करजातिविशेषे । वैश्यायाम्क्षत्रियादुत्पन्ने ॥ नक्षत्रजीवननृत्यगीतसस्यरक्षणम् माहिष्याणाशुभावृत्ति प्रोक्ताज्योतिषमानसाम्मयम् ॥

माहेन्द्र । पु॰ शुभदण्डविशेषे ॥ रव्यादिवारेषुवायुवरुणयमममहेन्द्राख्यामेकैकदण्डाभवन्ति॰तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । ख्यातवायव्यमासूर्यमावायव्यकलानिधौ । वयमावाकुजेवर्ज्ययामात्रावयस्सुधांशुजे । गुरौवायव्यमावैव॰मावायव्यतयाभृगौ । सूर्यपुत्रे यमावायव्यघटीयुग्मकशु

मिथ । अ॰ अन्योन्यस्मिन् । सहार्थे ॥ रहोर्थे ॥ मेथति । मथ्नमङ्गमे । असुन् । पृषोदरादित्वत् ह्रस्व ॥

मिथि । पु॰ निमिराजपुत्रे । जनके ॥

मिथिला । स्त्री॰ जनकपुर्याम् ॥ विदेहायाम् ॥ देशविशेषे । तैरभुक्ते । तिरहित॰ हि॰ भा॰ प्र॰ ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तैरभुक्ताभिधः स तु ॥ मथ्यन्तेरिपवोऽत्र । मथ विलोडने । मिथिलादयश्चेतीलच् । अकारस्य इत्वनिपातनात् ॥

मिथु । अ॰ द्वाविस्यर्थे

मिथुनम् । न॰ स्त्रीपुंसयोर्युग्मे । द्वन्द्वे । युगले ॥ जुगल॰ जोडी॰ हि॰ भा॰ ॥ द्वयो ॥ सुरते ॥ तनृहस्तमित सुखे ॥ तृतीयराशौ । मिथुने ॥ मिथुनलग्नजस्य फलं यथा । मिथुनोदयसञ्जातो मानी स्वजनवत्सलः । त्यागी भोगी धनी कामी दीर्घसूत्री रिमर्दनः ॥ मेथति । मिथुसङ्गमे च । क्षुधिपिशिमिथिभ्य कित् इत्युनन् उपसर्गविशिष्टधातौ । सम्बन्धे ॥

मिथुनाधिप । पु॰ बुधग्रहे ॥

मिथो । अ॰ रहसि ॥ सहार्थे । अन्योन्यस्मिन् ॥ मेथति । मेथृ॰ । बाहु लकात् डी । पृषोदरादित्वात् ह्रस्व ॥

मिथ्या । अ॰ अनृते । वितथे ॥ प्रागभावयुतत्वे मध्य विच्छेदरहितत्वं मिथ्यात्वमिति मिथ्यालक्षणम् ॥ यदसत्तासमानं तन्मिथ्यात्वप्रगल्भादिवदितिच ॥ स्त्री॰ अधर्मपत्न्याम् ॥ यथा । अधर्मपत्नीमिथ्यासासर्वधूर्तप्रपूजिता । ययाविना जगत्सर्वमुच्छिन्नं विधिनिर्मितम् ॥ मिथ्ययाविना भूतसमुदाय रूपमुच्छिन्नं भवति । मिथ्याभावचाभावे भूतलक्ष्मा भावात् इत्यर्थ । सत्यं चाद्यं नाशावच्छेता यासूक्ष्म रूपिणी । सर्वावयवरूपा च द्वापरे च सहता ॥ कलौ महाप्रगल्भा च सर्वत्र व्यापिकावलात् । कपटेन सम भ्राता भ्रमत्य गृहे गृहे इति ॥ मयते । मये॰ । अच् न्यादित्वात् साधु ॥

मिथ्याचार । वि॰ पापाचारे ॥ स त्वशुभभाविफलायोग्यतत्वात् ॥

मिथ्याज्ञानम् । न॰ भ्रमदायकपूर्वकं॰ अन्यस्यान्यात्मताभासे ॥

मिथ्यादर्शनम् । न॰ शास्त्रोपपादितवाह्येतदर्शने ॥

मिथ्यादृष्टि । स्त्री॰ धर्मफलापवादरूपायाम् । नास्तिकतायाम् । मिथ्येत्युपपदस्थे॰ तद्विषयिणीदृष्टिर्ज्ञानम् । असत्यदर्शने ॥

मिथ्याध्यवसिति । स्त्री॰ मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न॰ शपथे ॥

मिथ्याप्रयुक्त । त्रि॰ यदर्थंप्रतिपादनायप्रयुक्तस्ततोऽर्थान्तर स्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोग । पु॰ अभ्याख्याने । शत मेधारयसीत्यादिमिथ्योद्भावनरूपे॰ मिथ्यापवादे ॥ मिथ्याचासावभियोगश्च ॥

मिथ्याभिशंसनम् । न॰ अभिशापे । । स्वर्णंस्तेय त्वयाकृतमित्यादिमिथ्यास्त यादिसाधनरूपे मिथ्यारोपवाक्ये ॥ अभिशंसे भावे ल्युट् ॥

मिथ्याभिशाप । पु॰ मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तुसिंहे चन्द्रस्यदर्शनम् । मिथ्याभिशापकुरुते नपश्ये त्तवत तत ॥

मिथ्यामति । स्त्री॰ भ्रान्तौ । भ्रमे ॥ मिथ्याचासौमतिश्च ॥

मिथ्याविनीत । त्रि॰ कपटेनविनयिनि ॥

मिथ्यासाक्षी । त्रि॰ कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्य । उक्तेपिसाक्षिभि साक्ष्येयद्यन्ये गुणवत्तमा । द्विगुणावान्यथाब्रूयु कूटा स्यु पूर्वसाक्षिण ॥

मिथ्योत्तरम् । न॰ चतुर्थोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षण यथा । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तर व्यवहारत ॥ तच्चतुर्विध यथा । मिथ्यैतम्॰नाभिजानामि ममतत्रन सन्निधि । अजातश्चास्मितत्काले॰ इतिमिथ्याचतुर्विधम् ॥ इतिव्यवहारतत्त्व ॥

मिथ्योपलब्धि । स्त्री॰ मायागन्धर्वनगरादिज्ञाने ॥ मिथ्याचासावुपलब्धिश्च ॥

मिद्धम् । न॰ चिन्ताभिसङ्कल्पे ॥ आलस्ये ॥ चित्ते ॥ निद्रायाम् ॥

मिन्मिन । त्रि॰ सानुनासिकवाग्विशिष्टे । गुन्गुना॰ इ॰ भा॰ ॥ खोना॰ इ॰ गौ॰ दे॰ भा॰। मीमणा इ॰ पर्वतीयभाषा ॥ अस्यनिदानन्तु । आवृत्यवायु सकफोधमनी शब्दवाहिनी । नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ॥

मिमङ्क्षु । त्रि॰ मङ्क्तुमिच्छौ ॥ मज्जे सन्नन्तादुप्रत्यय ॥

मिमन्थिषु । त्रि॰ मथितुमिच्छौ ॥ मथे सन्नन्तादु ॥

मिमान । त्रि॰ मानङ्कुर्वाणे ॥ माङोलट शानजादेश । श्लाविति द्विर्भावे ॥

मिम्मिण । त्रि॰ )

मिम्मिन । त्रि॰ ) मिन्मिने ॥

मिसि । स्त्री॰ मधरायाम् ॥ जटामांस्याम् ॥ शतपुष्पायाम् ॥ अज मोदायाम् ॥ मस्यति । मसीपरिणामे । सर्वधातुभ्यइन् । बाहुलकादत स्थानेइ ॥ उशीर्याम् ॥

मिसी । स्त्री॰ मिसी । तपस्विन्याम् । जटामांस्याम् ॥ मस्यति । मसी॰ । इन । कृदिकारादितिङीष् । पृषोदरादि ॥

मिहिका । स्त्री॰ अवश्याये । नीहारे । तुषारे । मेहति । मिहसेचने । कुन् शिल्पिसञ्ज्ञयोरितिकुन् ॥

मिहिर । पु॰ विकर्त्तने । अर्के । मार्त्तण्डे । सूर्ये ॥ मेघे ॥ बुद्धे ॥ मेहति । मिह॰ । इषिमदिमुदिखिदीतिकिरच् ॥ वायौ ॥ वृद्धे ॥

मिहिराण । पु॰ जगद्योनौ । शिवे ॥

मीढ । त्रि॰ मूत्रिते । मिह्यतेस्म । मिह॰ । क्त ॥ सिक्ते ॥

मीढुष्टम । पु॰ शिवे ॥

मीढ्वान् । पु॰ शिवे ॥ मीढ्वांसौ॰मीढ्वांस इत्यादि ॥

मीत । त्रि॰ हृते ॥ मीयतेस्म । मी अहिंसायाम् । गत्यर्थेतिकर्त्तरिकर्म्मणिवाक्त ॥

मीन । पु॰ मत्स्ये ॥ राशिविशेषे । चन्द्रभे । यत्र जातस्य फल यथा । मीनलग्ने समुत्पन्नो रत्नकाञ्चनपूरित । अल्परोमा महाप्राज्ञो दीर्घकालपरीक्षक । मीनाति॰मीयते वा । मञ्॰ फेनमीनाविति निपातित ॥ भगवतीविष्णो प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपा च पुरुषस्तु महेश्वर । एवं प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश ॥ कृष्णरूपा कालिकास्याद्रामरूपा च तारिणी । बगलाकूर्म्ममूर्त्ति स्यान्मीनोधूमावतीभवेत् । छिन्नमस्ता नृसिंह स्याद्वराहश्चैव भैरवी । सुन्दरी जामदग्न्य स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्यान्मातङ्गीकल्किरूपिणी । स्वयभगवतीकालीकृष्णस्तुभगवान्स्वयम ॥ स्वयञ्चभगवान कृष्ण कालीरूपीभवद्व्रजे ॥

मीनकेतन । पु॰ प्रद्युम्ने । कन्दर्पे ॥ मीनशब्दोजलचरोपलक्षणार्थ । मीनोमकर केतनंध्वजोयस्यस ॥

मीनगन्धिका । स्त्री॰ जलाशये ॥

मीनघाती । पु॰ बके ॥ त्रि॰मत्स्यघातके ॥

मीननेत्रा । स्त्री॰ गण्डदूर्वायाम् ॥

मीनर । पु॰ जलरूपे । मकरे । अतिदष्टके ॥

मीनरङ्क । पु॰ पक्षिविशेषे । मत्स्याशने ॥

मीना । स्त्री॰ उषाकन्यायाम् । कश्यपस्यभार्यायाम ॥

मीनाक्षी । स्त्री० देवीविशेषे ॥ तत्स्था
ने । चिदम्बरे । हालास्ये । मत्स्या
क्ष्यायाम् । मत्स्याक्षी० इ० भा० ॥
गण्डदूर्वायाम् ॥ कुवेरकन्यायाम् ॥
मीनाण्डी । स्त्री० शर्करायाम् ।
मीनाधिप । पु० बृहस्पतौ ॥
मीनाम्बोष्ठ पु० । ददंगवे व्यञ्जनप्र
भेदे । सा नमीनव्यञ्जनेखञ्जन ॥
मीमांसक । पु० सिद्धान्तिनि । पू
र्वोत्तरमीमांसाशास्त्राभिज्ञे । मी
मांसामधीतेवेत्तिवा । क्रमादिभ्यो
वुन् ॥ पूर्वमीमांसासूत्रकर्त्ताजैमि
नि । वृत्तिकर्ताकुमारभट्ट । भा
ष्यकर्त्ताशवरस्वामी । प्रभाकर कु
मारभट्ट च्छात्र । सएवगुरुत्वेन
भण्यते । तन्मतगुरुमतम् । तच्छि
ष्य प्रभाकरा ॥ उत्तरमीमांसा
सूत्रकर्त्तावेदव्यास । तेषाभाष्यक
र्त्ताशङ्कराचार्य । वार्त्तिककर्त्तासु
रेश्वराचार्य ॥ मीमांसकोजैमिनौ
शैवेदान्तीब्रह्मवादिनि । वैशेषिके
स्याद्यौलूक्य सौगत शून्यवादि
नि ॥ नैयायिकस्त्वाक्षपाद स्या-
त्स्याद्वादिकआर्हत । चार्वाकलौ
कायतिकौसत्कार्येसांख्यकापि-
लौ ॥
मीमांसा । स्त्री० वेदविचारणे ॥ वि-
चारणायाम् ॥ साद्विधा०पूर्वमीमां
सा०उत्तरमीमांसाचेतिभेदात् । त
त्रपूर्वमीमांसाद्वादशा । ध्यायात्मि
का०जैमिनिप्रणीताव [illegible] द्वादशलक्षणी
धर्मनिरूपिका । अस्यामष्टकागीतानि-
लोकव्यवहारनियमार्थमनुयाज्ञव-
ल्क्यादिभिर्वहूनिधर्मशास्त्राणिप्रणी
तानि ॥ उत्तरमीमांसातु-चतुरध्या-
यात्मिकावेदव्यासप्रणीता०ब्रह्मनि
रूपिकावेदान्तशास्त्रत्वेनप्रसिद्धा ॥
धर्मेप्रमीयमाणेहिवेदेनकरणात्मना।
इतिकर्त्तव्यताभाग मीमांसापूरयि
ष्यति ॥ प्रमाणादय प्रसङ्गात्तादा
दशपदार्था क्रमाद्द्वादशानामध्या
यानांविषया । यथा । धर्म्मोद्यात्-
मलक्षणाव्युत्पाद्यस्तत्त्वलक्षणे । प्र
माणभेदशेषत्वप्रयुक्तिक्रमसञ्ज्ञका ।
अधिकारोतिदेशश्चसामान्येनविशे
षत । ऊहाबाधस्तत्रञ्चप्रसङ्गश्चो
दित क्रमात ॥ द्वादशाध्यायोपेत
स्यशास्त्रस्यधर्म्मो वषय । प्रमाणाद
ये ध्यायानांविषया तत्रप्रथमाध्या
येविध्यर्थवादादिरूप धर्मप्रमाणनिरू
पितम् । १ । द्वितीयेयागदानादिक
र्मभेद । तृतीयेप्रयाजादीनादर्शपू
र्णमासार्थत्वेनतच्छेषत्वम् । चतुर्थेगो
दोहनस्यपुरुषार्थत्वप्रयुक्त्यानुष्ठानन
तुक्रत्वर्थत्वप्रयुक्त्येत्येवमादय । पञ्च
मेक्रमनियतिविधेयत्वादय । षष्ठे
कर्त्तुरधिकारोमान्यादेरित्यादय ।
सप्तमेसमानमितरच्छ्येनेनेत्यादिप्र

ऋग्वचनेनाग्निष्टोमादिनाभ्यनु-
मितवचनेनचसामान्यतीतिदेश ।
अष्टमेसौर्य्यंचरु निर्वपेदित्यचनिवा-
पस्तद्गितेनदेवतानिर्देश । ० एकदे
शतत्त्वमौषधद्रव्यकत्त्वमित्यादिलि
ङ्गैराग्नेयपुरोडाशीतिकर्त्तव्यताना
न्यत्र स्थे वमादिविशेषतोतिदेश ।
नवमेप्रकृतावग्नयेजुष्ट निर्वपामीति
पठितेमन्त्रे ० विकृतौसौर्य्यंचरावग्नि
पदपरित्यागेनसूर्य्यंपदप्रक्षेपेणसूर्य्याय
जुष्ट निर्वपामीत्यूह्य वमादिरूह ।
दशमेकृष्णलेषुचोदकप्राप्तस्यावघात
स्यवितुषीकरणासम्भवेनलोपइत्यादि
वमादिर्वाध । एकादशेबहूनामा-
ग्नेयादीनाप्रधानानासकृदनुष्ठितेन
प्रयाजाद्यङ्गेनोपकार इत्यादित
न्त्रम । द्वादशेप्रधानस्यपशोरुपका-
रायानुष्ठितप्रयाजाद्यङ्गेनपशुप्रङ्गपु
रोडाशस्यापकारइत्यादिप्रसङ्ग ॥
विस्तर शास्त्रे द्रष्टव्य ॥

मीमांस्य । त्रि० विचार्य्ये ।

मीर । पु० समुद्रे । पानीये । सो
मनि ॥ पर्वतैकभागे ॥ मिनोति ।
डुमिञ् प्रक्षेपणे । शुसिचिमीना-
दीर्घश्चेतिक्रन् । ० मत्स्यजातिभे-
दे ॥ यथा । पद्मखाना समुमीरा
नयष्याहामहावका ॥

मीलनम् । न० चक्षुर्भिरावरणे ॥ च
न्द्राकारविशेषे ॥ मीलनवस्तुनापव

[illegible] रणम् ।

मीलित । त्रि० अप्रफुल्ले । सङ्कुचि-
ते ॥ निद्राण मुद्रिते ॥ न० अल
ङ्कारविशेषे ॥ यथा । समेनलक्ष्मणा
वस्तुवस्तुनायन्निगूह्यते । निजनाग
न्तुनावापितन्मीलितमितिस्मृतम् ॥
सहजमागन्तुकवाकिमपिसाधारण
यल्लक्षण तद्द्वारेणकिञ्चित्केनचिद्व
स्तुस्थित्यैववलीयसायातिरोधीय-
तेतन्मीलितमितिद्विधास्मरन्ति । क्र
मेणोदाहरणम् । अपाङ्गतरलेदृशौ
मधुरवक्रवर्णागिरोविलासभरमन्थ-
रागतिरतीवकान्तमुखम् । इति
स्फुरितमङ्गकेमृगदृश स्वतो-
लीलयातदत्रनमदोदय कृतपदो
पिसलक्ष्यते । अत्रवक्रतरलतादि-
कमङ्गे लिङ्गस्वाभाविकसाधारण-
च्छमदोदयेनतन्नाप्यैतस्य दर्शनात् ॥
कैकन्दरासुनिवसन्तिसदाहिमाद्रे-
स्त्वत्पातशङ्कितधियोविवशाद्विष-
न्तो । अप्यङ्गमुत्पुलकमुद्वहतासक
म्प तेषामहोवतभियानबधोप्यभि-
न्न ॥ अत्रतुसामर्थ्यादवसितस्य-
शैत्यस्यागन्तुकत्वात्तत्प्रभवयोरपि-
कम्पपुलकयोस्तादृग्प्यम् ० समानता
भयेप्वपितयोरुपलक्षितत्वात्

मीवा । पु० वायौ ॥ उदरकृमौ ॥ मी
वति । मीव् हिंसायाम् । श्रीवयन्त-
ञ्जिहाग्रीवाप्वामीवा : ० इ । तत्क्र

कोजिपातित ॥

मीवर । त्रि० हिंस्रे ॥ मीनाति । मीञ० । छित्वरछत्वरेत्यादिना ष्वरच् ॥

मु । पु० बन्धने ॥ मद्देशे ॥

मुकु । पु० मुक्तौ ॥

मुकुटम् । न० शिरोभूषणे । किरीट ॥ मङ्कतेऽनेनवा । मकिमण्डने । बाहुलकादुटप्रत्ययोधातोरतश्च ॥

मुकुटी । स्त्री० अङ्गुलिमोटने ॥

मुकुटेश्वरी । स्त्री० माकोटस्थानस्थायादेव्याम् ॥

मुकुन्द । पु० विष्णौ । गरुडध्वजे ॥ मुकुमव्ययमोक्षनिर्वाणमोक्षवाचकम । तद्ददातिचयोदेवोमुकुन्दस्तनकीर्त्तित ब्र० ब्र० वै० पु० निधिप्रभेदे ॥ रत्नविशेषे ॥ पारदे ॥ कुन्दुरौ ॥ मुक्तिं ददाति । आलोनुपेतिक । पृषोदरादि ॥

मुकुन्दक । पु० षष्ठिकव्रीहौ ॥ षष्ठिक शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्ठिकइत्याद्या षष्ठिका समुदाहृता ॥

मुकुन्द, । पुं० कुन्दुरौ ॥

मुकुम् । अ० निर्वाणे ॥ भक्तिरसे । प्रेमणि ॥

मुकुर । पु० आदर्शे । दर्पणे ॥ बकुलद्रुमे ॥ कुलालदण्डे । कोरके ॥ मुञ्चतिज्योति । । मुञ्च० । बाहुलकादुरच् ॥ यद्वा । मङ्कते मकि० । मकुरदर्दुरावित्युरच् । नलोपश्च । बाहुलकात्पर्व धातोरुपधायाउकारश्च ॥

मुकुल । पु० न० ईषद्विकासोन्मुखकलिकायाम् । कुड्मले । मुञ्चति कलिकात्वम् । मुचल्मोचणे । बाहुलकादुलक् ॥ आत्मनि ॥ शरीरे ॥

मुकुलित । त्रि० निमीलिते ॥

मुकूलक । पु० दन्तिवृक्षे । निकुम्भे ॥ मङ्कते । मकि० । पिञ्जादित्वादूलच् । स्वार्थेकन् । आगमशासनस्यानित्यत्वान्नुम् । पृषोदरादि ॥

मुक्त । त्रि० मोचिते ॥ उत्सृष्टे । त्यक्ते व्यपगतपाशे । निमुक्तमोक्ष । दिबन्धने ॥ असक्तोऽद्विषश्चमुक्त ॥ निवृत्ताविद्ये । कर्त्तृत्वभोक्तृत्वाद्यध्यासशून्ये । कल्पितवियदादिप्रपञ्चनिरासाधिष्ठाने ॥ अस्यलक्षणमपियथा । कपालवृक्षमूलानिकुचेलमसहायता । समताचैवसर्वस्मिन्नेतन्मुक्तस्यलक्षणम् ॥ अस्यानमस्काराभावोभगवत्पूज्यपादैर्दर्शितोयथा । नामादिभ्य परेभूम्निस्वाराज्येचेत्स्थितोऽद्वये । प्रणमेत्कन्तदात्मज्ञोनकार्यंकर्मयातदितिविद्यारण्यनामकपाणिनिस्थ्रबा

विनिस्थली । परिनिश्चिततत्त्वोय समुक्त कर्मबन्धनात् ॥ नमुक्तिर्जं पनाद्धोमादुपवासशतैरपि । ब्रह्मो वाहमितिज्ञात्वामुक्तोभवतिदेहभृत ॥ आत्मासाक्षीविभ पूर्ण सत्योऽद्वैत परात्पर । देहस्थो पिनदेहस्थोज्ञात्वैव मुक्तिभाग्भवेत् बालक्रीडनवत्सर्वं रूपनामादिकल्पनम् । विहायब्रह्मनिष्ठोय स मुक्तो नात्रसंशयइतिश्रीमद्भानिर्वाणतन्त्रे कुलार्णवसंतौचतुर्दशोल्लास ॥ मुच्यतेस्म । मुच्लृ० । क्त ॥

मुक्तकञ्चुक । पु० निर्मुक्ते । अचिरत्यक्तनिर्मोकेसर्पे ॥ मुक्तः कञ्चुकोयेन ॥

मुक्तचक्षु । पु० सिंहे ॥ त्रि० मुक्तनेत्रे ।

मुक्तबन्धन । त्रि० त्यक्ताभिमाने ॥ त्यक्तपाशे ॥ मुक्तबन्धनयेनयस्य वा ॥

मुक्तरसा । स्त्री० रास्नायाम् ॥ त्रि० त्यक्तरसे ॥

मुक्तसङ्ग । त्रि० त्यक्तफलाभिसन्धौ॥

मुक्तस्वाप । त्रि० त्यक्तनिद्रे ॥

मुक्ता । स्त्री० मौक्तिके । कुन्दरत्ने । मौक्तिके । मोती० हि० भा० प्र० रत्ने ॥ मुच्यतेस्म । मुच्लृ० । क्त. ॥ व्यपगतपाशायां ॥ पुंश्चल्याम् ॥

मुक्ताकलाप । पुं० मुक्ताहारे ॥

मुक्तागारम् । न० शुक्तायाम् ॥ मुक्ताया आगारम्

मुक्तागारा । स्त्री० पुंश्चल्याम् ॥ मुक्तं त्यक्तमगारं यया सा ॥

मुक्तापुष्प । पु० कुन्दवृक्षे । मुक्तेवपुष्पाण्य ॥

मुक्ताप्रसू । स्त्री० शुक्तौ ॥ मुक्तायाः प्रसूः ।

मुक्ताप्रालम्ब । पु० मुक्ताहारे ॥

मुक्ताफलम् । न० घनसारे । कर्पूरे ॥ लवलीफले मौक्तिके ॥ गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानिप्रथितानिलोकेतेषान्तुशुक्त्युद्भवमेवभूरि ॥ विशेषोन्यत्रगरुडपुराणादौद्रष्टव्य । अथवाराद्युक्तलक्षणादिकंयथा। द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि । मुक्ताफलानितेषांबहुसाधुचशुक्तिजंभवति ॥ सिंहलकपारलौकिकसौराष्ट्रिकताम्रपर्णिपारशवा । कौवेर्यपाण्ड्यवाटकहैमकदूत्याकरास्त्वष्टौ ॥ बहुसंस्थाना स्निग्धाहंसाभा सिंहलाकरा स्थूला । ईषत्ताम्रा श्वेतास्तमोवियुक्ताश्चताम्राख्या ॥ कृष्णा श्वेता पीता सशर्करा पारलौकिकाविषमा । नस्थूलानात्यल्पानवनीतनिभाश्चसौराष्ट्राः ॥ ज्योतिष्मन्त शुभ्रागुरवोऽतिमहागुणाश्चपारशवा ।

कान्तिसप्रभं बहुगुणञ्चवाराहम् । तिमिजमत्स्याक्षिनिभं हृस्वत्पवित्रं विजयदञ्च ॥ २३ ॥ मेघसम्भूतस्य मुक्ताफलस्य लक्षणम् ॥ वर्षोपलवत् जातं वायुस्कन्धाच्च सप्तमाद्भ्रष्टम् । ह्रियते किल खाद्दिव्यैस्तडित्प्रभं मेघसम्भूतम् ॥ २४ ॥ अपिच । तक्षकवासुकिकुलजा कामगमा ये च पन्नगास्तेषाम् । स्निग्धानील-द्युतयो भवन्ति मुक्ताः फणप्रान्ते ॥ शस्ते ऽवनिप्रदेशे रजतमये भाजने स्थितं चयदि । वर्षति देवोऽकस्मात्तज्ज्ञेयं नागसम्भूतम् ॥ अपहरति विषमलक्ष्मीं क्षपयति शत्रून् यशो वि-काशयति । भौजङ्गं नृपतीनां धृतमकृतार्घं विजयदञ्च । २७ ॥ वेणुश्लोक्तलक्षणमाह । कर्पूरस्फटिकनिभं चिपिटं विषमञ्च वेणुजं ज्ञेयम् । शङ्खोद्भवं शशिनिभं वृत्तं भ्राजिष्णु रुचिरञ्च ॥ २८ ॥ एतेषां चिरि-भाषाज्ञानार्थमाह । शुक्तिमयेषु वारणवराहभुजगाब्जवेण्वाभ्यानि । अमितगुणत्वादेषामर्घः शास्त्रे न निर्दिष्टः ॥ २९ ॥ एतेषां प्रशस्तमाह । एतानि सर्वाणि महागुणानि सुतार्थसौभाग्ययशस्कराणि । रुक्शोकहन्तॄणि च पार्थिवानां मुक्ताफलानीप्सितकामदानि ॥ ३० ॥ मुक्तारचितानामाभरणानाञ्च ना-

ह ॥ सुरभूषणं लतानां सहस्रमष्टोत्तरं चतुर्हस्तम् । इन्द्रच्छन्दो नाम्ना विजयच्छन्दस्तदर्द्धेन ॥ शतमष्टयुतं हारो देवच्छन्दो ह्यशीतिरेकयुता । अष्टाष्टकोऽर्द्धहारो रश्मिकलापश्च नवषट्का ॥ द्वाभ्यां शताभ्यां गुच्छो विंशत्या कीर्तितोऽर्द्धगुच्छाख्यः ॥ षोडशभिर्माणवको द्वादशभिश्चार्द्धमाणवकः । मन्दरसंज्ञोऽष्टाभिः पञ्चलता हारफलकमित्युक्तम् सप्ता-विंशतिमुक्ता हस्तोनक्षत्रमालेति ॥ अन्तरमणिसंयुक्ता मणिसोपान सुवर्णगुलिकैर्वा । तरलकमणिमध्यं तद्विज्ञेयं चाटुकाकारमिति ॥ एकावलीनामयथेष्टसंख्या हस्तप्रमाणमङ्गविप्रयुक्ता । संयोजिता या मणिना तु मध्ये यष्टीति सा भूषणविद्भिरुक्ता ॥ ३६ ॥ इति गारुडे ह्यासंहिताया ७८ अध्याय ॥ बोपदेवकृते ग्रन्थविशेषे ॥

मुक्तामुक्त । त्रि० छिन्नाच्छिन्ने ॥ च अन्त्रयोगेऽस्त्रे शस्त्रप्रायो वर्त्तते ॥

मुक्तामोदक । पु० मोतीचूर० मोती लाड्डु इतिख्याते ॥ मुद्गानां धूमसीं सम्यग्ध्यालयेन्निर्मलाम्बुना । कटाहस्थघृतस्योर्ध्वं झर्झरं स्थापयेत्ततः ॥ धूमसीं तु द्रवीभूतां प्रक्षिपेत् झर्झरोपरि । पतन्ति बिन्दवस्तस्मात्तत्पक्वांस्तान् समुद्धरेत् । सि

तापःकेनसयैाव्यकुर्यादुक्तातुमो
दकान् । लघुर्ग्राहीरुचिदोषघ्न
स्वादुशीतोरुचिप्रद चक्षुष्यो
ज्वरहृद्बल्यस्तर्पणो मुद्गमोदक ॥

मुक्तालता । स्त्री॰ मुक्ताहारे ॥

मुक्तावली ॥ स्त्री॰ मुक्तामालायाम्
मुक्तानामावलीदाघौ इति ॥

मुक्तास्फोट । पु॰ शुक्तौ । मुक्तोत्पा
दिकायांशुक्तौ ॥ मुक्ता स्फुटत्यस्मा
दस्फट॰ । इलस्येतिघञ् ॥

मुक्तास्फोटा । स्त्री॰ शुक्तौ ॥

मुक्ति । स्त्री॰ कैवल्ये । निर्वाणे ।
श्रेयसि मि श्रेयसे । अमृते ।
मोक्षे । अपवर्गे । स्वरूपावस्थाने ।
अज्ञाननिवृत्तिलक्षणायामसिद्धौ ॥
मुक्तौतयोतिरेकेणनान्तरायेण्यक्ष-
च्यते । यतोऽज्ञानविध्वस्तोमुक्त
सन्नेवमुच्यते ॥ साचपुण्यैर्विना-
नलभ्यतेइत्याहुराचार्या यथा ।
जन्तूनांनरजन्मदुर्लभमतःपुंस्त्वं
ततोविप्रतातस्माद्वैदिकधर्ममार्ग
परतांविद्वत्त्वमस्मात्परम् । आ-
त्मानात्मविवेचनंस्वनुभवोब्रह्मात्म
नासंस्थितिर्मुक्तिर्नोशतकोटिजन्म-
सुकृतैः पुण्यैर्विनालभ्यतेइति ।
मोचनम् । मुच्लृमोक्षणे । भावे-
क्तियाक्तिन् । मुक्ति पञ्चविधेति
पौराणिका । यथा सालोक्य सा-
मिप्यसारूप्य सार्ष्टि सायुज्यमेवच । कै
वल्य चेतितानिविद्धिमुक्ति राघवपञ्च-
धा ॥ अपिच । सार्ष्टिसारूप्यसालो
क्यसामीप्यैकत्वमप्युत । दीयमान
नगृह्णन्तिविनामत्सेवनं जना ॥
इतिभागवता ॥ मुक्तिस्तुद्विवि
धासाध्विसर्वसक्तता । नि-
र्वाणपददात्रीचहरिभक्तिप्रदानृणाम् ॥
हरिभक्तिस्वरूपांचमुक्तिंवाञ्छन्तिवै
ष्णवा । अन्येनिर्वाणरूपांचमुक्ति
मिच्छन्तिसाधव । इ॰ब्र॰वै॰पु॰ ॥
आत्यन्तिकदुःखनिवृत्तिरितिनै-
यायिका ॥ प्रकृतिपुरुषयोर्विवे-
कग्रहणान्मुक्तिरितिसांख्या ॥
प्रकृतावुपरतायांपुरुषस्वरूपेणावस्था
नंमुक्तिरितिसांख्यसिद्धान्त ॥

मुक्तिद । त्रि॰ कैवल्यप्रद ।

मुक्तिदा । स्त्री॰ गुरुवाचि ॥

मुक्तिभाज । त्रि॰ मुमुक्षौ । मुक्त्याधि
कारिणि ॥ ब्रह्मज्ञानादृतेदेविक-
र्मसन्न्यसनंविना कुर्वन्कल्पश
तकर्म नभवेन्मुक्तिभाग्जन ॥

मुक्तिमण्डप । पु॰ काश्याविश्वेश्वर
स्यदक्षिणपार्श्वस्थमण्डपे ॥ यथा ।
निमेषमात्रंस्थितचित्तवृत्तास्तिष्ठन्ति
येदक्षिणमण्डपेच । अनन्यभावाश्च
पिगाढमानसानतेपुनर्गर्भदशामुपय
न्ति ।

मुक्तिमुक्त । पु॰ गन्धद्रव्यविशेषे । तु-
रुष्के । सिह्लके । सिलारस॰ लोबा

म०द्र०भा० प्र० ॥

मुक्तियुक्ति । स्त्री० मुक्तिबोधप्रकारे ॥

मुख । पु० दृष्टौ । खञ्जने । वङ्गश्च०द्र०भा० ॥

मुखम् । न० शरीरावयवविशेषे । वक्त्रे । आस्ये । वदने । तुण्डे । आनने । लपने ॥ तत्स्वरूपं यथा । ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते ॥ कवयस्तु ललाटादि चिबुकान्तसमुदाये प्रयुञ्जते ॥ निर्गमे । निःसरणे । गृहस्य निर्गमनप्रवेशनयोर्वर्त्मनि । प्रारम्भे ॥ उपाये ॥ नाटकादेः सन्धिविशेषे ॥ शब्दे । त्रि० श्रेष्ठे ॥ खन्यते । खनु अवदारणे । डिताखनेर्मुट् चोदात्तश्च इत्यच् । आदेर्मुडागमः ।

मुखकमलम् । न० वदनारविन्दे । मुखं कमलमिव । उपमितसमासः ।

मुखगन्ध । पु० मुखामोदे ।

मुखगन्धक । पु० पलाण्डौ ।

मुखचपटा । स्त्री० फुलफुल्याम् । मुखलग्नं पिञ्जीवामुखध्वनिविशेषे । उलूली । फुलु०द्र०गौ०भा० ॥

मुखचपला । स्त्री० आर्याप्रभेदे । यथा । दलसमस्तभजे लघुरचपलागत यथा । श्रीयमूर्त्तं नवस्त्राम् प्रपञ्चमासीदितामु मिता ॥ यथा । नन्द सुतवसुकसत्वदृढनतिप्रिमगच्छतवेद । यत्रभर्वाततिराग यमपिकगादितिम खचपला ॥

मुखचौरी । स्त्री० रसनायाम् । जिह्वायां ॥

मुखतीय । त्रि० मुखतो जातादौ ॥ आद्यादित्वात् तसौ०मुख आप्ययतः सौर्वीपध्य इति छ ॥

मुखदूषण । पु० पलाण्डौ ॥

मुखधावनम् । न० आस्यप्रक्षालने ॥ पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवे । पञ्चपल्लवकं श्रेष्ठं कषायो मुखधावने ॥

मुखधौता । स्त्री० ब्राह्मणयष्टिकायाम् ॥

मुखनिरीक्षक । पु० अलसे ॥

मुखपूरणम् । न० गण्डूषे ॥

मुखप्रिय । पु० ऐरावते । नागरङ्गे ॥

मुखभूषणम् । न० ताम्बूले ॥

मुखमण्डनक । पु० तिलकवृक्षे । त्रि० आस्यभूषणे ॥

मुखामोद । पु० शोभाञ्जने ॥

मुखयन्त्रणम् । न० कविकायाम् । खलीने ॥

मुखयोनि । पु० आसिक्ये ॥

मुखर । त्रि० दुर्मुखे । अबद्धमुखे । अप्रियवादिनि ॥ निन्दितं मुखमस्य । रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् । मुखमप्यौपक

थयावचनपर ॥ निरन्तरभाषिणि ॥ मख मागस्यास्ति । पूर्ववद्व ॥ शब्दायमाने ॥ यथा । मुखरशृङ्खलकषि वइति ॥ पु० काके ॥ श ङ्के ॥

मुखरता । स्त्री० वाचालतायाम् ॥ भावे तल् ॥

मुखरिका । स्त्री० वचमि ॥

मुखरित । त्रि० कीर्त्तिते ॥ प्रकटिते ॥ यथा । सम्मुखरितम् ॥

मुखरोग । पु० वक्त्रामये ॥ मुखरोगाणांनिदानं यथा । अनूपपिशित क्षीरदधिमाषादिसेवनात् । मुखमध्यगदान्कुर्युः क्रुद्धादोषाकफोत्तरा तेषांसङ्ख्यायथा । स्युरष्टावोष्ठयोर्दन्तमूलेषुदशषट्तथा। दन्तेष्वष्टौरसज्ञायांपञ्चस्युर्नवतालुनि । कण्ठेस्वष्टादशप्रोक्तास्त्रयः सर्वसराः स्मृताः । एवं मुखामयाः सर्वेसप्तषष्टिर्मताबुधैः ॥ तत्कुम्भीयकशोथघ्नरमूलं पीतं प्रमोहितम् । कामलादिहरं प्रोक्तं मुखरोगहरं तथा । शुष्कमूलकशुण्ठीनांकाथोविश्वजलागरम् । शुष्कचतुर्थं तइयातले जतैर्वि पाचयेत् ॥ आशिविस्वर्यंशूलम्पूयस्रावस्रवणयो । पूयस्रावदस्तौतक्षकमय कर्णयो विधा ॥ चिप्रं विनाशमायाति मध्वाद्यनतरिक्षरः ॥ आरतेलिदं

श्रेष्ठमुखदन्तामयापहम् ॥

मुखलाङ्गल । पु० शूकरे । कोले । भूदारे ॥ मुखलाङ्गलं यस्य ॥

मुखवल्लभ । पु० दाडिमवृक्षे ॥ त्रि० मुखप्रिये ॥

मुखवाचिका । स्त्री० अम्बष्ठायाम् ॥

मुखवाद्यम् । न० वक्त्रनादवाद्ये । बांकइति गौ० भाषाप्रसिद्धे ॥ मुखस्य० मुखेनवावाद्यं ॥

मुखवास । पु० गन्धद्रव्ये ॥

मुखवासन । पु० मुखसङ्गन्धकारकद्रव्ये । आमोदिनि । मुखंवासयति । अच० । नन्द्यादित्वाल्ल्युः ॥

मुखविलुण्ठिका । स्त्री० अजायाम् । छाग्याम् ॥

मुखविष्ठा । स्त्री० तैलपायिकायाम् ।

मुखशफ । पुं० दुर्मुखे ॥

मुखशुद्धि । स्त्री० वक्त्रशोधने । यथा । अभावेदन्तकाष्ठानांप्रतिषिद्धदिनेतथा । अपांद्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥

मुखशोधन । पुं० कटुरसे ॥ न० त्वचे ॥

मुखशोधी । स्त्री० जम्बीरे ॥

मुखशील : । त्रि० दुर्मुखे ॥

मुखसम्भव । पु० ब्राह्मणे । मुखात्सम्भवोऽस्य ॥

मुखसिद्ध । पु॰ मुखकर्म विसिद्ध । ध्रुव ॥ अत्रोक्तं रेवतोत्तरे । स्तनाध रोष्ठसितक नवलाभिरामफलकारवा युपदमुन्नतकन्धरायम । नीरवोप कृ'घृतमुखेनवलीहसाम्यमग्र चतु ष्कसमयेम् खसिद्धिमाहुरिति ॥

मुखसरम् । न॰ तालव्याम् । आरा सवे । ताडी ॰ द्रु॰ प्रसिद्धमद्ये ॥ गण्डूषमद्यं ॥ मुखसुरा । विभा सासे नासुरेतिकौषता ॥

मुखस्राव । पु॰ लालायाम् । ला ल॰ द्रु॰ भा॰ ॥

मुखाग्नि । पु॰ दावाग्नौ ॥

मुखामय । पु॰ मुखरोगे ॥

मुखार्जक । पु॰ अर्जके । श्वेतप र्णासे ॥

मुखास्र । पु॰ कर्कटे ॥

मुखोल्का । स्त्री॰ दावाग्नौ । भूतस ञ्चायाम्

मुख्य । पु॰ आद्यविधौ । शास्त्रोक्त प्रथमकल्पे ॥ यथा व्रीहिभिर्य जत । श्रुतिमात्रं यत्र शास्त्रतादर्थ्यं मवसीयते । तं मुख्यमथ मन्यन्ते । त्रि॰ श्रेष्ठ । वरे ॥ प्रधाने ॥ मुख मिव । शाखादित्वाद्य ॥ मुखे भवम् ॥ मुखेभव । दिगादित्वा द्यत् ॥

मुख्यक्रम पु॰ प्रमाणविशेषे । प्रधान क्रमेणयोङ्गानांक्रम समुख्यक्रम येनहिक्रमेणप्रधानानिक्रियन्ते तेने वक्रमेण॰तेषामङ्गान्यनुष्ठीयन्ते॰ तदासर्वेषामङ्गानांस्वे स्वे प्रधा- नैस्तुल्यं व्यवधानंभवति । व्युत्क्र- मेणानुष्ठानेकेषांचिदङ्गानांस्वे प्र- धानैरत्यन्तमव्यवधानम्॰केषांचि दत्यन्तव्यवधानस्यात् । तथायुक्त- म् । प्रयोगविध्यवगतसाहित्यबाधा पत्ते । अत प्रधानक्रमोप्यङ्ग- क्रमेहेतु । अतएवप्रयाजशेषेणघा रावाग्न यर्थ्याभिघारणम्॰यथा दैन्द्रस्यदध्न । आग्नेयैन्द्रयागयो पौर्वापर्यात् । एवञ्चद्वयोर्योरभि घारणयो स्वस्वप्रधानेनतुल्यमेका न्तरितव्यवधानम् । व्युत्क्रमेणाभि घारणे चाग्नेयस्याभिघारणाग्ने- ययागयोरत्यन्तमव्यवधानम् । ऐ- न्द्रदध्यभिघारणेन्द्रयागयोर्द्व्यन्त रित व्यवधानं॰तथायुक्तमित्युक्तमे व । सचमुख्यक्रम ' पाठक्रमाद्दु- र्बल । मुख्यक्रमोहिप्रमाणान्तर- सापेक्षप्रधानक्रमप्रतिपत्तिसापेक्ष- तयाविलम्बितप्रतिपत्तिक , । पा- ठक्रमस्तुनिरपेक्षत्वाऽध्यायपाठक्रम मात्रसापेक्षतयानतथेतिप्रबलवान् । प्रवृत्तिक्रम अबलवान् । प्रवृत्तिक्रमे ह्यबहूनामङ्गानांप्रधानविप्रकर्षा त् । मुख्यक्रमेतुसन्निकर्षात् ॥

मुख्यसर्ग । पुं॰ स्थावरसृष्टौ ॥ मु-

ष्यसर्गस्तुर्यस्तुमुख्या ऽस्थावरा

स्मृताइ॰वराहपुराणात् ।

मुख्यार्थ । पु॰ शब्दश्रवणमात्राद्ग

म्यर्थे यथा । श्रुतिमात्रेणयत्रा-

स्यतादर्थ्यमवसीयते । त मुख्यमर्थं

मन्यन्ते गौणं यत्नोपपादितम् ॥ प्र

तिपाद्यार्थे ॥

मुगूह । पु॰ दात्यूहपक्षिणि ॥

मुग्ध । पु॰ भिक्षुकविशेषे ॥ यथा ।

सान्निध्ये विषयाणाम्समर्थोऽविक

लेन्द्रिय । सुप्रवद्वर्त्तते नित्य भिक्षु

र्मुग्ध मउच्यते ॥ त्रि॰रम्ये । सु

न्दरे मूढे विवेकविकले विप

र्यस्त श्रुत्यर्थपरिशीलनविधुरे

नवे

मुग्धा । स्त्री॰ नायिकाप्रभेदे उदय

द्यौवनामुग्धालज्जाविदितमन्मथा ।

इ॰लक्षणम्

मुच्चिर । त्रि॰दातरि ॥ मुच्चते । मु

च्लृ॰ । इषिमदिमुदीत्यादिनाकि

रच् ॥ पु॰ धर्मे ॥ वायौ । देवे ॥

मुचुकुन्द । पु॰ मान्धातृनृपते पु

त्र ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे ।

चित्रके । प्रतिविष्णुके । मेचकन्द-

फूल॰इ॰भा॰ । मुचुकुन्द. शिर

पीडापित्तास्रविषनाशन ।

मुचुटी । स्त्री॰ मुकुल्याम् । मुष्टौ ।

मुठ्ठी इ॰भाषा ॥

मुष्क . । पु॰ मुष्कवृक्षे ॥

मुञ्ज । पु॰ तृणविशेषे । ब्राह्मण्ये ।

बाणे । स्थूलदर्भे । मूञ॰इ॰भा॰ ॥

मुञ्जद्वयन्तुमधुरन्तुवरंशिशिरन्तथा ।

दाहतृष्णाविसर्पास्रमूत्रबस्त्यक्षिरोग

जित् । दोषत्रयहरंवृष्यमेखलासूप

युज्यते ॥ मुञ्जद्वयम् ॰मुञ्जभद्रमु-

ञ्जौ ॥

मुञ्जकेशी । पु॰ विष्णौ ॥

मुञ्जरम् । न॰ शालूके ॥

मुञ्जातक । पु॰ मुञ्जे ॥ पुष्पशा-

कप्रभेदे ॥

मुञ्जावट । पु॰ तीर्थविशेषे ॥ य-

त्रमहादेवस्तिष्ठति ॥ तीर्थान्तरे ॥

मुण्ड । पु॰ दैत्यविशेषे राहुग्रहे ॥

मुण्डितसमस्तशिर केशब्रह्मचा-

रिविशेषे ॥ सशिखकेशश्मश्रुरहिते

परिव्राजि ॥ नापिते । स्थाणुद्रौ

पु॰न॰मूर्द्धनि न॰बोले ॥ मुण्डा

यसि ॥ त्रि॰मुण्डिते ॥ मुण्डाते ।

मुण्डिखण्डने । घञ् ॥

मुण्डक । पु॰ नापिते ॥ न॰मस्त-

के ॥ उपनिषद्विशेषे ।

मुण्डचणक । पु॰ कलाये ॥

मुण्डनम् । न॰ वपने । परित्राण

ने । क्षौरे । केशच्छेदने ॥ मुण्डन

चोपवासश्चसर्वतीर्थेष्वयविधिः । व

र्जयित्वागयागङ्गाविशालांविरजा

तथा ॥ मुडि॰ । ल्युट् ॥

मुण्डफल पु॰ नारिकेलवृक्षे ॥

तिक्तिरच् ॥ कामुके ॥ भेके ॥

मुद्ग । पु॰ शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । श्यामन्दे ॥ मुद्गोरूक्षोलघुर्ग्राहीकफपित्तहरोहिम । स्वादुरल्पानिलोनेत्र्योज्वरघ्नोवनजस्तथा ॥ कृष्णमुद्गो महामुद्गोहरित पीतकस्तथा । श्वेतोरक्तश्चतेषान्तुपूर्वं पूर्वोलघु स्मृत ॥ सुश्रुतेनपुन प्रोक्तोहरित प्रवरोगुणै । चरकादिभिर प्युक्तएषएवगुणाधिक ॥ मुद्गस्यफलमुद्ग । विल्लादिभ्योण । तस्य फलपाकेतिलुपियुक्तवद्भाव ॥ यद्वा । मोदयति । मुद॰ । मुदियोर्गग्गावितिगक् ॥

मुद्गपर्णी । स्त्री॰ वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूर्प्यपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्तास्वादुश्चक्षुष्याला । चक्षुष्याक्षतशोथघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्ग पर्णमस्या । मुद्गशब्देनमुद्गपर्णसदृशलक्ष्यते । पाककर्णेतिङीष ॥

मुद्गभुक् । पु॰ घोटके ॥

मुद्गभोजी । पु॰ घोटके । अश्वे ॥

मुद्गमोदक । पु॰ मुद्गमोदके ॥

मुद्गर । पु॰ लोष्टादिभेदने ॥ कर्मारद्रव्ये ॥ मोगरा॰इ॰भा॰प्र॰पुष्पद्रव्यविशेषे । मत्स्यसारे । सप्तपर्णे । च तिगन्धे । जनेष्टे । स्वनामख्यातप्रसिद्धेपुष्पविशेषे । द्रुघणे ॥ कोरके ॥ न॰ मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुद्गोगर ॥

मुद्गरक । पु॰ कर्मारद्रव्ये । कमरखइतिभाषा ॥

मुद्गल । पु॰ गोत्रकारकेमुनिविशेषे ॥ हर्यश्वराजपुत्रे ॥ न॰ रोहिषतृणे ॥

मुद्गवटक पु॰ । मूगबरा॰इतिलोकप्रसिद्धे ॥ मुद्गानांवटकास्तक्रे मज्जितालघवोहिमा । सस्काराजप्रभावेणत्रिदोषशमनाहिता ॥

मुद्गवटिका । स्त्री॰ मु गौडी इ॰लोकप्रसिद्धवटिकायाम् ॥ मुद्गानावटिकास्वडद्रचितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणा स्मृता ॥ तद्वत्॰माषवटीवत् ॥

मुद्गार्द्रकवट । पु॰वटकविशेषे । चदेवरा॰इ॰भा॰ ॥ आदावडा॰इ॰गौ॰भा॰ ॥ मुद्गपिष्ट्याविरचितान् वटकास्तैलपाचितान् । इस्तेनचूर्णयेत्सम्यक्तस्मिन्पूर्वेविनिक्षिपेत् । भृष्ट हिङ्ग्वार्द्रकसूक्ष्म मरिचजीरकतथा । निम्बूरसयवानीभ्यायुक्तयासर्वविमिश्रयेत् ॥ मुद्गपिष्टीपचेत्सम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकानकुर्यात्तन्मध्ये पूरण क्षिपेत् ॥ तैलेतानगोलकान्पक्त्वाक्वथितायांनिमज्जयेत् । गोल-

का पाचकौ प्रोक्तास्तेस्वार्द्रकव टाश्वपि ॥ मुद्गार्द्रकवटारुच्या लघवोबलकारका । दीपना स्तर्पणापथ्या स्विषु दोषेषु पूजिता ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छाप० इ० भाषाप्रसिद्धायाम् ॥ मोदतेऽनया । मुद० । स्फायितश्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्गतलिपिविशेषे छापाअत्तरइति भा० प्र० ॥ यथोक्त वाराहीतन्त्रे मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपय पञ्चधास्मृता एताभिर्लिपिभिर्व्याप्ताधरित्रौशुभदाहरेति ॥ मुण्डमालातन्त्रे पियथा । लेखन्य।लिखित विप्रैर्मुद्राभिरङ्कितस्वयत् । शिल्पादिनिर्मितश्चपा ठ्य धार्थंसुसर्वदा ॥ ६० ॥ लोकप्रसिद्धा।०स्वर्णरौप्यमुद्रकयो ॥ पुराणाद्युक्ता०शरीरेधारणीयेभगवतश्चायुधादिचिह्ने ॥ कृष्णायुधाङ्कितदेहोऽपीचन्दनस्तत्स्वया । प्रयागादिषुतीर्थेषु सगत्वाकिंकरिष्यति ॥ यदायस्यप्रपश्येतदेहशङ्खादिचिह्नित ।तदातदाजगत्सर्वमौतुष्टोहरतिपातकम् ॥ भवतेयस्यदेहेतुचहोरात्रंदिनेदिने । शङ्खचक्रगदापद्म लिखितसोऽच्युत . स यत् ॥ नारायणायुधैर्युक्त कृत्वात्मानकलौयुगे । कुरुतेपुण्यकर्माणिमेरुतुल्यानितस्यवै ॥ शङ्खादिनाङ्कितोभूत्वाश्राद्धय कुरुतेद्विज । विधिहीनन्तुसम्पूर्णं पितृणाञ्चगयासमम् यथाग्निर्दहतेकक्षवायुनाप्रेरितोभृशम् । तथादहन्तिपापानि दृष्ट्वाकृष्णायुधानिवै ॥ देवताप्रीतिजनिकाङ्गुलिरचनायाम् ॥ मोदनात्सर्वदेवानाद्रावणात्पापसन्तते । तस्मात्मुद्रेतिसाख्याता-सर्वकामार्थसाधनी ॥

मुद्राङ्कित । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपि । स्त्री० पञ्चधालिप्यन्तर्गतलिपिविशेषे । छापिकाअत्तर० इतिभाषा ॥

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्मितमुद्रायाम् ।

मुद्रित । त्रि० अप्रफुल्ले । असुचिते । निद्राणे । मीलिते । मुद्रा० इ० भा० ॥ मुद्राङ्किते ॥

मुधा । अ० व्यर्थे ॥ मुह्यति । मुह वैचित्त्ये । काप्रत्यय । पृषोदरादित्वात्हस्यध ॥

मुनि । पुं वशिष्ठादौ ॥ वाचयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । समन्या

सिनि। परमार्थतत्त्वस्यमननान्मुनिरितिशास्त्रकृताव्युत्पत्तेर्नतरोजन ॰ शास्त्रविदपितत्त्वज्ञानाभावात्। सदामननशीलोयोजीवन्मुक्तामुनि सहि। स्थितप्रज्ञादिभिशब्दैर्मोक्षशास्त्रेषुवर्ण्यते ॥ दुःखेष्वनुद्विग्नमनाः सुखेषुविगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ मौनान्नमुनिर्भवतिनारण्यवसनान्मुनिः। स्वलक्षणन्तुयोर्वेदसमुनिः श्रेष्ठउच्यते ॥ अगस्त्ये ॥ बुधे ॥ मन्यते। मनज्ञाने। मनेरुच्चेतीन्॰ उपधाया उत्वञ्च। किदित्यनुवृत्तेर्नाल्लगुणः ॥ वङ्गसेने। अगस्त्यद्रुमे ॥ अर्हति ॥ पियाले किंशुके ॥ दमनकवृक्षे ॥ सप्ताङ्के ॥

मुनिखर्जूरिका। स्त्री॰ खर्जूरीप्रभेदे ॥

मुनिच्छद। पु॰ सप्तच्छदवृक्षे ॥

मुनितरु। पु॰ वकवृक्षे

मुनिद्रुम। पु॰ वकपुष्पे। वङ्गसेने। अगस्तिया॰ इ॰ भा॰ प्र॰ वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसञ्ज्ञकोद्रुमः। शाकपार्थिवादि ॥

मुनिनिर्मित। पु॰ डिण्डिशे। डिंडसी॰ टिंडा॰ इ॰ प्र॰ फलशाके। मुनिनानिर्मितः ॥

मुनिपित्तलम्। न॰ ताम्रे ॥

मुनिपुत्र। पु॰ दमनकद्रुमे ॥ ऋषिसुते ॥

मुनिपुत्रक। पु॰ भद्रनामनि। खञ्जने ॥

मुनिपुष्प। पु॰ अगस्तिद्रुमे ॥ न॰ अगस्त्यपुष्पे।

मुनिपूग। पु॰ रामपूगे। कामीने ॥

मुनिभेषजम्। न॰ अगस्त्यहरीतक्याम्। अगस्तिपथ्यायाम् ॥ लङ्घने ॥

मुनिव्रत। त्रि॰ उपशान्ते। मुनीनांव्रतमस्य ॥

मुनिसुव्रत। पु॰ सुव्रताख्येबुद्धभेदे ॥

मुनिस्थानम्। न॰ आश्रमे ॥

मुनीन्द्र। पु॰ श्रीघने। बुद्धे। जिने। मुनिष्विन्द्रःश्रेष्ठः ॥

मुन्यन्नम्। न॰ नीवारादौ ॥ मुनेर्वानप्रस्थस्य अन्नम् ॥

मुमुक्षु। पु॰ यतौ। संसारान्मोक्षेकृतप्रयत्ने। साधनचतुष्टयसम्पन्ने ॥ यथा। काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम्। विजिगीषुर्यथातद्वन्मुमुक्षुःस्वं विचारयेदिति ॥

मुमुक्षुता। स्त्री॰ मोक्षेच्छायाम् ॥ संसारबन्धनिर्मुक्तिः कथंस्यान्मेकथाविधे। इतियासुदृढाबुद्धिर्व

न्यासामुमुचुता ॥ मुमुचोर्भाव तल् ॥

मुमुचत्वम् । न॰ मुमुचुतायाम् ॥ वैराग्यञ्चमुमुचुत्व तीव्र यस्यतुवि द्यते । तस्मिन्नेवार्थवन्त स्यु फलवन्त श्रमादय ॥ मोचेच्छा मोचविषयेच्छा॰ तद्वत्त्वम मुमुचु त्व , भावे तत्व ॥

मुमुचान । पु॰ मेघे ।

मुमुषिष । त्रि॰ चौरे ।

मुमूर्षु । त्रि॰ आसन्नमृत्यौ । म र्तुमिच्छो । सन्नन्तान्मृङ , सना श सभिचउ ॥

मुर पु॰ दैत्यविशेषे ।। मुरति । मुरस वेष्टने । इगुपधत्त्वात्क ॥ न॰ वेष्टने ॥

मुरज । पु॰ मृदङ्गे ॥ मुरयम् । मु र॰ । तुदादि । घञर्थेकविधान मितिक । मुर वेष्टन जातमस्य ॥

मुरजफल । पुं॰ पनसवृचे ॥ मुरज सदृशानिफलानियस्य ॥

मुरजबन्ध । पु॰ चित्रकाव्यविशेषे ॥

मुरण्ड । पुं॰ लम्पाकदेशे ॥ तद्देश स्थे तुमुरण्डा ॥

मुरन्दला । स्त्री॰ मुरलानद्याम् ॥

मुरमर्द्दन । पु॰ विष्णौ ॥

मुररिपु । पं॰ विष्णौ ॥ मुरस्यरि पु ॥

मुरला । स्त्री॰ मुरन्दलायांसरिति ॥

मुरली । स्त्री॰ वशींवाद्ये । वशिकाया- म् ॥ इतिशब्दरत्नावली ॥

मुरलीधर । पु॰ श्रीकृष्णे ॥

मुरहा । पुं॰ केशवे । विष्णौ ॥

मुरा । स्त्री॰ स्वनामाप्रसिद्धे गन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानि लापहा । ज्वरासृग्भूतरचोघ्नीकुष्ठ कासविनाशिनी । मुरति । मुर॰ । इगुपधत्वात्क टाप्

मुरारि । पु॰ श्रीकृष्णे ॥ मुरस्यअ- रि । मुर क्लेशेचसन्तापेकर्मभो गेअकर्मिणाम् । दैत्यभेदेप्यरिस्त- षाम्राऽस्तेनकीर्त्तित ॥

मुरु । पु॰ लोहविशेषे ॥

मर्भिणी । स्त्री॰ अङ्गारधान्याम् ॥

मुर्मुर । पु॰ तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ॥

मुलतान । पुं॰ देशविशेषे ॥ कार तीयासमारभ्यद्विङ्गलाजान्तक शि वे । मुलतानदेशोदेवेशिमध्याम्ले च्छ परायण ।

मुशटी । स्त्री॰ सितकङ्गुन्याम् ॥

मुशल । पु॰ न॰ मुसले । मुश्यत्य नेनवा । मुसखण्डने । उज्ज्वलदत्ता दयोमुतालव्यमध्यमाहुस्तेनोत्वषादि त्वात्कल ॥

मुशलिका । स्त्री॰ पन्नगाम् ॥ इतिश ब्दायुध ॥

मुशली । स्त्री॰ पल्ल्याम् ॥ तालमूल्याम् ॥ इ॰ राजनिर्घंएट ॥

मुषल । पु॰ न॰ मुसले ॥ मुषत्यनेन वा । मुषखण्डने॰ इतिधातोर्दन्त्यान्तेषुमूर्द्धन्यान्तेषुचवोपदेवाद्येयादिभि पठितत्वात्कल ॥

मुषा । स्त्री॰ मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥

मुषित । त्रि॰ वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त ॥ नमुषितास्त्रियप्रेषत । अमुषितेषमुषिताचौरैहृतवस्त्रे व॰ नग्ने त्यर्थ इतिव्याख्येयम् ॥

मुष्क । पु॰ अण्डकोषे । वृषणे ॥ मुष्णातिरेत । मुष॰ । सृवृभूशुषिमुषिभ्य कक् ॥ सङ्घाते ॥ मोक्षकवृक्षे । मुष्कके ॥ मुष्कहस्त्वस्तुद्विविध श्वेतकृष्णप्रभेदत ॥ तस्करे ॥ मांसले ॥

मुष्कक । पु॰ घण्टापाटली । गोलीढे । मुष्के । भाटले । मोचे ॥ मष्कक कटुकस्तिक्तोग्राहीमुष्णा कफवातहृत् । विषमेदोगुल्मकण्डूबस्तिरुक्शुक्रमिशुक्रनुत् ॥ मुष्णाति रोगम् । मुष ककन्तात्॰ स्वार्थे कन् ॥

मुष्कर । पु॰ समुष्के । प्रलम्बाण्डे ॥ मुष्कोऽण्ड । सोऽस्यास्ति । अषसुषीतिर ॥

मुष्कशून्य । पु॰ वृषणरहिते । अनुपस्थे । स्त्रीस्वभावे । महल्लिके । राज्ञोन्त पुररक्षके । खोजा॰ भाषा ॥

मुष्ट । त्रि॰ चोरिते । मुषेक्त ॥

मुष्टि । पु॰ स्त्री॰ पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी॰ इ॰ भा॰ । अङ्गुलिसन्निवेशोमुष्टि ॥ यथा । घासमुष्टिपरगवेसाप्न ह्यास्नय सदा । अकृत्वाखयमाहार स्वर्गलोकसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ॰ इतिभाषा ॥ धान्यमानभेदे । कुञ्च्यष्टभागे । छटाङ्क॰ इ॰भा॰ ॥ मोषणे । सङ्कोपने । मुष्यतेनया । मुष॰ । स्त्रियाक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्कोइतिभाषा ॥ पथिक्षुधार्त्तस्य तिलादीनामुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनामुष्टिर्ग्राह्यापथिस्थितै । क्षुधार्त्तैर्नान्यथा विप्रविधिविज्ञैरितिस्थिति ॥

मुष्टिक । पु॰ कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक । पु॰ बलदेवे ॥ मुष्टिकस्यान्तक ॥

मुष्टिद्यूतम् । न॰ चुबके । द्यूतप्रभेदे ॥

मुष्टिन्धय । पु॰ बालके ॥ मुष्टिध

यति । धेट् पाने । नाडीमुष्यी ष्येति० खश् । मुम् ॥

मुष्टिबन्ध । पु० सङ्ग्रहे । मुष्टिब न्धनक्रियायाम् ॥ षष्ठीसमासम् मुष्टि बन्ध ॥ मुष्टेर्बन्ध ॥ मुष्टिनाब न्धोद्दढग्रहण वा ॥

मुसल । पु० न० अयोग्रे । काष्ठ नीयदण्डे । मूसर० मूसल० हू० भा० ॥ मुस्यत्यनेनवा । मुसखण्ड ने । वृषादिभ्यश्चेतिकल ॥

मुसली । पु० हलिनि । बलदवे ॥ मुसलमस्त्यस्य । अतइनिठनावि तीनि ॥ यथोक्तं विष्णुपुराणे जरा सन्धयुद्धोद्योगे । हलञ्चबलभद्रस्यग गनादागत ञ्चलत् । मनसोभिम त विप्रसौनन्द मुसल तथेति ॥

मुसली । स्त्री० तालमूल्याम् ॥ ताल मूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेताचाप रम चुका । श्वेतातास्वल्पगुणोपेता अपराचरसायनी । मुसलीमधुरा ष्यावीर्योष्णाव्रष्योगुरु' । तिक्ता रसायनीहन्तिगुदजान्यनिल तथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकाया म् ॥ मुस्यति० मुसतिस शय वा । मुस० । वृषादिभ्यश्चित्कल । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय । त्रि० मुसल्ये ॥ मुसला यहित । विभाषाहविरपूपादि भ्यइतिपक्षे छ ॥

मुसल्य । त्रि० मुसलेनवध्ये ॥ द ण्डादिभ्योयत ॥ मुसलीये । मुस लायहित । अपूपादित्वात्पक्षे यत् ॥

मुस्त । पु० न० मुस्तके । मोथा० हू० भा० ॥

मुस्तक । पु० न० मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा ० हू० भा० ॥ मुस्त कटुहिम ग्रा हितिक्तं दीपनपाचनम् । कषाय कफपित्तासहृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जात मुस्तकतत्प्रश स्यते । तत्रापिमुनिभि प्रोक्त वर नागरमुस्तकम् ॥ मुस्तसङ्घाते । चु० । ण्वुल् ॥

मुस्ता । स्त्री० मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त० अच् टा प् ॥

मुस्ताद । पु० शूकरे ॥ मुस्तामत्ति । अद० । कर्मण्यण् ॥

मुस्ताभम् । न० मुस्तकविशेषे । कुट न्नटे । नागरमोथा० हू० भा० ॥

मस्तु । पु० मुष्टौ ॥

मुस्नम् । न० अश्रुणि ॥ मुस्नाति । मु स० । मुसेरक्वाहुलकात् ॥ मुस्र ते ॥

मुहिर । पु० कामे ॥ मूर्खे ॥ मु ह्यति । मुहवैचित्त्ये । इषिमदि

मुटीव्याटिमां॰रच् ।

मुहुर्भाषा । स्त्री॰ पुन पुन कथने । अनुलापे ॥ मुहुर्भाषणम् । भाव॰ बज ॥

मुहु । अ॰ पौन पुन्ये ॥ मोहनम् । मुह॰ । मुहे किर्च्युसि ॥ पुनरर्थे ॥

मुहूर्त्त । ६॰न॰ द्वादशक्षणात्मके काले ॥ त्रिंशत्कालात्मकेकाले ॥ द्वे घटिकात्मकेकाले ॥ मुहूर्त्त घटिकाद्वयमित्युक्त ॥ अक्षिपक्ष्मपरिक्षेपोनिमेष परिकीर्त्तित । द्वौनिमेषौचत्रुटिर्नामद्वेत्रुटीतुलव स्मृत ॥ द्वौलवौक्षणइत्युक्त काष्ठापञ्चक्षणा । त्रिंशत्काष्ठाकलाप्रोक्ताकलाद्विशन्मुहूर्त्तक ॥ पुराणोक्तलक्षणन्तु । रौद्र श्वेत स्तथामैत्र स्तत सारभट स्मृत ॥ सावित्रोवैश्वदेवश्चगन्धर्वं' कुतपस्तथा । रौहिणस्तिलकश्चैवविजयोनिर्ऋतिस्तथा ॥ सवरोवरुणश्चैवभग पञ्चदशस्मृत ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रात कालोमुहूर्त्तांस्त्रीन्सङ्गवस्तावदेवतु । मध्याह्नस्त्रिमुहूर्त्त' . स्यादपराह्णस्तत परम् ॥ सायाह्नस्त्रिमुहूर्त्त स्याच्छ्राद्धं तत्रनकारयेत् । राक्षसीनामसावेलागर्हिता सर्वकर्म्मसु ॥ हूर्च्छति । हूर्च्छाकौटिल्ये । अस्माल्लिङ्चोर्मोहश्चकर्त्तिनिर्दिशान्मुहूर्त्त शब्दोनिष्पन्न ॥ अल्पकाले ॥ दिनमुखविशेषे । लक्षणयातदुपलक्षितकाले ॥

मुहिर । त्रि॰ मूर्खे ॥ मुह्यति । मुह॰ । मूलिरादयश्चेतिसाधु . ॥

मुह्यमान । त्रि॰ अनेकानर्थप्रकारैरविवेकतयाविक्षिप्तचित्ततयाचिन्तामापद्यमाने ॥

मू । स्त्री॰ बन्धने ॥

मूक । पु॰ जलेशये । मत्स्ये ॥ दैत्ये ॥ त्रि॰ अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै॰ । आतोनुपेतिक ।

मूढ । त्रि॰ तन्द्रिते ॥ बाले । जड ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविषयव्यामोहव्याप्ते ॥ इदमर्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायाम्भूमौ ॥ मुह्यतिस्म । मुह॰ । गत्यर्थेतिक्त ॥ आकाशादिमुख्यलेषुकेचित्तम प्रधानतयामूढा मोहप्रकाशका विषया : शुद्ध' केचिद्विशेषास्ते मूढा कथ्यन्ते ॥

मूढग्राह । पु॰ अविवेकातिशय

कृतेढुराग्रहे ॥ याह्लोग्रहणम् । मू ढ।नाग्राह ॥

मूढता । स्त्री॰ अकार्यपरिज्ञानत्वे ॥ अविवेकतायाम् ॥ यथा । यान द्वितीयानगतस्तदेहोदेहेपिचान्य पुरुषोनिविष्ट । ममत्वमुव्या नतथा यथाऽस्मन्देहेऽतिमात्र वतमूढतेति ॥

मूढदृक् । त्रि॰ देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥

मूढयोनि । पुं॰ पश्वादौ ॥

मूढा । स्त्री॰ तामसाभ्मनसोहत्तौ ॥

मूत । त्रि॰ बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्त ॥ आलानपाशे ॥

मूत्रम् । न॰ प्रस्रावे । मूत॰ पिसाव॰ इ॰ भा॰ ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमित्याहुरुदकवस्त्या निलनिर्गतम् ॥ यद्वा । मुच्यते यत् । मुचलृ॰ । सिविमुच्योष्टेकूच्चेतिष्ट्रन् ॥ अथास्यगुणा । गोमूत्र कटु तीक्ष्णोष्ण क्षार तिक्त कषायकम् । लघ्वग्निदीपन मेध्य पित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्ड्वक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापह शोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कास सकुष्ठजठरक्रिमि पाण्डुरोगान् गोमूत्रमेकमपिपीत मपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्र गुणतोधिकम् । अतोविशेषात्कथनेमूत्र गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहपहम । शूलगुल्मरुजानाह कामलापाण्डुरोगनुत् ॥ कषाय तिक्ततीक्ष्ण चपूरणात्कर्णशूलहृत ॥ नरमूत्र र रक्तस्रिसे वित तद्रसायनम् । रक्तपामापह तीक्ष्ण सक्षारलवण स्मृतम ॥ गोजाविमहिषीणान्तुस्त्रीणा मूत्र प्रशस्यते । खरोष्ट्रेभनराश्वानापुसामूत्र हित मतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुर मूत्र रक्त नीलश्चपित्तत । रक्तमेवभवेद्रक्ताद् धवलफेनिलकफादिति ॥

मूत्रकृच्छ्रम् । न॰ प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । कृच्छ्रे ॥ मूत्रेकृच्छ्रमत्र ॥ अथास्यचिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्या । निघ्नन्तिपीतामधुनाश्मरीच्चसमीपमृत्योरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्वाथ ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणामेर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यग्रमृत्युरपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरज

सूक्ष्मपिष्टं मधुना सह योजितम् । मूत्रकृच्छ्रं निहन्त्याशु सलीढं दिवसत्रयम् ॥ ३ ॥ गुडेन मिश्रितं क्षीरं कटुष्णं कामतः पिबेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करायाश्च निश्चयः ॥ ४ ॥ धात्रीरसं चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् । शल्याभिघातोत्थितमूत्रकृच्छ्रे कार्या क्रिया मारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथो गोक्षुरबीजस्य यवक्षारसमन्वितः । पीतः प्रशमयत्येव कृच्छ्रं विड्धारणोत्थितम् ॥ ६ ॥ त्रिफलाया सुपिष्टाया कल्कं कोलसमन्वितम् । वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ कोलं बदरम् ॥ ७ । गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् । पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ८ ॥ सपादशाणतुलितो यवक्षारः सितायुतः । भक्षितो नाशयत्येव मूत्रकृच्छ्रं न संशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कं पीतं सर्वं मितो नरैः ॥ मस्तुना पलमात्रेण मूत्रकृच्छ्रं व्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथं सितामाक्षिकसंयुतम् । नाशयेन्मूत्रकृच्छ्राणि तथैवोष्णसमीरणम् ॥ उष्णसमीरणं उष्णवातं मूत्राघातविशेषम् ॥ इति भावप्रकाशः ॥

मूत्रदोषः । पु० प्रमेहे ॥

मूत्रनिरोधः । पु० मूत्रप्रतिबन्धकरोगविशेषे ॥ यथा । पिष्ट्वैमालतीमूलं ग्रीष्मकाले समाहृतम् । संदितं छागदुग्धेन पीतं गव्येन चान्वितम् । हरेन्मूत्रनिरोधं च हरेद्वेगाच्च शर्कराम् ॥

मूत्रपतनः । पु० गन्धमार्जारे ॥

मूत्रपुटम् । न० नाभेरधोभागे । मूत्राशये ॥

मूत्रफला । स्त्री० कर्कट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम् । न० त्रपुषे ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला । स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघातः पु० प्रस्रावरोधकरोगविशेषे ॥ प्रायो मूत्रविघातादीन् वातकुण्डलिकादयः । जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघातादीरित्यादावशब्दः न पुरीषशुक्रादिवेगनिरोधजन्मा कुल्या ध्वनादीनाश्रयत्वम् । मूत्रविघातादौ कुपितैर्दोषैरित्यन्वयः । ननु मूत्रकृच्छ्रमूत्राघातयोः कोऽभेदः । उच्यते । मूत्रकृच्छ्रे कृच्छ्रमधिकं विबन्धोऽल्पः । मूत्राघाते तु विबन्धो बलवान् कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्य चिकित्सा यथा । नलकुशकाशेक्षुवलाक्वाथप्रातः सुशीतलं ससितम् । पिबतो न श्यति नियतं मूत्रग्रहः कुत्सु वाचकवि ॥ कवि शुक्र । कर्पूर-

असायुक्तावस्रवर्ति शनैः शनैः । मेढ्रमार्गान्तरेन्यस्तामूत्राघातव्यपोहति ॥ धान्यगोक्षुरक क्वाथ कल्कसिद्ध हितघृतम् । मूत्राघातेमूत्रकृच्छ्रे शुक्रदोषेचदारुणे ॥ धान्यगोक्षुरक घृतम् ॥ मूत्रकृच्छ्रेश्मरीरोगेभेषज सत्प्रकीर्तितम् । मूत्राघातेषु सर्वेषु तत्कुर्य्याद्दिशकालवित् ॥

मूत्रातिसार । पु॰ प्रस्रावातिसरणरोगे ॥ तस्यौषधयथा । बलामूलत्वचश्चूर्णंपीतसक्षीरशर्करम् । मूत्रातिसार हरतिहृष्टमेतन्नस ंशयङ्कृति ॥

मूत्रातीत । पु॰ मूत्ररोगविशेषे ॥ यथाहु । चिर धारयतोमूत्रत्वरयानप्रवर्त्तते । मेहमानस्यमन्द वामूत्रातीत सउच्यते ॥ इति ॥

मूत्राशय । पु॰ वस्तौ । मूत्रपुटे ॥

मूत्राशयपुट । पु॰ तस्याम् । मूत्रपुटे ॥

मूत्रित । त्रि॰ कृतमूत्रोत्सर्गे । मीढे ॥ मूत्र्यतेस्म । मूत्र॰ । क्त ॥

मूर्ख । पु॰ पुरीषसे । माषे ॥ गायचीरहिते । सार्थंगायत्रीरहिते ॥ त्रि॰ मन्दे । वैधेये । बालिशे ॥ शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥ देहात्मवादिनि अधीत्यवेदशास्त्राणिसंसारेरागिणश्चये । तेभ्य प रोनमूर्खोस्तिगधर्मे श्वाजशूकरैः ॥ समङ्गतिशेष । मानुष्य दुर्लभ प्राप्यवेदशास्त्राण्यधीत्यच । बध्यते यदिस सारेकोविविच्येतमानव ॥ मुह्यति । मुह॰ । मुह खोमूर्च मूर्खोवषाप्रवासीसतिनिजविभवे सस्वयोनास्तिगेहेनानाधान्यौषधी नासतिपितरिष्टेनार्जितायेनविद्या । भार्थात्यक्त्वासुरूपारतिमिह्कु रुतेभर्तृमत्याचदास्याबाल्यावैरा भिलाषीकुमतिजनरुचिर्वक्तिराज न्मूर्खगोयम् ॥ वाल्याम॰ गीर्वाण भाषायाम उत्कृष्टपुरुषार्थलाभे सम्भवत्यधम कामयमानोमूर्ख ॥ मूर्खसहस्र योगोविषादपिसुदुर्जर । विज्ञनसहस योग सुधारससम स्मृत ॥ अचमूर्खनिन्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री॰ मूर्खत्वे ॥ मूर्खस्य भाव । तस्यभावस्त्वतलावितितल् ॥

मूर्खत्वम् । न॰ मूर्खतायाम् । अज्ञत्वे । मूरखपन॰ इ॰ भा॰ ॥ मूर्खत्व सुलभ भजस्वकुमत मूर्खस्य चाष्टौगुणानिश्चिन्तोबहुभोजकोति मुखरोरात्रि दिवास्वप्नभाक् । कार्य कार्यविचारणादिरहितोमानापमानेसमोदृत्वासर्वजनस्यमूर्ध्निचर वोमूर्खश्चिरम्जीवतु ॥

मूर्च्छनम् । न॰ मूर्च्छाशम् ॥ मूर्च्छापित्ततम प्राया ।

मूर्च्छना स्त्री॰ गीताङ्गविशेषे । ग्रामस्यसप्तमभागे ॥ चतुर्द्दशविधा ग्राम् । षड्जादिस्वरस पूर्णतायाम् । तदुक्तं शाण्डिल्येन । यत्रैव स्युः स्वरा पूर्णामूर्च्छनात्स्युदाहृतेति ॥ अन्यत्रमूर्च्छनालक्षणं यथा । क्रमात्स्वराणासप्तानामारोहश्चावरोहणम् । सामूर्च्छेत्युच्यते ग्रामस्थाएता सप्तसप्त च । ग्रामत्रयेपिप्रत्येकसप्तसप्ततुमूर्च्छना॰इतृत्येकवि शतिमूर्च्छनाभव ति ।

मूर्च्छा । स्त्री॰ कश्मले । मोहे ॥ स च्छावहासुनाडीषु पिहितासुनिलादिभिः । तमोभ्युपैतिसहसासुखदुःखव्यपोहकृत् ॥ सुखदुःखव्यपोहाञ्चनर पततिकाष्ठवत् । मोहोमूर्च्छेतितांप्राहुः षड्विधा साप्रकीर्त्तिता ॥ मूर्च्छनम् । मूर्च्छामोहसमुच्छ्राययो । गुरो श्चहलहृत्य । उपधायाश्चेतिदीर्घ । टाप् ॥ इन्द्रिये सहमनसउपपन्नेवामूर्छेतिव्याख्यातार ॥

मूर्च्छाय । पु॰ मूर्च्छायाम् ॥

मूर्च्छाल । त्रि॰ मोहयुक्ते । मूर्च्छ्ते ॥ मूर्च्छास्यास्ति । सिध्मादिषु॰ क्षुद्रजन्तूपतापयोश्चेतिपठिताञ्च । प्राणिस्थादातद्दतिनभवति॰ प्राच्छड गादेवेतिव्याख्यानात् ॥

मूर्च्छित । त्रि॰ मूर्त्ते । मूर्च्छायुक्ते । मूर्च्छिते । विचेतने ॥ सोच्छ्ये ॥ मूढे ॥ वृद्धे ॥ मूर्च्छतिस्म । मूर्च्छा॰ । गत्यर्थेतिक्त ॥ मूर्च्छासञ्जाताअस्य । तारकादित्वादितच् ॥

मूर्त्त । त्रि॰ मूर्च्छालेः । मूर्च्छिते ॥ कठिने ॥ मूर्त्तिमति । सच्चिदवेशेनैवहल्योयस्यतन्मूर्त्तमुच्यते। चित्यस्यत्रिगुणमयमूर्त्तममूर्त्तत्वितरद्वयम् ॥ मूर्च्छतिस्म । मूर्छा॰ । अकर्मकत्वात्क्त । राल्लोप । नध्याख्येतिनत्वन ॥ न्यायमते॰ पृथिवी॰ जल॰ तेज ॰ वायु मनश्च । एषागुणा रूप॰ रस॰ गन्ध स्पर्श ॰ परत्वम्॰ अपरत्वम्॰ गुरुत्वम् स्नेह ॰ वेगश्च मूर्त्तामूर्त्तसाधारणगुणा । सङ्ख्या॰ परिमिति ॰ पृथक्त्वम्॰ सयोग॰ विभागश्च इतिभापापरिच्छेद ॰॥

मूर्त्तवित् । त्रि॰ आगमिके ॥ त्रिशूलधारीमहेश्वर शङ्खचक्रादिधारीविष्णुर्वापरमार्थोभवतीत्यागमिका कल्पयन्ति । तत्रतेषाकल्पनम्॰ भ्रान्तिमात्रम् अस्मदादिशरीरवत्तस्यापिशरीरस्यपाञ्चभौ

तिकत्वात्लीलाविग्रहकल्पनञ्च ०
विग्रहाभावे लीलायोगाद्युक्तमेव ॥
मूर्त्ति । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वंगतखद्रव्यस्य परिमाणे ॥ शिवस्याष्टमूर्त्तयो यथा । सर्वं क्षिति समुद्दिष्टा भवो जलमुदाहृता । रुद्रोग्निरुग्रो वायु स्यात् भीम आकाश शब्दिता ॥ पशो पतिर्यजमानो महादेव सुधाकर । ईशान सूर्य इत्येता मूर्त्तयोष्टौ प्रकीर्त्तिता ॥ मूर्त्तिर्हि धर्मस्य पत्नी । यथा । मूर्त्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा । कान्तिरूपा शोभारूपा । परमात्मा च विश्वौघो निराधारो यया विना ॥ शोभां विना परात्मापि निराधारो निरर्थक इत्यर्थ ॥ सर्वं च शोभारूपा च लक्ष्मी मूर्त्तिमती सती । श्रीरूपा मूर्त्तिरूपा च मान्या धन्याति पूजिते ति भागवते ६ स्कन्धे १ ध्याय ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेन विलक्षणविविधसंस्थानासु तनुषु ॥ मूर्च्छति० मूर्च्छयते वा । मूर्च्छा० । क्तिन् । राल्लोप ॥ रूपे ॥ स्वभावे ॥ लग्ने ॥
मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्ति काठिन्यमस्यास्ति । तदस्याऽस्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्त्वान् ङी प् ॥ न० शरीरे ॥
मूर्त्त्युपचय । पु० स्थौल्ये ॥
मूर्द्धग । पु० चत्रिये ॥
मूर्द्धकर्परी । स्त्री० जलच्छायायाम् ॥
मूर्द्धखोलम् । न० छत्रे ॥
मूर्द्धज । पु० केशे । त्रि० मूर्द्धि जाते ॥
मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्ग परिषेकस्य पिचवस्तिरिति क्रमात् । मूर्द्धतैलचतुर्धास्याद्बलवत्तद्यथोत्तर ॥
मूर्द्धा । पु० उत्तमाङ्गे । शिरसि । मस्तके ॥ छाया कारे शिरोभिस्तुनृपानिम्नशिरावनी । चिपिटेस्तु पितुर्हन्त्यु गंशाख्या परिमण्डले घटमूर्द्धा पापरुचिर्धनाढ्यो परिवर्ज्जित ॥ मुह्यत्यस्मिन्नाहते । मुह० । श्वन्नुक्षन्निति० मुहे कनिन्० निपातनादुपधादीर्घो धोऽन्तादेशो रमागमश्च ॥
मूर्द्धन्य । त्रि० मूर्द्धनि भवे ॥ शरीरावयवाच्चेति यत् । ये चाभावकर्मणोरिति प्रकृतिभावान्नस्तद्धितइति० टिलोपाभाव ॥
मूर्द्धपुष्प । पु० शिरीषवृक्षे ॥
मूर्द्धरस । पु० भक्तफेने ॥
मूर्द्धवेष्टनम् । न० उष्णीषे ॥
मूर्द्धाभिषिक्त । पु० भूपाले । राजनि ॥ चत्रिये । राजन्ये । बाहुजे ॥

मूर्द्धिं॰ अभिषिच्यतेस्म । षिचक्ष रणे । क्त । राज्यदानसमये॰ मूर्द्धन्यभिषिच्यते॰ तत्प्रभवत्वात्सर्वोपिक्षत्त्रियोस्मूर्द्धाभिषिक्तउच्यते । मन्त्रिणि ॥ प्रधाने ॥ मूर्द्धन्यभिषिक्ते । वर्णसङ्करजातिविशेषे विप्रात्क्षत्रियायाम्जाते ॥

मूर्द्धावसिक्त । पु॰ ब्राह्मणात्परिणीतक्षत्रियायामुत्पन्ने ॥ अस्यव्रत्तिस्तु । हस्त्यश्वरथशिक्षाचअस्त्रधारणं तथा । मूर्द्धावसिक्तस्य वृत्तिः प्रोक्ताउशनसाशुभा ।

मूर्वा । स्त्री॰ लताविशेषे । देव्याम् । मधुरसायाम् । मोरटायाम् । मुरहर॰ इ॰ भा॰ प्र॰ । धनुर्गुणोपयुक्ता॰ सुरगा॰ इ॰ गौ॰ भा॰ प्र॰ मूर्वासरागुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् । त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा । मूर्वति । मुर्वीबन्धने । अच् ।

मूर्विका । स्त्री॰ मूर्वायाम् ॥ मूर्वैव । स्वार्थेकन् ॥

मूलम् । न॰ शिफायाम् ॥ ब्रध्ने । अङ्घ्रिनामके । जड॰ इ॰ भा॰ । मूलमात्रे । यथा । अर्थस्यमूलं निकृतिः क्षमाच कामस्य मूलंस्व पुर्वयश्च । धर्मस्ययागादिदयादमश्च मोक्षस्य सर्वोपरमः क्रियाश्च । आद्ये । प्रथमे ॥ यथा । मूलप्रकृति । मूलवित्ते ॥ भे ॥ निकुञ्जे ॥ निजे ॥ चरणे । टीकार्हग्रन्थे ॥ पुरणे । पिप्पलीमूले ॥ पुष्करमूले । विशेषमूलस्यान्वेषणे नित्ये षोयथा । नदीनामग्निहोत्राणांभारतस्यकुलस्यच । मूलान्वेषोनकर्तव्योमूलाद्दोषोनहीयते ॥ पु॰ न॰ अन्तिके । पार्श्वे । नक्षत्त्रविशेषे ॥ यथा । हस्तास्वातिश्रवणाश्विनीपैष्णशिरोनपुंसिस्यात् । पुंसिपुनर्वसुपुष्यौमूलन्त्वस्त्रीस्त्रियांशेषा ॥ निर्ऋतिदेवताकेनक्षत्रे ॥ अस्मिन्जातस्यफलंयथा । मूलधिरुद्धा नयव समूलकुजदहत्ये वदन्तिच न्त । चेदन्यथात पुरुषाविशेषात् सौभाग्यमायुस्सकुलानुवृद्धि ॥ मूलसञ्ज्ञे ॥ मूलति । मूलप्रतिष्ठायाम् मूलरोहणे वा । इगुपधेति कः ॥ भवते । मूङ्बन्धने । मूथक्स्थिस्य क्त ॥

मूलक । पु॰ स्थावरविषप्रभेदे ॥

मूलकम् । न॰ मूलविशेषे । राजालुके । महाकन्दे । हस्तिदन्तके । मूली॰ इतिभाषाप्रसिद्धे कन्दे ॥ अस्यगुणा । मूलकंद्विविधंप्रोक्तं तत्रैकं लघुमूलकम् । शालामर्कटकं विस्रं शालेयं मरुसम्भवम् ॥ चाणक्यमूलकं तीक्ष्णं तथामूलकपोतिका । नेपालमूलकं चान्यत्

गोमेषशनिताधमुर्यूकघटास्तथा। मूलत्रिकोणभवनान्याहुः सूर्यादित क्रमात् ॥ एतेराशय क्रमात् सूर्यादीनांमूलत्रिकोणभवनान्याहु। यथा। सिंह सूर्यस्यमूलत्रिकोणभवनम्। एवंवृषश्चन्द्रस्य॰मेष कुजस्य॰कन्याबुधस्य॰धनुर्गुरो तुलाशुक्रस्य॰कुम्भ शनेरिति ॥

मूलत्रिकोणांश। पु॰ रव्यादीनांत्रिकोणभागे ॥ य॰। खयुग्मभार्कदिक्पालदिक्पञ्चदशविंशति। मूलत्रिकोणभागास्युः सूर्यादीनांयथाक्रमात्। यथा। सिंहराशौसूर्यस्यविंशत्यंशामूलत्रिकोणभागास्युः। एवंचन्द्रस्यवृषेत्र्यंशमतुर्थांशयाद्ध्वंसप्तविंशत्यंशाः कुजस्यमेषेद्वादशांशाः बुधस्यकन्यायातुर्वणपञ्चदशांशादूर्द्ध्वं दशांशाः पञ्चविंशत्यंशपर्यन्तम्॰गुरोर्धनुषिदशांशाः शुक्रस्यतुलायांपञ्चदशांशाः शनेः कुम्भेविंशत्यंशाः मूलत्रिकोणभागाः स्युरिति ॥

मूलदेव। पु॰ मूलभद्रे। कंसासुरे।

मूलद्रव्यम्। न॰ मूलधने ॥

मूलधनम्। न॰ वणिक्मूलवित्ते। नीव्याम्। परिपणे। पूंजी॰इ॰भा॰। मूलद्रव्यवत्‌ ॥

मूलनगरम्। न॰ राजधान्याम् ॥

मूलपर्णी। स्त्री॰ मण्डूकपर्ण्याम् ॥

मूलपुष्करम्। न॰ पुष्करमूले ॥

मूलपोती। स्त्री॰ शाकप्रभेदे। क्षुद्रवल्ल्याम्। क्षुद्रपोतिकायाम् ॥

मूलप्रकृति। स्त्री॰ आद्यायांशक्तौ। प्रधाने ॥ प्रकृति प्रधानम्। मूलस्यामौ॰प्रकृतिरस्येतिविग्रहः। विश्वस्याद्यं कलापस्यसाम्यं मूलम्॰नस्वस्याम्मूलान्तरमस्तिपरनवस्थाप्रसङ्गात्। नचानवस्थायामस्तिप्रमाणम् ॥

मूलफलद। पु॰ पनसे। कण्टकिफले ॥ मूले॰फलंददाति। ददाञ्॰। क ॥

मूलबन्ध। पु॰ राजयोगाङ्गविधिभेदे ॥ यम्मूलंसर्वभूतानांयन्मूलंचित्तबन्धनम्। मूलबन्धः सदासेव्योयोग्योसौराजयोगिनाम् ॥

मूलभद्र। पु॰ कंसासुरे ॥

मूलरस। पु॰ मोरटलतायाम् ॥

मूलविभुज। पुं॰ रथे ॥ मूलानि विभुजति। भुजीकौटिल्ये। मूलविभुजादित्वात्क ॥

मूलस्तम्भ। पुं॰ स्थितिहेतौ ॥

मूला। स्त्री॰ शतावर्याम् ॥ मूलभे ॥

मूलाधार। पुं॰ गुह्यलिङ्गयोर्मध्ये ऽङ्गुलिद्वयमितस्थाने। शरीरस्थसकलनाडीनां मूलस्थाने ॥ मूलमाधारषट्कं नाम्नामूलाधारं तद्विदुरितिदेवीगीतोक्तेः ॥

मूढाविद्या । स्त्री० अनाद्यविवेके । अंयजीवोनकूटस्थ ।वर्षिनतिकदाचन । अनादिरविवेकोयमूढाविद्येतिगम्यताम् ॥

मूलाह्वयम् । न० मूलके ॥

मूली । पु० वृक्षे ॥

मूली । स्त्री० ज्येष्ठायाम् ॥

मूलेर । पुं० जटायाम् ॥ मूलति । मूल० । मूलेरादयश्चेति साधु ॥

मूल्यम् । न० अवक्रये । वर्त्ते । मोल० निरख० हू० भा० दर० दाम० इतिसाधारणजनभाषा ॥ भृत्यायाम् । वेतने । महीना० भाडा० हू० भा० ॥ मूलेनआनाम्यम्०मूलेनसमया । नौवयोधर्मेत्यादिनायत् वि० मूलतउत्पाटनयोग्ये मुद्गादौ ॥ मूलमावर्हयेत् । मूलमस्यावर्हीतियत् ॥

मूष । पुं० मूषिके ॥ तैजसावर्त्तन्या ॥

मूषक । पुं० मूषिके ॥ मूषति । मूषस्तेयेदीर्घोपधोप्यस्ति । भ्वादि । वचुलस्यायाकुनवा ॥

मूषककर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषकमारी । स्त्री० सुतश्रेण्याम् ॥

मूषका । स्त्री० मूषिकायाम् ॥

मूषिकाराति । पुं० पोतौ । बिडाले ॥

मूषली । स्त्री० पक्षा ॥

मूषा । स्त्री० स्वर्णाद्यावर्त्तनपात्रे । तैजसावर्त्तन्याम् ॥ देवताडे ॥ अन्न शुषिरायामन्तप्रतिमायाम् ॥ मूषति । मूष० । इगुपधेतिक ॥ गवाक्षे ॥ यथा । एकविल्यादिमूषावहनमितिमक्षोब्रूहिमेभूमिभर्तुर्हर्म्येरम्येष्टमूषे चतुरविरचिते शुभ्यशालाविशाले । इत्यादिलीलावत्याम्छीव्यवहार ॥

मूषाकर्णी । स्त्री० आखुपर्ण्याम् ॥

मूषातुत्थम् । न० कास्यनीले । वितुन्नके । हेमतुत्थे ॥

मूषिक । पु० उन्दुरौ । आखौ ॥ अस्यमासगुणा । अहिनकुलमल्यगोधामूषिकमुख्याविशेषया कथिता । श्वासानिलकासहरतन्या सपित्तदाहकारम् ॥ अन्येविशेषया येषु केचिदिडोन्दुरुकादय । गर्हितनख्यमासश्चमवगौरवदुर्लभम् ॥ अपिच । मूषकोमधुर स्निग्धोव्यवायोवलवर्धन । पारिभाषिकोयथा । विभवेसतिमैव।लिनद्दातिजहोतिच । तमाहुराखुतस्यान्नभुक्त्वाकृच्छ्रेणशुध्यति ॥ मुष्णाति । मुष० । मुषेदीर्घश्चेतिकिकन् ॥

मूषिकपर्णी । स्त्री० जलतृणविशेषे । चित्रायाम् । उपचित्रायाम् । न्यग्रोध्याम् । मूषाकर्णीविख्याता

याम् । द्र रद्राकानीपामा० द्र० गी० दे० भा० ॥ मूषिकपर्णमस्याः मूषिककर्णाकारपर्णत्वात् । पाकक र्णेतिङीष् ॥

मूषिका । स्त्री० मूषिकपर्ण्याम् ॥ मूषकस्त्रियाम् ॥ अजादित्वाट्टाप ॥ मूषायाम् ॥

मूषिकाङ्क । पु० गणेशे ॥

मूषिकाञ्चन । पु० विघ्नहारिणि । गणेशे ॥

मूषिकार । पु० आखौ । उन्दुरौ ॥ मूषिकायाः पुमान् । आरक्पुंसी त्यारक्

मूषिकाराति । पु० विडाले ॥

मूषिकाह्वया । स्त्री० सुतश्रेण्याम् ॥ मूषिकपर्ण्याम् ॥

मूषित । त्रि० मुषिते । चोरिते । मूष्यतेस्म । मूषस्तेये । क्तः ॥

मूषिपर्णिका । स्त्री० मूषिकपर्ण्याम् ।

मूषी । स्त्री स्वर्णाद्यावर्त्तनमात्रे । स्वर्णादिद्रवीकरणपात्रे । मूषायाम् ॥

मूषीक । पुं० उन्दुरौ । मूषिके ॥

मूषीककर्णी । स्त्री० मूषिकपर्ण्याम् ॥

मूषीका । स्त्री० उन्दुरौ ।

मृकण्ड । पु० मृकण्डुमुनौ ॥ अयमृषिर्मृगव्यादयस्त इति सूत्रे० उज्ज्वलदत्तग्रन्थे स्पष्टः ॥ मृकण्डसमुनेस्तीर्थं तद्याख्यामतिनिर्मलमिति स्कान्दोक्तेश्च ॥



मृकण्डु । पुं० मृकण्डमुनौ

मृग । पुं० आरण्यपशुमात्रे । करिविशेषे ॥ मृगशिरोनक्षत्र ॥ यथा मृगेगत्वाशिवेश्चित्त्वाऽदितौग च्छन्नृजयेद्रिपूनिति ॥ एकदेशप्रयोगात् ॥ अन्वेषणे ॥ याञ्चायाम् ॥ मार्गशीर्षमासे ॥ यज्ञविशेषे ॥ मृगनाभौ ॥ मकरराशौ ॥ मृगयायाम् ॥ स्वनामप्रसिद्धे पशुविशेषे । कुरङ्गे । वातायौ । हरिणे । अजिनयोनौ ॥ अस्यमासप्रकारगुणाः । मार्गमासबहुशकलित स्विन्नमौ-ष्णतोयेनमर्दं ईजरणसहितेपाचि त शब्दमुच्चै । सान्द्र सार्द्रलवणास क्ति दाडिमेनातियुक्त खादन खादन्कलयतिशिरश्चन्द्रचूडोपिनूनम् ॥ ऐण मास हिम ग्राहिरुच्य दोषच यापहम् ' षड्रसबलदपथ्य हृद्य लघु ज्वरापहम् ॥ मृग्यते । मृगअन्वेषणे । अदन्त । घञ् । मृगोनवविधोयथा । सम्बरोरोहितोन्यङ्कु कुरङ्ग मुहमोरुरु । एणश्चहरिणश्चेतिमृगा नवविधामता ॥ पाठान्तरयथा । रमूकरोहितोन्यङ्कु सम्बरोवभुणोरुरु । अथैवहरिणश्चेतिमृगा नवविधामता ॥ हरिणश्चापिविज्ञेय पञ्चभेदोत्र भैरव । ऋष्य खड्गोरुरुश्चैवपृषतश्च मृगस्तथा ॥ एतेवलिप्रदानेचकर्म

द्रानिचकीर्त्तिता ॥ इतिकालिका पुराणे ६७ अध्याय अथमृगपरी क्षा मृगनाभिसमादातुकौतुका र्थंतथापुन । मृगा मोघ्यामहो- न्द्राणांतेषा-न्यामिलक्षणम् ।। पृ थिव्यब्वायुगगनतेजोधिकास्तुपञ्च धा। भिद्यन्ते नैनभेदास्तु नमस्तामृग जातय ॥ तद्यथा। येगम्भिन क्षी णशरीरकर्णास्ते पार्थिवागम्यमृगा प्रदिष्टा । सर्वाङ्गमेषासुरभिप्रका म पुण्येप्रदेशेप्रभवन्तितेतु ॥ येवैवि शालागुरुदीर्घशृङ्गाश्वमासलाखो ब्रखुर देशा । आप्यास्तुतेवैप्रसर न्तिभूरिसर्वत्रदेशेप्रभवन्तिचैव ॥ धा वन्तियेवातमिवान्तरीक्षेदीर्घास्तुते- वातमृगा प्रदिष्टा । तेयत्रयत्रै वभवन्तिशक्तास्तत्रैवसर्वाणिशुभा- निसन्ति ॥ लघुप्रमाणालघुवीर्यस- त्वानिर्गन्धदेहाश्छगलप्रमाणा । तेगागनावेगकरानराणास्पृश्यानते नापिनिरीक्षणीया ॥ येकृष्णवर्णा गुरुदीर्घशृङ्गा क्रुद्धाभृश यान्ति चवायुवेगा । तेकृष्णसारा खलु तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह । पार्थिवादिमृग सर्वं श्चतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्त नुलोमानोब्राह्मणामृगजातय । क्रुद्धा ' पञ्चरिशृङ्गाश्चचत्रिया ' खरलोमशा । आवर्त्तशृङ्गास्तनवो



हरिणार्वैश्यजातय कृष्णृङ्गावाप्य शृ गावाशूद्रा खरतनूरुहा । अश्वा नायेगुणादोषा स्तेत्तेयाहरिणेष्व पि ।। तथापिदोषा पञ्चामीवच्य न्तेहरिणाश्रया । नेत्रयोरन्तरेय स्यलोमावर्त्ता सपाण्डुत् ॥ विष मोविकृतोशृङ्गोयस्यसर्वेमनाशन । आवर्त्त पृष्ठतोयस्यआनाभिम भिविन्दति ॥ पश्चार्द्धेयस्यवावर्त्त स्तोस्यान्योभयकारको । वर्णैनैव पदादीनांवैकृताङ्गनाशन ॥ गा र्ग्यं । दोषवन्मृगजातीनाविजा तीनामथापिवा। दर्शनात्स्पर्शना त्तैवगन्धादानाच्चपोषणात् ॥ भवे युर्विपद सर्वास्तथाचैवाद्यपोष णात् ॥ शङ्खोपि । हरिणपोषणतो धरिणीभुजानरिभवेन्मकदुङ्गवपीड नम् । नपविवञ्जितजारिपुजंभयत दनत हरिण गणिनमृप ॥ इतिमृग परीक्षा युक्तिकल्पतरौ ॥ चतुर्विध पुरुषेषुपुरुषविशेषे ॥ तल्लक्षणा यथा । वदतिमधुरवाणींदीर्घनेत्रो ऽतिभीरुश्चपलमतिसुदेह शीघ्रवे गोमृगोयम् ॥ शशकेपद्मिनीतुष्टा मृगेतुष्टाचचित्रिणी। वृषभेशङ्खिनी तुष्टाहयेतुष्टाचहस्तिनी ।। पद्मिनी शशयोर्योनिर्मेढ्रकौचतुरङ्गुलौ । चित्रिणीमृगयोर्योनिर्मेढ्रकौचलया विधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री॰ विडङ्गे ॥ मृगस्येवगमनशीलायाम् ॥

मृगचर्म्मजम् । न॰ जवादिनामकगन्धद्रव्ये ॥ त्रि॰ मृगचर्मजाते ॥

मृगचेटक । पु॰ खट्टासे ॥

मृगचेष्टितम् । न॰ मृगेङ्गिते ॥ तद्यथा । सीमागतावन्यमृगारुवन्तस्थिताव्रजन्तोयसमापतन्त । सम्प्रत्यतीतं ष्यभयानिदीप्ता कुर्वन्ति शून्य परितोभ्रमन्त ॥ दीप्ताभयकुर्वन्तिआवेदयन्तीतिसर्वत्रान्वयोबोध्य ॥ तेग्राम्यसत्त्वैरनुवाच्यमानाभयायरोधायभवन्तिवन्या । द्वाभ्यामपिप्रत्यनुवाशितास्तेवन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वेद्वारसस्थेपुरस्यरोधोवाच्य सप्रविष्टे विनाश । सूतेमृत्यु स्याद्भयसस्थितेचगोहयातेबन्धनसप्रदिष्टम् ॥

मृगजम्बु पु॰ मृगापत्ये ॥

मृगजालिका । स्त्री॰ वागुरायाम् ॥

मृगजीवन । पु॰ व्याधे ॥ मृगाजीवनमस्य ॥

मृगणा । स्त्री॰ अपह्वतद्रव्यान्वेषणे ॥ मृग॰ । ण्यासंतियुच् ॥

मृगतृट् । स्त्री॰ मृगतृष्णायाम् ॥

मृगतृषा । स्त्री॰ मरीचिकायाम् ॥ मृगाणांतृषाऽस्त्यस्याम् । अर्श आद्यच् । टाप् ॥

मृगतृष्णा । स्त्री॰ मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकतासुअर्करश्मयप्रतिफलितादूरस्थानांजलमितिबुद्धिविषयास्तासु मृगतृष्णाऽस्त्यस्याम् । अर्श आद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री॰ मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थे कन् ॥ रे चित्तचिन्तयचरं चरणौमुरारे पारं गमिष्यसियतोभवसागरस्य । पुत्रा कलत्रमितरेसुहृद सहाया सर्वविलोकयसखे मृगतृष्णिकाभम् ॥

मृगदंशक । पु॰ कुक्कुरे ॥ मृगान्दशति । दंश दंशने । कर्म्मण्यण् । क ॥

मृगधूर्त्तक । पु॰ शृगाले ॥ मृगेषुधूर्त्तइव । सञ्ज्ञायाकन् ॥

मृगनाभि । पु॰ कस्तूर्याम् ॥ मृगस्यनाभि ॥

मृगनाभिजा । स्त्री॰ कस्तूर्याम् ॥

मृगनेत्रा । स्त्री॰ रात्रिविशेषे ॥ त्वयापुत्रकनाधीतमृगनेत्रासुरात्रिषु तेनत्त्व विदुषामध्ये पङ्के गौरिवसीदसि । मृगोनक्षत्रविशेषोनेतायस्या । नेतुर्नक्षत्रे ऽप्वक्तव्य ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रे इवनेत्रे चक्षुषी यस्या ॥

मृगपति । पु॰ मृगेन्द्रे । सिंहे ॥

मृगपिप्लु । पु॰ पक्षजे । चन्द्रे । हि

माशी ॥

मृगप्रियम् । न० पर्वततृणे ॥

मृगवधाजीव । पु० व्याधे ॥ मृगवध आजीवोयस्यस ॥ मृगवधेनाजी-वतिवा । जीव० । इगुपधेतिक ॥

मृगबन्धनी । स्त्री० मृगबन्धनार्थजालविशेषे । खावलृ० इ० पर्वत भा० ॥ वागुरायाम् ॥ मृगोबध्यतेऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।

मृगभक्ष्या । स्त्री० जटामांस्याम् ॥

मृगमद पु० कस्तूर्याम् ॥ मृगस्य-मद ॥

मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥

मृगमातृक । पु० मृगविशेषे ॥ स्व-ल्प पृथूदरोच्छ्रेय, शरभोमृगमातृक । गुणे शशिनसदृशोगदितो मृगयमातृक ॥

मृगया स्त्री० आखेटके । मृगव्ये । आखेटे । खेटे । हिडा० इ० भा० ॥ पवलखकुलाशिनोभक्षान्निजनीडद्रुमपीडिन खगान् । वनवद्यात्याहिंनोमृगान्मृगयाचोवनभूभृताम्ताम् ॥ इतिश्रीहर्ष ॥ मृग्यन्ते मृगाअस्याम् । मृग० । घु० अदन्त । परिचर्य्यापरिसर्य्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधु ॥

मृगयु । पु व्याधे । लुब्धके । इ डिया० इ० भा० प्र० । मासविक्रयार्थमृगादिपशुहन्तरि ॥ मृगान्वधार्थयाति । या० । मृगय्वादिस्वात्कु ॥ गोमाये । शृगाले ॥ परमेष्ठिनि ॥

मृगरसा । स्त्री० सहदेव्याम् ।

मृगराट् । पु० सिंहे । मृगेषुराजते । राजृ० । क्विप् ॥

मृगराज । पु० सिंहे ॥ मृगाणांराजा । राजाहःसखिभ्यष्टच् ॥

मृगराटिका । स्त्री० जीवन्त्याम् ॥

मृगरिपु । पु० सिंहे ॥ मृगाणांरिपु ॥

मृगरोमजम । न० राङ्कवे । मृगरोमजेवस्त्रे ॥

मृगलाञ्छन । पु० चन्द्रे । शशिनि ॥ मृगोलाञ्छनं यस्य ॥

मृगवल्लभ । पु० कुन्दुरुतृणे ॥

मृगवाहन । पु० वायौ ॥ मृगोवाहनं यस्य ॥

मृगव्यम । न० मृगयायाम् ॥ मृगाव्यधन्तेऽत्र । व्यधगतौ । घञ्थेकवि तिङ ।

मृगशिरा । स्त्री० पञ्चमनक्षत्रे ॥ मृग शिरोऽस्य ॥

मृगशिर । न० मृगशीर्षे । पञ्चमीनक्षत्रे ॥ अत्रजातस्यफलम् । शरासनाभ्यासरतोविनीत, सदानुरक्तो गुणिनांगुणेषु । भक्तानुपक्षे भरे

णपूर्णं सन्मार्गवर्त्तीमृगजन्मभागी ॥ आक्रान्त्यामृग शिरोऽस्य ॥

मृगशिरा । स्त्री० आग्रहायण्याम् ॥ मृगशिरसि ।

मृगशीर्षम् । न० मृगशिरसिनक्षत्रे ॥ आक्रान्त्यामृग शीर्षं यस्य ॥

मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥

मृगा । स्त्री० सहदेवीलतायाम् ॥

मृगाक्षी । स्त्री० इन्द्रवारुण्याम् । विशालायाम् ॥ मृगनेत्रायाराक्षौ ॥ मृगलोचनायानार्याम् ॥ मृगस्य अक्षिणीइवअक्षिणीयस्याः ॥

मृगाङ्क । पु० कलानिधौ हिमांशौ ॥ कर्पूरे ॥ वायौ ॥ मृगचिह्ने ॥ मृगोङ्कायस्यस ॥ यथादर्पणं प्राप्य परावृत्तानयनरश्मयोग्रीवास्थमेवमुखदर्पणगतमिवपश्यन्ति०एवचन्द्र मण्डलप्राप्यपरावृत्तास्तेदूरत्वदोषात्०पृथिवीमव्यक्तरूपामिवचन्द्रमण्डलगतांपश्यन्ति०सएवचन्द्रे मृगचिह्नमित्युपचर्यते० इतिव्याख्यातार ॥ यक्ष्मरोगस्यौषधविशेषे ॥ यथा। स्याद्रसेनसमहेममौक्तिकद्विगुणभवेत् । गन्धकस्तुसमस्तेनरसपादस्तुटङ्कण ॥ सर्वंतद्गोलकंकृत्वा काञ्जिकेनविशोधयेत् । भाण्डेलवणपूर्णेथपचेद्यामचतुष्टयम् ॥ मृगाङ्कसञ्ज्ञकोह्येयोरोगराजनिकृन्तन । अपिच । रसस्यभस्मनोहेम पिष्टीकृत्यप्रयोजयेत् । गुञ्जाचतुष्टयस्त्वाज्यमरिचैर्भक्षयेद्बुध ॥ इति मधुमती ॥

मृगाजीव । पु० व्याधे ॥

मृगाण्डजा । स्त्री० कस्तूर्याम् ॥

मृगादन । पु० तरक्षौ । तेंदुवावाघ ०तरख इ० भा० प्र० ॥ मृगमत्ति । अद० । ल्यु ॥

मृगादनी । स्त्री० इन्द्रवारुण्याम् । गवादन्याम् ॥ मृगेर्वारौ ॥ सहदेव्याम् ॥

मृगादि । पु० मार्गशीर्षे ॥

मृगादी । पु० सिंहे ॥ मृगानत्तुंशील यस्य । णिनि ॥

मृगाधिप । पु० सिंहे ॥

मृगान्तक । पु० चित्रव्याघ्रे । चीता ० इ० भा० ॥ मृगाणामन्तक ॥

मृगाराति । पु० मृगस्यशत्रौ ॥ कुक्कुरे ॥ मृगस्यअराति ॥

मृगारि । पु० कण्ठीरवे । सिंहे ॥ शार्दूले । व्याघ्रे ॥ मृगस्यअरि ॥ कुक्कुरे ॥ रक्तशिग्रौ ॥

मृगावित् । पुं० व्याधे ॥

मृगास्य । पु० मकरराशौ ॥ मृगस्य आस्यमिवआस्यं यस्यस ॥

मृगित । त्रि० अन्वेषिते । ढूंढा० इ० भा० ॥ मृग्यतेस्म । मृग० । क्त । इट् ॥

मृगी । स्त्री० वनिताविशेषे ॥ मृग

नाँगसिंयाम्। मृगीणाजङ्गलोत्था नाञ्छागीर्चरितुणपय.॥ कश्यपकन्यायाम्। पुलहभार्यायाम्। हरिणादिमृगाणामातरि॥ मध्यावृत्तिप्रभेदे। रोमृगी० डूतिलक्षणलक्षिते॥ यथा। सामृगीलोचना। राधिकाश्रीपते॥ हरिण्याम्॥ सितोदरेपीतपृष्ठे वराटके॥

मृगेक्षणा। स्त्री० मृगनेत्रायाम्॥ मृगेर्वारौ॥

मृगेन्द्र। पु० सिंहे॥ नाभिषेको नसंस्कारः सिंहस्यक्रियतेवने। विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्रता॥ मृगाणामिन्द्रः॥ वर्णवृत्तान्तरे॥ पयोधरधारिमृगेन्द्रमवेहि॥ यथा। वृथाविलपानि॥ मध्यलघोपञ्चमात्रापर्याये० ऽ।ऽ०॥ यात्रायोगान्तरे॥ लग्नेशुक्रः शशीवर्त्मोकामेस्थानेगुरुर्यदा। मृगेन्द्रयोगोविख्यातोयातु सर्वार्थसाधकः॥

मृगेन्द्रचटक। पुं० श्येने॥ चटकानामृगेन्द्रः॥ राजदन्तादि॥

मृगेन्द्रमुखम्। न० अतिजगती १३ छन्दोभेदे॥ भवतिमृगेन्द्रमुखनजौ जरौग॥ यथा। गुरुभुजवीर्यभरहरिमद्राश्वायुधिसमुपेत्यनदानवाजिजीवु। क्षुधितमृगेन्द्रमुखमृगाउपेत्यवानुखलविभतिजीवनस्ययोगम्॥

मृगेन्द्राणी। स्त्री० वासके॥

मृगेर्वारु। स्त्री० श्वेतेन्द्रवारुण्याम्। मृगाद्याम्। श्वेतपुष्पायाम्। मरुजायाम्॥

मृगेष्ट। पु० मुद्गरवृक्षे॥

मृग्य। त्रि० अन्वेष्ये। मृगितव्ये॥

मृज। पु० वाद्यविशेषे। मर्दले। दारुजे। मादल० हू० गौ० दे० भा० प्र०॥

मृजा। स्त्री० मार्जनायाम्। प्रोञ्छनादिनाङ्गनिर्मलीकरणे। मार्जनम्। मृजूशुद्धौ। मृजूशौचालङ्करणयोः। षुरादिर्वा। भिदाद्यङ्॥

मृज्य। त्रि० मार्ज्जनीये॥

मृड। पु० शिवे॥ मृडति। मृडसुखने। मृड्णातिवा। मृडचचात् चोदे। इगुपधत्वात्कः॥

मृडङ्कण। पु० बालके॥ मृडति। मृड०। मृड. कौकच्कङ्कणाविति कङ्कण. प्रत्यय.॥

मृडा। स्त्री० दुर्गायां॥

मृडानी। स्त्री० चण्डिकायाम्। अम्बिकायाम्॥ मृडस्यस्त्री। इन्द्रवरुणेतिङीषानुकौ॥

मृडी। स्त्री० दुर्गायाम्॥

मृडीक। पु० मृगे। हरिणे॥ मृडति। मृड कीकच्कङ्कणाविति कीकच्॥

मृणालम्। न० नलदे। उशीरे॥ पु०

न० वर्त्से । पद्मनाले ॥ मृणालमथी तलम्बष्य पित्तदाहास्रजिद्गुरु । दुर्जरस्वादुपाकञ्चस्तन्यानलकफप्रदम् ॥ सङ्ग्राहिमधुरंरूक्षं शालूकमपि तद्गुणम् । विसाङ्कुराश्चन्द्रकलानुकारा विभाविता सैश्चनिम्बुकाभ्याम् । विकीर्यखण्डीकृतशृङ्गवेराजलेपिवङ्कि लघुदीपयन्ति ॥ मृण्यते । मृणहि सायाम् । तमिविश्रिविडिमृणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यत्र । पुष्करादिभ्यो देशइतीनि : ॥

मृणाली । स्त्री० विसे । कलादिमूले ॥ अपचयविवक्षायामृगौरादित्वान्ङीष् ॥ स्वल्पमृणालजातौ ॥

मृत । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० वृ० भा० ॥ यथा । धर्मप्रव्रजितस्तपः प्रवसितः सत्यञ्चदूरेगतंपृथ्वीमन्दफलाजनाः कपटिनो लौल्ये स्थिताब्राह्मणाः । मर्त्याः स्त्रीवशगाः स्त्रियश्चपला नीचाजनाउन्नताहाकष्टंखलुजीवितंकलियुगेधन्यानरायेमृताः ॥ इतिगारुडे ११५ अध्यायः ॥ न० मृत्यौ ॥ याचिते । मृतन्तुयाचितप्रोक्तमितिमनुः । याचनवत्सिद्धिमरणमिवदुःखजनकत्वान्मृतमुच्यते ॥ म्रियतेस्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्तः । तनिमृङ्भ्यांकिच्चेतितन्वा ॥

मृतकम् । न० शवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतकेचसूतिस्तथा । शेषेणैवभवेच्छुद्धिरहः शेषेद्विरात्रकम् ॥

मृतकल्प । त्रि० मृतप्राये ॥ ईषदूनोमृतः । ईषदसमाप्तावितिकल्पप्प्रत्ययः ॥

मृतकान्तक । पु० शृगाले ॥

मृतजीव । पु० तिलकवृक्षे ॥

मृतमत्त । पु०)

मृतमत्तक । पु०) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकार्याविद्यायाम् ॥ गोरक्षदुग्धायाम् ॥ मृतः सञ्जीव्यतेऽनया । जीवप्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नातः । सप्तमीतिसमासः ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतस्वमोक्ता । पु० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

मंख्यया । स ज्ञायाकन् ।।

मृति । स्त्री० मरणे ॥ मृङ प्राण त्यागे । स्त्रियाक्तिन् ।' मृति प्राणवियोग स्यान्नतुनाश सतो मत । मृङ प्राणत्यागइत्युक्त स्वयनष्ट कथ त्यजेत ।।

मृत्कर । पु० कुम्भकारे ।।

मृत्कास्यम् । न० शरावे ॥

मृत्किरा । स्त्री० जलजन्तुविशेषे । घुर्घुर्याम् ॥

मृत्क्षारम् । न० मूलके ॥

मृतखलिनी । स्त्री० सप्तलायाम् । चमकषायाम् ॥

मृत्तालम् । न० तुवरिकायाम् । सुराष्ट्रजमृत्तिकायाम् ।। मृदिताल प्रतिष्ठाऽस्या ।।

मृत्तालकम् । न० मृत्ताले ।। स्वार्थे कन् ।।

मृत्तिका । स्त्री० मृदि ।। माटी० इ० भा० ।। मृदेव । स्वार्थे० मृदस्तिकन् । प्रत्ययस्यादित्त्वे वसिष्ठ ०इकारोच्चारण प्रक्रियालाघवार्थम् । टापोलुक्यपिश्रवणार्थ इ । पञ्चभिर्मृत्तिकाभि . क्रीत पञ्चमृत्तिक पट : ॥

मृत्फली । स्त्री० कुष्ठौषधे ॥

मृत्यु । पु० मरणे । पञ्चतायाम् । निधने । शरीराद्यारम्भककर्मचय निमित्ते । सर्वमर्मच्छेदनरूपे० शरीरादिविच्छेदे ॥ सचसर्वेषाब्रह्मादीनाकालप्राप्यावश्यमेवभवति । तथाहि । प्राप्तेकालेस्वयब्रह्मामगर्द्वयसम्मिते । निधन यातितरसा जगत्कर्तास्वयप्रभु । चतुर्युगसहस्रे पुब्रह्मणोदिवसे किल । पतन्ति भवनात्पञ्चनवचेन्द्रास्तथापुन तथैवद्विगुणेविष्णु मरणायोपकल्प्यते ।। तथैवद्विगुणे कालेशङ्कर शान्तिमेतिच ॥ काचिन्तामरणे मूढानिश्चलेदेवनिर्मिते । मही महीधरणाञ्चनाश सूर्य्यशशाङ्कयो ।। जातस्यहिध्रुवोमृत्युध्रुवजन्ममृतस्यच । अध्रुवेस्मिन्शरीरे तुरक्षणीयश स्थिरम् ।। इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्याय ।। आसन्नमृत्युर्लोकोयध्रुवादीन्नहिपश्यति ।। तथाहि । अरुन्धतीध्रुवश्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नोपश्येच्चतुर्थ मातृमण्डलम् ।। अरुन्धतीभवेज्जिह्वाध्रुवोनासायमुच्यते । विष्णो ' पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्याय ॥ ससारे । 'अविद्याकामकर्मसमुदाये। स्वाभाविकेकर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणामध्ये विनाशर्ष्टौ भगवतोविभूतौ । यमे । वैवस्वते ॥ मरणम् । मृङ० । भुजिमृङ्भ्यां

युकल्युकाविति त्यु्क् ॥ योगविशेषे ॥ यथा । रवावनुराधा॰ सोमे उत्तराषाढा॰ कुजेशतभिषा॰ बुधे अश्विनी॰ गुरौ मृगशीर्षम्॰ भृगौश्लेषा॰ शनौहस्तनक्षत्रे नृमृत्युयोगेभवति ॥ लग्नादष्टमभवने ॥ यात्रायोगान्तरे ॥ अन्योन्यर्क्षे च गाविकर्क्षे वाकविभास्करौ । मृत्युयोगोयमाख्यातो यातुर्मृत्युप्रदायक ॥

मृत्युजरे । स्त्री॰ द्वि॰प्रज्वारस्यप्रियाप्रिययो ॥ यथा । कालकन्येमृत्युजरे प्रज्वारस्यप्रियाप्रिये । याभ्याजगत्समुच्छिन्न विधात्रानिर्मित विधौ ॥ जरामृत्योरपिकालादुत्पन्नत्वात्कन्यासदृशत्वात्कन्यात्वम् । तेमृत्युजरे कालस्यकन्येप्रज्वार॰प्रकृष्टज्वरस्यप्रियाप्रियेपत्न्यौभवत । प्रियातोप्रियेऽतिशयितप्रियेद्वित्यर्थ ॥

मृत्युञ्जय । पु॰ कृत्तिवाससि । शिवे ॥ मृत्युकन्याजिताशश्वच्छिवेनगुरुणाशम । नमृत्युनाजित शम्भु कल्पेकल्पेश्रुतौश्रुतम् ॥ मृत्युजयति । जिजये । सञ्ज्ञायाभृत्तृवृजिधारिसहितपिदम । इतिखच् । मुम् ॥ यात्रायोगान्तरे ॥ लाभेभौमोगुरुश्छिद्रे षष्ठस्थानेचभास्कर । मृत्युञ्जयसमा

ख्योयसर्वशत्रुनिवर्हण ॥

मृत्युनाशक । पु॰ पारदे ॥ त्रि॰ मरणहर्त्तरि ॥

मृत्युपाश । पु॰ अधर्माज्ञानरागद्वेषादौ ॥

मृत्युपुष्प । पु॰ इक्षौ ॥

मृत्युफल । पु॰ महाकालफले ॥

मृत्युफली । स्त्री॰ कदल्याम् ॥

मृत्युभङ्गरक । पु॰ भवकति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युभृत्य । पु॰ रोगे ॥

मृत्युमान् । त्रि॰ मृते ॥

मृत्युवञ्चन । पु॰ शम्भौ ॥ श्रीफले । द्रोणकाके ॥

मृत्युवीज । पु॰ वंशे ॥

मृत्युसूति । स्त्री॰ कर्कट्याम् । सागमायाम् ॥ मृत्यवेसूति प्रसवोयस्या ॥ यथाकर्कटकीगर्भमाधत्तेमृत्युमात्मन ॥

मृत्ना । स्त्री॰ प्रशस्तमृदि ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस । टाप् ॥ तुवरिकायाम् । तूवर॰ इ॰ भा॰ ॥ मृत्स्नाऽस्त्यस्या अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री॰ प्रशस्तायामृत्तिकायाम । मृत्सायाम् ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस्न । टाप् । तुवर्याम् । आढक्याम् । अरहर तूवर॰ इ॰ भा॰ ॥

मृत्०टृ । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विशेषोयथाविष्णुपुराणे । वल्मीकमूषकोत्खातामृदमन्तर्जलां तथा । शौचावशिष्टं गेहाञ्च नादद्यात्लेपसम्भवाम ॥ अन्त प्राण्यवपन्नाञ्च हलोत्खाताञ्चपार्थिव । परित्यजेन्मृदस्त्वेता सकला शौचसाधनइति ॥ अन्त प्राण्ययम्मासकीटाम् ॥ मृदति० मृद्यतेवा । मृदञ्चोदेसम्पदादित्वात्क्विप् । काक्ष्याम् । तुवरिकायाम् ॥

मृदङ्कुर । पु० हारीतपक्षिणि ॥

मृदङ्ग । पु० स्वनामप्रसिद्धेवाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम् । मर्द्दलं खादिरं श्रेष्ठोहीनं स्यादन्यदारुजं । रक्तचन्दनजो वाद्योगभीरध्वनिरुत्तमे ॥ सार्द्ध-हस्तप्रमाणन्तुदैर्ध्यमस्य विधीयते । चयोदशाङ्गुलवाममथवाद्वादशाङ्गुलम् ॥ दक्षिणञ्चभवेदेनमेकेनाऽङ्गुलेनवा । करणामहवदनोमध्येचैवपृथुर्भवेत् । अणमासीयोभवेद्दस्तस्तत्रमेकरणा मतम् । मृत्तिकानिर्मितञ्चैवमृदङ्गं परिकीर्त्तितं ॥ पातयेत्खर्वलिवाद्यवादनार्थश्चमर्द्दले । विभूतिर्गैरिकभक्तकेन्दुकीनवसयुतम् ॥ यवाचिपीटकादेयकौविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टं तल्लेप खरलिरुच्यते ॥ वामास्येपूरिकाक्रान्त्वालेप दद्याच्चदक्षिणे । एवमर्द्दलकं प्रोक्तं सर्ववाद्योत्तमोमत ॥ अस्यसयोगमासाद्यसर्ववाद्यञ्चशोभते । एतद्-विजकाष्ठे दलमर्द्धाङ्गुलविदु ॥ इति । विशेष सङ्गीतशास्त्रे द्रष्टव्य ॥ पटहे ॥ घोषे ॥ वशे ॥ मृद्यते । मृद० । विडादिभ्य कित्दिस्यङ्गच् ॥ मृत्प्रभङ्गमस्मेतिवा ॥

मृदङ्गक । पु० मृदङ्गे ॥

मृदङ्गफल । पु० पनसवृक्षे ॥ मृदङ्गवफलान्यस्य ॥

मृदङ्गफलिनी । स्त्री० कोषातक्याम् ॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषाइतिगौ०दे०भा० ॥

मृदर । पु० विशे ॥ त्रि०विलससति ॥ म्रियतेऽनेन० मृङ्प्रातिवा । मृङ्मद०वा । कृदराद्यश्चेति० अरप्रत्ययान्तोनिपातित ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकर । पु० वज्रे ॥

मृदित । त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद० । क्त । इट् । क्ङितिचेतिनगुण ॥ क्षीणे ॥

मृदिनी । स्त्री० मृत्साद्याम् ॥

मृदु । त्रि० कोमले ॥ अतीक्ष्णे ॥ मृदु सर्व्वत्रबाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिम्रदिभ्रस्जामितिकु, सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्व-गुणमुक्त्वातद्द्रव्यमभिधत्ते द्रुतिगुणवचनोमृदुशब्दः । तेनस्त्रियाङीष-भावे०मृदु ॥ न० विशेषनक्षत्रा-दौ ॥ यथा । चित्रेन्दुमित्रपौष्णा-ख्यमृदुमैत्रं तथाभृगु । तत्रगीता-म्बरक्रीडामित्रकार्यंसुशोभनम् ॥ स्त्री०गृहकन्यायाम् ॥

मृदुकृष्णायसम् । न० सीसके ॥

मृदुगमना । स्त्री० हंस्याम् ॥ त्रि०म न्दगमने ॥

मृदुचर्म्मी । पु० भूर्ज्जवृक्षे । त्रि०को मलत्वग्विशिष्टे ॥

मृदुच्छद । पु० भूर्जे ।कुक्कुरद्रुमे ॥ शीतालौ ॥ अक्षोटे ॥

मृदुता । स्त्री० मृदुत्वे ॥

मृदुताल पु० शीतालवृक्षे ॥

मृदुत्वक् । पु० भूर्जपत्रवृक्षे । मृद्वीत्व गस्य ॥

मृदुत्वच । पु० मृदुत्वचि । मृद्वी त्वचायस्यस ॥

मृदुपत्रम् । न० सुवर्णे ॥ द्रुतिशब्दच न्द्रिका ॥

मृदुपत्र । पु० नले॥न०कोमपत्रे ॥ त्रि०कोमलपत्रवति॥ मृदूनिपत्रा णियस्यस ॥

मृदुपत्री । स्त्री० पिल्लीशाके ॥

मृदुपर्वक । पु० वेत्रे ॥ त्रि० कोम लपर्ववति ॥

मृदुपुष्प । पु० शिरीषवृक्षे ॥ त्रि० कोमलकुसुमविशिष्टे । मृदूनिपु ष्पाणियस्यस ॥

मृदुफल । पु० मधुनारिकेले ॥ त्रि फक्कृते ॥ त्रि० कोमलफलवति ॥ मृदूनिफलानियस्यस ॥

मृदुरूप । पु० सात्त्विकराजसवृत्ति हये ॥

मृदुरेचनी । स्त्री० मार्कण्डिकायाम् ॥

मृदुल । त्रि० कोमले मृदुर्गुणोस्या स्ति । सिध्मादिभ्यश्चेतिलच् ॥ न० जले ॥

मृदुलोमक । पु० शशके॥ त्रि०को मलरोमविशिष्टे ॥

मृदूत्पलम् । न० नीलपद्मे ॥

मृद्वङ्गम् । न० वङ्गे ॥ कोमलावयवे । त्रि०तद्वति । मृदून्यङ्गानियस्य ॥ कर्मधारयोवा ॥

मृद्वी । स्त्री० कपिलद्राक्षायां ॥ कोम लाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगु णमुक्त्वा०मृदुत्वगुणयुक्तं द्रव्यमभि धत्ते द्रुतिगुणवचनत्वे न०वोतोगुण-वचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री० गोस्तन्याम् । द्राक्षा याम् । मुनक्का० इ० भा० ॥ मृ-द्नाति । मृदु० । अलीकादयश्चेति-

साधु ॥ कपिलद्राक्षायाम् ॥

मृधम् । न० युद्धे ॥ मर्द्दनम् । मृधु हिंसायाम् । बाहुलकात्० भावे० घञर्थेवाक ।

मृन्मय । त्रि० मृदोविकारः ॥ मयट् ॥ स्त्री० मृन्मयी ॥

मृन्मरु । पु० अश्मनि । पाषाणे ॥

मृषा । अ० वितथे । मिथ्या झूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्यय ॥

मृषाध्यायी । पु० वके ॥

मृषार्थकम् । न० आहते । अत्यन्ता सम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखरः । कूर्मक्षीमतनुत्राणः शशशृङ्गधनुर्द्धरः ॥ इ० । मृषाऽर्थोयस्यतत् । कप् ।

मृषालक । पु० आम्रवृक्षे ॥

मृषावाद । पु० मिथ्योदिते । मिथ्यावाक्ये । टह्याम ॥

मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनि ॥ मिथ्याभियोक्तरि ।

मृषोद्य । त्रि० मिथ्यावादिनि ॥ राजसूयसूर्यमृषोद्येत्यादिनामृषोपपदाद्वदेः कर्म्मणिनित्यं क्यप्निपात्यते ॥ न० मिथ्यावाक्ये ॥

मृष्ट त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म । मंजूशुद्धौ । क्त. ॥ न० मरिचे ॥

मृष्टि । स्त्री० अन्नादे संस्कारविशेषे ।

मृष्टेरुक । पु० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेक । पु० अजे । छागे ॥

मेकल । पु० ऋष्यन्तरे ॥ गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदायांसरिति । रेवायाम् ॥ मेकलस्यर्षेरद्रेर्वाकन्यका ।

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम ॥ मेकलाद्रेर्जाता । जनी० । ड ॥

मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥

मेखल । पु० मेकलपर्वते ॥

मेखलकन्यका स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेश्चर्मादिनिर्मितेकटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमसिबन्धेप्रक्षिप्यमाणेचर्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलापः पञ्चविंशकः ॥ इतिपठन्ति०इहत्वभेदात्पर्यायता ॥ स्त्रीकट्यावस्त्रग्रन्थने ॥ श्रोणिस्थाने ॥ शैलनितम्बे । उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रचये ॥ यथा । मौञ्जीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला । चत्रियस्यतुमौर्वीज्यावैश्यस्यशणतान्तवी ॥ मुञ्जालाभेतुकर्त्तव्या कुशाश्मान्तकबल्वजैः । त्रिवृताग्रन्थिनैकेनत्रिभिः पञ्चभिरेववा ॥ इ॰मनु ॥ होमकुण्डोपरिमृद्घटितवेष्टनविशेषे ॥ यथोक्तवशिष्ठपञ्चरात्रे । यावान्कुण्डस्यविस्तारः खननं तावदिष्यते । हस्तैकेमेखलास्तिस्त्रोवेदाग्निनयनाङ्गुला ॥ कुण्डेद्विहस्ते ताश्चैयारसवेदगुणाङ्गुला । चतुर्हस्ते तुकुण्डे तावसुतर्कयुगाङ्गुला ॥ मेखलाब्रह्मचारिमेखलावत् कुण्डवेष्टिताम् द्घटिता ताश्चखातदेशाद्बाह्ये एकाङ्गुलिकप्रकण्ठं परित्यज्योच्छ्रायेणविस्तारेणचेत्यादिक्रमेणवेदाद्यङ्गुला एतद्विपरीतास्तन्त्रान्तरोक्ताव्यवहारविरुद्धा ॥ पिङ्गलामतेपि । खातादेकाङ्गुलंत्यक्त्वा मेखलानांविधिर्भवेदिति ॥ मखगतिलाति । ला॰ । आतइतिक । पृषोदरादि ॥ मालक्ष्मीमुखेखति ॰मामुखेखतिवा । माशब्दोनिषेधेईखगतौ । बाहुलकात् कलच् ॥ यद्वा । मांइखलति । खलसञ्चयेसिद्धुमेच । मूलविभुजादित्वात् क । प्रणितु॰वृद्धि स्यात् ॥ नर्मदा याम् ॥ अग्निपत्न्यां ॥

मेखलिक । पु॰ मेखलिनि ॥ मेखलास्यास्ति । ब्रीह्यादित्वाट्ठन् ॥

मेखली । पु॰ मेखलावति । मेखलिके । मेखलास्यास्ति । ब्रीह्यादित्वाद्दिनि ॥

मेघ । न॰ अभ्रे । वारिवाहे । घने । जलदे । मेघास्त्रिविधास्तत्रवह्निजाधूमयोनय । निश्वासजास्तुजीमूतास्तेज्ञेयाजीवरूपिण ॥ ब्रह्मजास्तुघनाघोरा पुष्करावर्त्तकादय । इतिविशेषउक्त शब्दार्णवे ॥ मेहतिसिञ्चति । मिहसेचने । अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् । राक्षसे । षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरवोयवसन्तश्चनटोनारायणस्तथा । श्रीरागोमेघरागश्चषडेतेपुरुषाह्वया ॥

मेघकफ । पु॰ करकायाम् ॥

मेघकाल । पु॰ वर्षर्त्तौ ॥

मेघचिन्तक । पु॰ चातकपक्षिणि ॥

मेघङ्कर । पु॰ मेघजनने ॥ मेघान्करोति । मेघर्त्तिभयेषु कृञ खच् प्रत्यय । अरुर्द्विषदितिमुम् ॥

मेघज । त्रि॰ मेघभववस्तुनि ॥

मेघजालम् । न॰ कालिकायाम् । मेघावली ॥

मेघजीवन । पु॰ चातके ॥ मेघेजीवनमस्य ॥

मेघज्योति । पु० इरम्मदे । वज्राग्नौ । मेघस्यज्योति ॥ अन्योन्यसङ्घट्टनेनमेघाग्नि सत्त्वत्वादौयो ज्योतिरग्नि पततिस ॥

मेघडम्बर । पु० मेघगर्जने ॥ मेघस्यडम्बर ॥

मेघतिमिरम् । न० मेघाच्छन्नदिने ॥

मेघदीप । पु० विद्युति ॥

मेघध्वनि । पु० गर्ज्जिते । मेघनिर्घोषे ॥

मेघनाद । पु० वरुणे ॥ रावणात्मजे । इन्द्रजिति ॥ मेघस्यनादइवनादोयस्य ॥ मेघशब्दे ॥ पलाशवृक्षे । तण्डुलीयशाके ॥ इतिराजनिर्घण्ट ॥ मेघस्यनाद ॥

मेघनादजित् । पु० रामानुजे । लक्ष्मणे ॥ मेघनादमजैषीत् । जि० । सत्सूद्विषेतिक्विप् । तुक् ॥

मेघनादानुलासक । पु० मयूरे ॥

मेघनादानुलासी । पु० मयूरे ॥ मेघनादेनअनुलसति० तच्छील । लसश्लेषणक्रीडनयो । सुप्यजातौणिनिस्ताच्छील्ये ॥

मेघनामा । पुं० मुस्तके ॥ मेघनामानिनामास्य ॥ आदिलघौपक्षमाचकी० ।ऽऽ॥

मेघनायक । पुं० आवर्त्ताद्रौ ॥ यथा । त्रियुतशाकवर्षे तु चतुर्भि . शोधितेक्रमात् । आवर्त्तेश्चिविस वर्त्त पुष्करद्रोणमम्बुदम् ॥ फलयथा । आवर्त्तोनिर्ज्जलोमेघ स वर्त्त स्वबहूदक । पुष्करोदुष्करजलोद्रोण सस्यप्रपूरकइति ॥

मेघनिर्घोष । पु० स्तनिते । गर्ज्जिते ॥ मेघस्यनिर्घोष ॥

मेघपर्याय । पु० आदिलघौपक्षमाचकी० ।ऽऽ॥ मुस्तके ॥ मेघोमेघवाचक शब्द पर्यायोऽस्य ॥

मेघपुष्पम् । न० पिण्डाभ्रे । वर्षोपले ॥ अम्बुनि ॥ नदीजले ॥ पु० इन्द्रस्याश्वे ॥ कृष्णस्यघोटके ॥ मेघ इवपुष्पमिव ॥

मेघप्रसव । पु० जले ॥

मेघभव । त्रि० मेघोत्पन्नवस्तुनि ॥

मेघभूति । पु० वज्रे ॥

मेघमाल । पु० प्लक्षद्वीपस्थे गिरिविशेषे ॥ रमागर्भजातकल्किदेवपुत्रे ॥

मेघमाला । स्त्री० कादम्बिन्याम् । मेघानामाला ॥

मेघयोनि । पु० धूमे ॥

मेघराग । पु० रागविशेषे ॥ मेघसंज्ञकोराग ॥

मेघवर्णा । स्त्री० नीलीवृक्षे ॥ त्रि० घनसमानवर्णवति ॥

मेघवर्त्म । न० नभसि । गगने ॥

मेघवह्नि । पु० वज्राग्नौ । इरम्मदे ॥

मेघवाह । पु० इन्द्रे ॥ यथा । राजा त्वर्थान्समाहृत्यकुर्यादिन्द्रमहोत्सवम् । प्रणीतोमेघवाहस्तुमहतीं वृष्टिमावहेदितिदण्डनीति ॥

मेघवाहन । पु० इन्द्रे । तुरासाहि ।। मेघा महामेघागजरूपधारिणऐरावतादयोवाहनमस्य ॥ मेघान्वाहयतिचालयतिवा । ल्यु ॥ इन्द्रोहिमेघानाविश्यवर्षतीत्यागम ॥

मेघविस्फूर्जिता । स्त्री० अतिधृतिच्छन्द १९ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा । रसर्त्वश्वैर्य्यौम्नौररगुरुयुतामेघविस्फूर्जितास्यात् ॥ यथा । कदम्बामोदाढ्याविपिनपवनाः केकिनः कान्तकेका ॥ विनिद्राः कन्दल्योदिशिदिशिमुदाददुर्दाहनादाः । निशान्तस्यविद्युद्विलसिततलसन्मेघविस्फूर्जिताचेत् प्रियस्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत् ॥

मेघवेश्म । न० खे ॥

मेघसार । पु० चीनकर्पूरे ॥

मेघसुहृत् । पु० मयूरे ॥ मेघ सुहृदस्य ॥

मेघस्तनितोद्भव: । पुं० विकण्टकवृक्षे ॥

मेघाकाश । पुं० अभ्राकाशे ॥

मेघाख्यम् । न० मुस्तके ॥

मेघागम । पु० प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्यागमने ॥

मेघानन्दा । स्त्री० वलाकायाम् ॥

मेघानन्दी पु० मयूरे ॥

मेघान्त । पु० शरदि ।। मेघानामन्तोयस्मिन् ॥

मेघास्त । पु शरद्दतौ ॥

मेघास्थि । न० करकायाम्

मेघास्पदम् । न० आकाशे ॥

मेघोदर । पु० अर्हत्पितरि ॥

मेघ्य । त्रि० मेघभवे । दिगादित्वात्यत् ॥

मेचक । पु० मयूरस्यचन्द्रके ।। मेचकोवर्णोस्त्यस्य । अर्शआद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचक कृष्णनील स्यादतसीपुष्पसन्निभ । इतिशब्दार्णवेभेद । वर्हिकण्ठसमवर्णमेचकम्बदन्तिबुधा इतिकाश्यप । मचतिमिश्रीभवतिवर्णान्तरेण । मच मुचिकल्कने । कृञादिभ्य सञ्ज्ञाया वुन् । पचिमच्योरित्त्वोपधाया इतीत्त्वे लघूपधगुण ।। धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न० स्रोतोञ्जने ॥ अन्धकारे ।। नीलाञ्जने ॥ त्रि० श्यामलयुक्ते ॥

मेचकाभिधा । स्त्री० पातालगरुडीलतायाम् ॥

मेटुला । स्त्री० आमलक्याम् ॥

मेठ । पुं॰ हस्तिपके । निषादि
नि ॥

मेढ्र पु॰ मेहने । शिश्ने ॥ मेहन्
त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन्
॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री॰ मेषशृङ्गीवृक्षे ॥

मेण्ठ । पु॰ हस्तिपके ॥

मेण्ड । पु॰ मेठे । हस्तिपके ॥

मेण्ढ । पु॰ मेषे ॥

मेथि । पु॰ मेथिकाष्ठे । खलेवा
ल्याम् । खलेपशुबन्धनार्थकाष्ठे
॥ मेथ्यन्ते पशवोऽत्र । मेथृसङ्गमे
। सर्वधातुभ्यइन् ॥

मेथिका । स्त्री॰ मेथिन्याम् । मेथ्या
म् । गन्धबीजायाम् । मेथीतिप्र
सिद्धशाके ॥ मेथिकावातशमनी
श्लेष्मघ्नीज्वरनाशिनी । ततः स्वल्प
गुणावन्यावाजिनासातुपूजिता ॥
अपिच । मेथिकादीपनीरुच्यावद्ध
विट्कृमिशुक्रनुत् ॥ रूक्षोष्णातत्
फलंकासानिलश्लेष्मवमीन्जयेत् ॥

मेथिनी । स्त्री॰ मेथिकायाम् ॥

मेथी । स्त्री॰ मेथिकायाम् । गौरादि
त्वात्कृदिकारादितिवाङीष् ॥

मेद । पु॰ मेदसि । वपायाम् ।
शुक्रमांसस्नेहे ॥ अलम्बुषायाम् ॥
मेद्यति॰ । ञिमिदास्नेहने । घञ् ॥
वैदेहेननिषादभार्यायांजनिते॰ऽ
न्त्यजविशेषे ॥

मेद पुच्छ । पु॰ दुम्बके । दुम्बा॰
दुम्बा॰ इ॰ भा॰ प्र॰ मेषविशेषे
॥ मेदपुच्छोद्भवमांसहृद्यवृष्यश्र
मापहम् । पित्तश्लेष्मकरकिञ्चिद्वा
तव्याधिविनाशनाम्

मेद सारा । स्त्री॰ मेदायाम् ॥

मेदक । पु॰ जगले । सुराकल्के ॥
मेद्यतिञिमिदा॰ । कृञादिभ्यो
वुन् ॥

मेदज । पु॰ भूमिजगुग्गुलौ ॥ त्रि॰
मेदोभवे ॥

मेद । न॰ शुक्रमांसप्रभवस्नेहविशेषे॥
वपायाम् । वसायाम् ॥ मेदस
स्वरूपयथा । यन्मांसस्वाग्निनापक्वं
तन्मेदइतिकथ्यते। तदतीवगुरुस्नि
ग्ध न लकार्यंतिस्र हयाम् ॥ स्थान
यथा । मेदोहिसर्वभूतानामुदरेष्व
स्थिषुस्थितम् अतएवोदरेवृद्धि
प्रायोमेदस्विनोभवेत् ॥ रोगविशे-
षे ॥ तन्निदानंयथा। अव्यायामदि
वास्वप्नश्लेष्मलाहारसेविन । मधु-
रोन्नरस प्राय स्नेहान्मेदोविवर्द्ध
येत् ॥ अन्नरस ॰ आमद्रव अ
स्यत्रैवैगुण्य यथा । मेदसावृतमा
र्गत्वात्पुष्यन्त्यनेनधातव मेद-
सुचीयतेतस्मादशक्त सर्वकर्मसु-
॥ मेद्यति । ञिमिदा॰ । असुन् ॥

मेदस्कृत् । न॰ मांसे ॥

मेदा । स्त्री॰ अष्टवर्गाङ्गौषधिविशेषे।

मेदोद्भवायाम् । जीवन्त्याम् । श्रेष्ठायाम् ॥ मणिच्छिद्रायाम ॥ तच्च चादियथा । शुक्लकन्दोनखच्छेद्यो मेदोधातुमिवस्रवेत् । य सर्मदे तिविज्ञेयोजिज्ञासातत्परैर्जनैः ॥ मेदायुग गुरुस्वादुर्वृष्य स्तन्यकफावहम् । वृंहण शीतल पित्तरक्त वातज्वरप्रणुत् ॥ मेदायुगम्॰मेदा महामेदे ॥ मेदामहामेदास्थाने घृतमूलीप्रक्षिपन्ति ॥

मेदिनी । स्त्री॰ काश्मर्याम् । मेदायाम् ॥ मह्याम् । भूमौ ॥ मेदस्त्स्यस्याम् । यतहूनि । मलघ्नोर्मेदकुष्ठ्के तिशालिहोत्रे ऽदन्तोपिमेदश्चन्दोस्ति ॥ यद्वा । मेद्यति । ञिमिदा॰ । ग्रह्यादित्त्वाणिनि ॥ मधुकैटभयोरासीन्मेदसैवपरिप्लुता । तेनेयमेदिनीदेवीप्रोच्यतेब्रह्मवादिभि ॥

मेदिनीद्रव । पु॰ पांशौ । धूली ॥

मेदुर । त्रि॰ सान्द्रस्निग्धे । अतिशयस्निग्धे ॥ मेदनशील ॥ ञिमिदा॰ । भञ्जभासमिदोघुरच् ।

मेदुरा । स्त्री॰ काकोल्याम् ॥

मेदोजम् । न॰ अस्थ्नि ॥

मेदोद्भवा । स्त्री॰ मेदायाम् ॥

मेदोभ्र । पु॰ वर्णसङ्करजातिभेदे ॥

मेदोवती । स्त्री॰ मेदायाम् ॥

मेध । पु॰ यागे । क्रतौ ॥ मेधति । मेधृसङ्गमे ॥ पचाद्यच् ॥

मेधा । पु॰ मेधीभिधानेमुनिविशेषे ॥ वसिष्ठे ॥ स्वायम्भुवमनोः पुत्रे ॥

मेधा । स्त्री॰ धारणावत्याबुद्धौ । अनेकग्रन्थार्थधारणशक्तौ ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमतिः । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृता ॥ इतिविशेष ॥ साचियज्ञानस्यभार्या । यथा । ज्ञानस्यतिस्रोभार्यास्तबुद्धिर्मेधाधृतिस्तथा । याभिर्विनाजगत्सर्वं मूढ मत्तसमंसदेति । मेधतिसङ्गच्छतेसर्वमस्याम् । मेधृ॰ । गुरोश्चेत्य । टाप् ॥ मेधाकरमौषध यथा । शङ्खपुष्पीवचासोमाब्राह्मीब्रह्मसुवर्चला । अभयाचगुडूचीचअटरूषकवाकुची ॥ एतैरक्षसमैर्भागैर्घृत प्रस्थ विपाचयेत् । कण्टकार्यारस प्रस्थ वृहत्याचसमन्वितम् ॥ एतद्ब्राह्मीघृत नामस्मृतिमेधाकर परम् ॥ * ॥

मेधाकर । पु॰ मेधाजनकेगणविशेषे यथा । सतताध्ययन तत्त्वज्ञानस्वकथासदा श्रेष्ठानांतच्छशास्त्राणामवलोकनमेवच । सद्गिजाचार्यसेवाच गणोमेधा कर स्मृत ॥

मेधाकृत स्त्री॰ मुनिपर्णकी । सिता

वरशाके । त्रि० मेधाकारके ॥

मेधाजित् । पु० कात्यायनमुनौ ।

मेधातिथि । पु० मुनिविशेषे । कण्व स्य पुत्रे ।

मेधारुद्र । पु० कालिदासे ॥

मेधावती । स्त्री० महाज्योतिष्मत्याम् त्रि० मेधाविशिष्टायाम् ॥ मेधाना न्० मेधावत्० ङ० पुनपुंसक यो ॥

मेधाविक्रम् । न० तीर्थविशेषे ॥

मेधावी । पु० शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ ॥ मदिरायाम् ॥ त्रि०मे धान्विते ॥ प्रज्ञातिशयवति । जहा पोहसमर्थे ॥ शमदमसर्वकर्मोपरम गुरूपसदनादिसंपवापिकाङ्क्षयुक्त नमननिदिध्यासनाख्यवेदान्तवा क्यविचारेणपरिनिष्पन्न वेदान्तम हावाक्यकरणकनिरस्तसमस्ताप्रामा ण्याशङ्काचिदन्याविषयकमहम्ब्र ह्मास्मीतिब्रह्मात्मैक्यज्ञानमेवमेधा ०तयानित्य युक्ते ०स्थितप्रज्ञे ०विप श्चिति ॥ मेधास्यास्ति । अस्मायाः मेधास्रजोविनि ॥

मेधाविनी । स्त्री०ब्रह्मण पत्न्या म् ब्राह्म्याम् ॥

मेधि । पु० खलेशाल्याम् । खलेपशु बन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि खलेदारुन्यस्तं यत्पशुबन्धने ॥ मे ध्यन्तेपशवोत्र । मेधृ० । इन् ॥

मेधिर । त्रि० मेधाविनि ॥

मेध्य । पु० यवे ॥ छागे ॥ खदिरे॥ त्रि०पवित्रे । शुचौ । शुद्धे ।यज्ञि ये ॥ मेधनार्हम् । मेधृ० । ऋहलो र्ण्यत् ॥ मेधायैहितोवा ।उगवा दिभ्योयत् ॥ मेधामर्हतिवा । द ण्डादित्वाद्यत् ॥ मेधवत्वा शा खादिभ्योय ॥ स्नानेनमेध्यमखि लममेध्य स्नानतोभवेत् । ब्रह्मज्ञा नैसमुत्पन्नेमेध्यामेध्यनविद्यते ॥

मेध्या । स्त्री० रक्तवचायाम् ॥ रोच नायाम् ॥ केतक्याम् ॥ ज्योति ष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्रा ह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । नायाम् ॥ सो मः शौचं ददौस्त्रीणांगन्धर्वश्चशुभा गिरम् । पावकः सर्वमेध्यत्वं मे ध्यावैयोषितोह्यत ॥

मेनका । स्त्री० हिमालयस्यभार्यायाम् । अपर्णामातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजनयित्र्याम् ॥

मेनकात्मजा । स्त्री० गिरिजायाम् । दुर्गायाम् ॥ मेनकाया आत्म जा ॥

मेनकापति । पु० हिमालये ॥

मेनकापुत्र । पुं० मैनाके ॥ मेनका याः पुत्र ॥

मेनकाप्राणेश । पु० हिमालये ॥

मेना । स्त्री० मेनकायाम् । हिमाद्रे

र्भायायाम् ॥

मेनाजा । स्त्री० पार्व्वत्याम् ॥

मेनाद । पु० केकिनि । मयूरे ॥ मार्जारे ॥ छगले । छागे ॥

मेनाधव । पु० हिमागुरौ । हिमालये ॥

मेनासुत । पु० मैनाके ॥

मेय । त्रि० प्रमेये ॥ मानाधीनामेयसिद्धि ॥ मीयते । माङ् माने । अचोयत् । ईद्यति । गुण ॥ मातुपरिच्छेत्तुयोग्योवा ॥

मेयाभ । त्रि० मेयसमानाकारे ॥ मेघस्यआभेवाभायस्य स ॥

मेरक । पु० विष्णौ ॥ असुरभेदे

मेरु । पु० सुमेरौ । अत्युच्छ्रितानाशिखरिणामध्येभगवतोविभूतौ । हेमाद्रौ । रत्नसानौ । सुरालये ॥ जम्बुद्वीप स्थितेनाभिस्तद्वृत्त लक्षयोजनम् । क्षाराब्धिनापरिवृतम् परिवृत्ते मताव्रता ॥ तस्यमध्ये स्थित शैलराजराजोहिरण्मय । तिरस्कृताशुमज्ज्योतिर्मेरु सुरनिषेवित सषोडशसहस्राणिक्षितौविष्टोमहीतलात् । तदूनमुन्नतोत्वच मूलेषोडशविस्तृत ॥ समेरुर्भूमेरन्त षोडशयोजनसहस्राणिप्रविष्ट . महीतलादारभ्यऊर्द्ध्वं यावच्चतुरशीतियोजनसहस्रोन्नति मूलेचषोडशसहस्रविस्तार । ऊर्द्ध्वंतोद्व्यशरावाकृतिविस्ताराधिक्येनद्वैगुण्यम् । उतास्यशीमत्स्यतन्ले । षोडशैकसहस्राणिबुध्नभागेप्ररोपित । तान्यस्यमूलेविस्तार स्याद्द्विगुणस्तु स ॥ सशरावाकृतिर्देविमेरुर्देवाश्रयोद्रिराट् । इति । त्रिषुपादान्तरेष्वस्यचतुर्ष्वेषुपर्वसु । नेमय कटकाकारानिर्गतादीप्तिमत्तरा ॥ एकादशसहस्रातुमनुसाहस्रकीपरा । नेमिर्यामस्तकोपान्तेलोकपालसमाश्रया ॥ चक्रवाटेतितामाहु सर्वरत्नप्रभावतीम् । अस्यमेरो स्तोच्छ्रायपादेनपञ्चविंशतिसहस्रात्मकेनान्तरयेषातेषु तथाविधेषु त्तरचतु स सहस्रविस्तृतेषु पर्वसुभागसन्धिषुकटकाकारा सुष्ठु दीप्तास्तिस्रोनेमयोमेखलानिर्गता ० तदेवेषुत्रिषुस्थानेषुचतुर्थं स्वदर्शयति । एकादशसहस्रे त्यादिना० एकाद्याद्वादशसहस्रप्रमाणा० द्वितीयामनुसाहस्रिकाचतुर्दशसहस्रा० चतुर्दशत्वोत्तस्य० तृतीयाऽष्टादशसाहस्रविस्तृता । सानेमिर्यामस्तकसमीपेलोकपालाश्रयभूताचानेकरत्नप्रभाभासुराच० तांचक्रवाटोत्याआगमज्ञाआहु । एवञ्चप्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्यमेरो पर्वत्रयपञ्चसप्ततिसहस्रमानकम् । कटकत्रयन्तुनवसहस्रोन्नत

मेवोक्तस्त्रिसहस्रमानकतुल्यमित्या-
गमज्ञा । सिद्धगन्धर्वमरुतातद
ध पर्वसुस्थिति । चक्रवाटाध
स्थितेषुत्रिषुपर्वसुसिद्धादीनामास्प
दम् । यातुचक्रवाटाख्योर्द्धमेखला
तस्यामष्टसुशृङ्गेषुपुर्योष्टौसमवस्थि
ता । प्राच्यादिष्विन्द्रमुख्याना
नामतस्तानिबोधत ॥ नानारत्नप्र
भाजालमण्डलालङ्कृताम्बरे ।
सिद्धसाध्यमरुज्जुष्टाकम्भूरमराव-
ती ॥ रक्तपीतमणिप्रायहेमप्राकार
गोपुरा । वह्नेस्तेजोवतीवह्नितुल्य
भूतनिषेविता ॥ कृष्णो संयमनी
तुङ्गलोहप्राकारमण्डला कालपाश
पितृव्याधिप्रेतमारीनिषेविता ॥ क्र
व्यादैस्यपतेर्म्स्योर्धामवहैस्यसेविता
। नीलरत्नप्रभाजालवितानवरभूष
या ॥ शुद्धवरुणस्य नाथसस्फटिकाम
लनिर्मिता । पाण्डुराभोपमर्यादि
सेविताभातिधामभि ॥ वायोर्ग न्ध
वतीतुङ्गश्वेतपीतध्वजाकुला । बल
वद्भूतसञ्जुष्टासर्वरत्नविनिर्मिता ॥ म
होदयाचन्द्रमस श्वेतामुक्तादिनिर्मि
ता । द्विजसङ्घसुताभातिपुरे
हिमगिरिप्रभे ॥ ज्वलज्ज्वाटह-
ट्टाध्मप्राकारत्रयशोभित । पुरी-
यशोमतीसर्वरत्नजालसेविता ॥ इ
तिसर्वेषुशृङ्गेषुचक्रवाटार्द्धविस्तृ-
ता ॥ पुर्योष्टाव्रनिलोद्भूतपारि

जातरजोरुणा ॥ चक्रवाटार्धेन
नवसहस्रात्मकेनविस्तीर्णा ॥ वेध
सानिर्मितालोकपालचक्रानुवर्ति
नाम् । भूतयेस्वर्गकृत्यैतागीयन्ते
कविभि क्षितौ ॥ अथब्रह्मण
पुरी । चतुर्दशसहस्राणियोजना
नामुच्छ्र । मध्येमनोवतीनाम
पुरीलोकेशवन्दिता ॥ याचकारा
रुणानुचैर्विधन्मार्गान्महा श्रिया
। सावित्र्या स्पर्द्धमानेवस्वर्गकामा
तिवर्त्तिनी ॥ तस्यामुपासतेदेवा
मुनयश्चमहौजस । महायोगीश्व
र सिद्ध्यैयमाद्यैर्भूतवैधसम् ॥ त
दीशभागेतस्याद्रे शृङ्गमादित्य
सन्निभम । यत्तज्ज्योतिष्कमित्या
हु सदापशुपते प्रियम् ॥ तस्य
सानुष्वमेपुरत्नचित्रे गुहस्थिता ।
स्कन्दनन्दिमहाकालगणेशादिगणे
श्वरा ॥ मूर्ध्नि देवादिदेवस्य
स्थानत्रिपुरविद्विष । रुद्रायुतग
णैर्जुष्टब्रह्माद्यैस्सुरोत्तमै ॥ इ
तिमृगेन्द्रसंहितायाविद्यापादेभुव-
नाध्वप्रकरणेमेरोर्वर्णनम् ॥ जपमा
लाग्रवर्त्तिन्य कस्मिन्मणौ ॥ मिनो
तिक्षिपतिज्योतींष्युच्चत्वात् ।
डुमिञ्प्रक्षेपणे । मिपीभ्याम् ॥
मात्रामात्रे । ०। ० ॥
मेरुक । पु० यक्षधूपे ॥
मेरुदेवी । स्त्री० नाभिभूतेःपत्न्याम् ॥

भगवतऋषभस्य जनन्याम् ॥

मेरुसावर्णं । पु० एकादशमनौ ॥

मेल । पु० सङ्गमे ॥ मेलनम् । मिल सम्प्रेषे । घञ् ॥

मेलक । पु० सङ्गे । सङ्गमे ॥ मेलनम् । मिल० । घञ् । स्वार्थेक ॥

मेलकालवणम् । न० चौपरेलवणे ॥

मेलनम् । न० मेले । सङ्गमे ॥

मेला । स्त्री० मसीजले ॥ मैलवी ॥ अञ्जने ॥ महानील्याम् ॥ टाप् ॥

मेलानन्दा । स्त्री० मस्याधारे । मसीपात्रे ॥

मेलाम्बु । स्त्री० मेलानन्दायाम् ॥

मेलाम्बु पु० मस्याधारे ॥

मेष । पु० हुडौ । मेढ्रे । उरभ्रे । उरणे । अर्णायौ । एडके । मेंढा० ह० भा० ॥ मेषस्य मांसपृष्ठ्यं स्यात्पित्तश्लेष्मकरं गुरु । तस्यैवाण्डविशोणश्च मांसंकिञ्चिल्लघु स्मृतम् ॥ अपि चाजमांसगुणा । मेषमांसगुरुस्निग्धं बल्यं वातकफप्रदम् । मेद. पुच्छामिषं हृद्यं कफवातकरं गुरु ॥ मिषति । मिषस्पर्धायाम् । अच् । मेषज्यप्रभेदे । राशिविशेषे । क्रियसञ्ज्ञके । लग्नविशेषे ॥ मेषलग्नोत्पन्नस्य फलं यथा । मेषलग्नेसमुत्पन्नश्चण्डोमानीधनी शुभः । क्रोधीस्वजनहन्ता च विक्रमीपरवत्सलः ॥

मेषक । पु० जीवशाके ॥

मेषकम्बल । पु० अर्णायौ ॥ मेषलोमकृत कम्बल । शाकपार्थिवादि ॥

मेषलोचन । पु० चक्रमर्दे ॥ मेषस्य लोचनमिवलोचनमस्य० तत्तुल्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिक ॥ त्रि० मेषचक्षुस्तुल्यनेत्रे ॥

मेषवल्ली । स्त्री० मेषशृङ्ग्याम् ॥

मेषविषाणिका । स्त्री० मेषशृङ्ग्यां ॥

मेषशृङ्ग । पु० स्थावरविषप्रभेदे ॥

मेषशृङ्गी । स्त्री० मन्दौषधे । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसे तिक्तावातलाश्वासकासहृत् । रूक्षापाकेकटु पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ मेषशृङ्गीफलं तिक्तंकुष्ठमेहकफप्रणुत् । दीपनंस्रंसनंकासकृमिव्रणविषापहम् ॥ मेषशृङ्गमस्या . । मेषशब्दोमेषशृङ्गसदृशेलाक्षणिक ॥ गौरादि ॥

मेषा । स्त्री० त्रुटौ । क्षुद्रैलायाम् ॥

मेषाक्ष । पु० चक्रमर्दके ॥ मेषस्याक्षीवाक्षियस्य० तत्सदृशपुष्पत्वात् । अक्ष्णोदर्शनादित्यच् । अक्षिशब्दपुष्पेलाक्षणिक ॥

मेषाक्षिकुसुम । पुं० चक्रमर्दके ॥

मेषाण्ड । पु० इन्द्रे ॥

मेषाधिप । पु० भौमग्रहे ॥ मेषस्य मेषराशे अधिप ॥

मेषान्त्री । स्त्री० वस्तान्त्रीवृक्षे ॥
मेषालु । पु० वर्व्वरावृक्षे ॥
मेषाह्वय । पु० चक्रमर्द्दे ॥
मेषिका । स्त्री० मेष्याम् ॥
मेषी । स्त्री० मेषस्त्रियाम् । मेड० मेडी० द्रू० भा० ॥ तिनिशवृक्षे ॥ जटामांस्याम् ॥
मेसूरणम् । न० दशमलग्ने ॥ यथा । कर्मस्थानञ्चदशमञ्चमेसूरणमास्पदम् ॥
मेह । पु० प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥
मेहघ्नी । स्त्री० हरिद्रायाम् ॥ मेहहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ङीप् ॥
मेहत् । त्रि० मूत्रयति ॥ मेहति । मिह० । शतृ ॥
मेहन । पुं० मुष्ककवृक्षे ॥ न० मूत्रे ॥ शिश्ने ॥ मेहत्यनेन । मिह० । करणेल्युट् ॥
मैत्र । पु० ब्राह्मणे ॥ सुधन्वाचार्ये ॥ न० अनुराधानक्षत्रे ॥ विशेषनस्त्वादीयथा । चित्रेन्दुमित्रपौष्णाश्च मृदुमैत्रंतथाभृगु । तत्रगीताम्बरक्रीडामित्रकार्यञ्चशोभनम् ॥ अष्टमतारायाम् ॥ मित्रदेवताकपायुसम्बन्धान्मूत्रपुरीषोत्सर्गे ॥ अथाहापस्तम्ब: । मूत्रपुरीषेकुर्याद्दक्षिणां दिशदक्षिणापरावेति । दक्षिणापरा नैर्ऋतीम् । गन्त्वेतिशेष । यथा अस्तमितेचवहिर्ग्रामादाराच्चासथान्मूत्रपुरीषयो: कर्मवर्ज्जयेदिति ॥ शुष्कैस्तृणैस्तथाकाष्ठै पत्रैर्वेणुदलैर्नवा । मृन्मयैर्भाजनैर्वापिचन्तर्धाय वसुन्धरामितिवायुपुराणम् ॥ मूत्रोच्चारसमुत्सर्गंदिवाकुर्यादुदङ्मुख । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चयथादिवेतिमनु: ॥ त्रि० मित्रसम्बन्धिनि ॥ मैत्रीस्निग्धता० तद्वति ॥ मित्रस्यकर्मभावीवा । युवादित्वादण् ॥ मित्रोदेवताऽस्यवा । साऽस्यदेवतेत्यण् ॥
मैत्रभम् । न० अनुराधानक्षत्रे ॥
मैत्रायणीय । पु० यजुर्वेदस्यशाखाभेदे ॥
मैत्रावरुण । पु० पुरोनुवाक्यायावक्तरि० ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणेनपुरोवाक्यायामुक्तायातत्प्रकाशितदेवतोद्देशेनाध्वर्युर्होतृपठितयाज्यान्तेवषट्कारेऽथसोमादिकंजुहोतीति ॥ अगस्त्यमुनौ ॥
मैत्रावरुणि । पु० अगस्त्यमुनौ ॥ मित्रश्चवरुणश्च० मित्रावरुणौ । देवताद्वन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ मौत्त्वागर्जन्त्यप त्य० ॥
मैत्री । स्त्री० सौहार्द्दे ॥ स्निग्धतायाम्

म् ॥ सर्वप्राणिषु सुखसम्भोगापन्नेषु० साध्वेतन्ममेवाणासुखित्व मितिमैत्रीभावयेन्नत्वीर्ष्याम् ॥ अण् मित्रस्य मैत्रशब्दात्स्वार्थेऽण् ॥ विद्विष्टपतितोन्मत्तबहुवैरातिकीटके । बन्धकीबन्धकीभर्तृचुद्रान्ततकथे सह । तथातिव्ययशीलेषपरीवादके रे शठे । बुधोमैत्रींनकुर्वीत० नैकः अत्यन्तकीटवत्पीडक ॥ उत्कृष्टमध्यमनिकृष्टजनेषु मैत्रीयद्वच्छिलामुसिकतासुजलेषु रेखा । वैरक्रमादधममध्यमसज्जनेषु मद्वच्छिलासुसिकतासुजलेषु रेखेत्युत्कट.॥ उपकारित्वे ॥ अनुराधाभे ॥

मैत्रीबल । पु० बुद्धे ॥ मैत्रीबलयस्य स ॥

मैत्रेय । पुं० ग्लावाभिधर्षौ । बक्रे । चैक्रितायने ॥ मुनिविशेषे ॥ मित्रायाः अपत्यम् । गृष्ट्यादिभ्यश्चेतिढञ् । दाण्डिनायिनेतिनिपातनादयुलोप. ॥ वैदेहादायोगव्यां जाते० सङ्करजातिविशेषे ॥ मैत्रेयकन्तुवैदेहोमाधूकसम्प्रसूयते । नॄनृप्रशसत्यजस्रं योघण्टाताडोरुणोदये ॥ माधूकमधुरभाषिणम् ॥ भाविबुद्धविशेषे ॥

मैत्रेयिका । स्त्री० मित्रयुद्धे ॥ मित्रयूनांभावे ॥ गोत्रचरणाच्छ्लाघात्याकारतदवेतेष्विति वुञ् । वैत्रयमिवयुप्रलयानामितियादेश ॥

मैत्रेयी । स्त्री० याज्ञवल्क्यस्यर्षेपत्न्याम् ॥

मैथिल । पु० जनकनृपे ॥ त्रि० मिथिलायाभवे ॥ अण् ॥

मैथिली । स्त्री० जानक्याम् ॥ सीतायाम् ॥

मैथिलेय । पु० सीतापुत्रे । अपत्ये ढक् ॥

मैथुनम् । न० मिथुनसाध्ये अन्याधानपुत्रोत्पादनादौ ॥ सङ्गते ॥ रते । सुरते । धर्षिते । व्यवाये । ग्राम्यधर्मे । निधुवने ॥ मिथुनमेव । प्रज्ञाद्यण् ॥ मिथुनस्येदंवा ॥ स्मरणकीर्त्तनकेलि प्रेक्षणगुह्यभाषणम् । सङ्कल्पोध्यवसायश्चक्रियानिर्वृत्तिरेवच । एतन्मैथुनमष्टाङ्ग प्रवदन्ति मनीषिणः ॥ अशास्त्रीयेस्त्रीपुंसव्यतिकरे ॥ शीघ्रमैथुनगामीदीर्घायुरन्यथाल्पायु ॥

मैथुनी । पुं० सारसे ॥

मैथुन्य । त्रि० मिथुनायहिते । तस्मैहितमितियत् ॥ न० मिथुनीभावसुखे ॥

मैनाक । पु० पर्वतविशेषे । हिमालयस्यज्येष्ठपुत्रे । हिरण्यनाभे । सुनाभे ॥ क्रौञ्चंगिरिमतिक्रम्यमैनाकोनामपर्वत । मयस्यभवनंतत्र दानवस्यस्वयंकृतम् ॥

मैनालह्वा । स्त्री॰ पार्वत्याम् ।
मेनाजासनेगालुतत्रमसा ॥
मैन्दा । पु॰ माक्षिके । मीनान्
हन्ति । पश्चिमख्येतिठक् ॥
मैन्द । पु॰ वानरविशेषे ॥ विष्णु
वध्यासुरविशेषे ॥
मैन्दघ्न । पु॰ विष्णौ ॥
मैरेयम् । न॰ मद्यविशेषे ॥ मैरेयधात
कीपुष्पगुडधानाम्बुसहितमितिमा
धव ॥ आसवे ॥ मिरायांदेशवि
शेषे॰ औषधिविशेषे वाभवम् । न
द्यादिभ्योढक् ॥ वारुण्येवमैरेयमि
तिव्याख्यातार ' । तेषांमैरेयदोषे
णविषमीकृतचेतसाम् । निम्लोच
तिरवावासीदेयूनामिषमर्दनम् ॥
तेषायादवानाम् ॥
मोच । पु॰ पाटलिद्रुमे ॥ मोचने
म्रतौ । म्रत्यु देयापवर्गइतिचामी
क ॥ प्रचीयसश्रीरत्यत्वात्स्वात
न्त्र्यसम्प्राप्तुर्यदासादनमोक्षद्र
व्यगेवान्तवादिन । यदाहु ।
लोहपञ्जरविच्छेदात्प्रवतेऽलाबुक
यथा । आरोहतितयामोक्षजीवो
मोहादिसंक्षयात् ॥ नित्यबोधसुखा
द्यैश्वधर्मैयुक्त ' सतिष्ठतीति ॥ मु
क्तौ । कैवल्ये । निर्वाणे । श्रेयसि
। नि श्रेयसे । अमृते । अपवर्गे ।
तत्त्वज्ञानकृतेऽज्ञानतत्कार्याभावे ।
निरतिशयानन्दाभिव्यक्तौ । निरव

द्येशाद्याविद्यायां । स्वाविद्याकल्पि
ताताऽहं ममताभिमानरूप
बन्धनिवृत्तिरूपावस्थाने ॥
अनात्मनि देहादावात्मबुद्धिस्तुदेहि
नाम् । साऽविद्या तत्कृतोबन्धस्तन्ना
शोमोक्षउच्यते ॥ मोक्षमिच्छन्सदा
कर्मत्यजेदेवससाधनम् । त्यजतै
वहितज्ज्ञेयत्यक्तु प्रत्यक्परपद
म् ॥ यथोक्तं निर्णये । यावन्नक्षीय
तेकर्मशुभवाऽशुभमेववा । तावन्न
जायतेमोक्षोन्टणाकल्पशतैरपि ॥
यथालौहमये पाशे पाशे स्वर्ण
मयेरपि । तथावद्धोभवेज्जीव क
र्मभिश्चाशुभै शुभै ॥ कुर्वाण
सतत कर्मकृत्वाकष्टशतान्यपि । ता
वन्नलभतेमोक्षयावद्ज्ञाननविन्दति
॥ मोक्षणम् । मोक्षअसनेचुरादि
। घञ् ॥ यद्वा । मोक्षयति । मुचे
सन्नन्ताद्कर्मकाण्णिजन्ताद्च् ॥ मु
चेर्वाकुलणातृसोवा ॥
मोचक । पु॰ मुष्ककवृक्षे ॥
मोक्षणम् । न॰ मोचने ॥
मोक्षधर्म । पुं॰ शमदमादिषु ॥
महाभारतोक्तप्रकरणविशेषे ॥
मोक्षपरायण । त्रि॰ सर्वविषयविर
क्ते ॥ मोक्ष परमयनमस्य ॥
मोक्षमय । त्रि॰ परमानन्दस्वरूपाव
स्थानरूपे ॥
मोक्षसाधनम् । न॰ ज्ञाने ॥ कर्मणा-

स्वन्त करणशुद्धिद्वाराज्ञानेउपयो
गीनतेषांसाक्षान्मोक्षसाधनत्वम् ।
। यथा । कषायपक्तिः कर्माणिज्ञा
नन्तुपरमागतिः । कषायेकर्मभिः
पक्वेततोज्ञानप्रवर्त्तत इति ॥ उ
पासनानान्तुचित्तैकाग्र्यम् नकै
वल्यमुपासनात् । तथाचमोक्षप्रा
प्तौद्वयोमार्गौ । तत्रज्ञानमार्ग
साक्षान्मोक्षसाधनमितरौचित्तशुद्धि
द्वारेतिविवेकः ।

मोक्षी । त्रि॰ मोक्षाधिकारिमानवे ।
मोक्षयोग्ये ॥ स्थावरा कृमयश्चा
ब्जा पक्षिणः पशवोनराः । धा
र्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथा
क्रमम् ॥ चतुर्विधशरीराणिधृत्वा
मुक्तासहस्रशः । सुकृतान्मानवोभू
त्वाज्ञानीचेन्मोक्षमाप्नुयात् ॥ चतु
रशीतिलक्षेषुशरीरेषुशरीरिणाम् ।
नमानुष्यंविनान्यत्रतत्वज्ञानन्तुलभ्य
ते ॥ अत्रजन्मसहस्राणासहस्रैरपि
पार्वति । कदाचिल्लभतेजन्तुर्मानु
ष्यं पुण्यसञ्चयात् ॥ सोपानभूतंमो
क्षस्यमानुष्यं प्राप्यदुर्लभम् । यस्ता
रयतिनात्मानंतस्मात्पापतरोऽत्रकः
॥ नरः प्राप्योत्तमं जन्मलब्ध्वाचे
न्द्रियसौष्ठवम् । नवेत्त्यात्महितं व
स्तुसभवेद्ब्रह्मघातकः ॥ इतिश्रीकु
लार्णवेप्रथमोल्लासः ।

मोक्षोपाय । पु॰ विविदिषासन्न्या
से ॥ साधनचतुष्टयसम्पत्तौ ॥

मोग । पु॰ जलवरण्टे ॥

मोघ । पु॰ प्राचीरे ॥
त्रि॰ हीने ॥ इ॰ हे॰ चन्द्र ॥
हीने ॥ इतिमेदिनी ॥ निरर्थके ।
निष्फले ॥ मुह्यन्त्यस्मिन् । मुह॰ ।
हलश्चेतिघञ् । न्यङ्क्वादित्वात्कु
त्वम् ॥

मोघकर्म्मा । पु॰ सकामकर्म्मणि ॥
मोघानिश्रममात्ररूपाणिसञ्जितोत्था
दीनिकर्म्माणियस्यसः ॥

मोघज्ञान । त्रि॰ कुतर्कज्ञानविशि
ष्टे ॥ मोघम् ईश्वराप्रतिपादककुत
र्कशास्त्रजनितं ज्ञानं यस्य ॥

मोघपुष्पा । स्त्री॰ वन्ध्यायाम् ॥

मोघवृत्ति । त्रि॰ व्यर्थव्यापारे ॥

मोघा स्त्री॰ पाटलावृक्षे मोहयति
। मुह॰ । पचाद्यच् । न्यङ्क्वादि
त्वात्कुत्वम् ॥ विडङ्गे ॥

मोघाश । त्रि॰ कामिणि ॥ ईश्वर
मन्तरेणकमाण्येवन फलदास्य तो
ष्येवरूपामोघानिष्फलैवआशाफल
प्रार्थनायस्यसः ॥

मोघोलि । पु॰ प्राचीरे ॥

मोच । पु॰ शोभाञ्जने ॥ मोचयति
। मुच्लृ॰ । णिच् । अच् । न॰ क
दलीफले ॥

मोचक । पु॰ कदल्याम् ॥ शिग्रौ
॥ मुष्ककवृक्षे ॥ त्रि॰ निर्मोचके ॥

विरागिणि ॥ मोचयति । मुच्लृ० । णिच् । अच । स्वार्थे कन् ॥

मोचनम । न० मोक्षणे । त्रि० मोच कर्त्तरि ॥

मोचनिर्यास । पुं० मोचरसे ।

मोचनी । स्त्री० कटकार्याम् ॥ मोचकल्याम् ।

मोचरस । पुं० शाल्मलिनिर्यासे । पिच्छिलसारे । शाल्मलीवेष्टे ॥

मोचसार । पुं० मोचरसे । मोचस्रावोहिमोग्राहीस्निग्धोवृष्य.कषायक । प्रवाहिकातिसारामकफपित्तास्रदाहनुत् ।

मोचस्रुत् । पुं० मोचस्रावे ॥

मोचा । स्त्री० रम्भायाम् । कदल्याम ॥ शाल्मलीवृक्षे । नीलीवृक्षे । मुञ्चतिरसम् । मुच्लृ० । पचाद्यच । टाप् ॥ मोच्यते । घञ् वा ।

मोचाट । पुं० कृष्णजीरे ॥ रम्भास्थ्नि । कदलीगर्भे ॥ मलयोद्भवे ॥

मोचाफलम् । न० कदलीसस्ये । मोचाफलं स्वादुशीतं विष्टम्भिकफकृद्गुरु । स्निग्धं पित्तास्रतृट्दाहक्षतक्षयसमीरजित् ॥ पक्कं स्वादु हिमं पाकेस्वादुवृष्यञ्चबृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् । माणिक्यमर्त्त्यामृतचम्पकाद्याभेदाः कदल्याबहवोपिसन्ति । उक्तागुणा

स्तेष्वधिकाभवन्ति निर्दोषतास्याल्लघुताचतेषाम् ।

मोचिका । स्त्री० मत्स्यविशेषे । मोइ० इतिख्याते ॥ मोचिकावातहृद्बल्याबृंहणीमधुरागुरु । पित्तहृत्कफकृद्रुच्यावृष्यादीप्ताग्नयेहिता ॥

मोचित । त्रि० मुक्ते । मोक्षप्रापिते ॥

मोटकम् । न० पितृदानार्थंद्विगुणभुग्नकुशपत्रे ।

मोटकी । स्त्री० रागिणीविशेषे ।

मोटन । पुं० वायौ । न० चूर्णीकरणे । चाञ्चिपे ।

मोटनकम् । न० त्रिष्टुप्छन्दः ११ प्रभेदे । यथा । स्यान्मोटनकंतजजाश्चलगौ । रङ्गे खलुमल्लकलाकुशलम्बाणूरमहाभटमोटनकम् । यश्चिलवेनचकारसमेससारिपुंपरिमोटयतु ।

मोटा । स्त्री० बलायाम् ॥

मोट्टायितम् । न० स्त्रीणास्वाभाविकदशविधालङ्कारान्तर्गतालङ्कारविशेषे । तल्लक्षण यथा । मोट्टायितप्रियस्मृत्यासाङ्गभङ्ग विजृम्भणम् ॥ अपिच । कान्तस्मरणवार्त्तादौहृदितद्भावभावत । प्राकट्यमभिलाषस्यमोट्टायितमुदीर्यते ॥ इ० ॥ मोटनम् । मुटप्रमर्द्दने घञ् । बाहुलकात्टुट् । भृशादित्वात्

माह्वाविति ॥

मोच । पु० शुष्कफले । वाने ॥ नक्त मल्लिकायाम् । सर्पकरण्डे ॥

मोद । पु० हर्षे ॥ सन्तोषे ॥

मोदक । पु० क्षत्रियाच्छूद्रायाजाते वर्णसङ्करजातिविशेषे । मयरा० कू० गौ० दे० भाषाप्रसिद्धे ॥ पु० न० खाद्यविशेषे । लड्डुके । यवासशर्करायाम ॥ शर्करादिद्वारापक्वौषधविशेषे ॥ न० वर्णवृत्तप्रभेदे । यथा । पादयुगकृतनूपुरसुन्दरमाशुकर कुसुमद्वयमाहर । सुन्दरिसर्वजनो ममनोहरमोदकवृत्तमिदपरिभावय यथा । मानसमं तदनुत्तममिच्छति गोपकुलेयदिहरिरागच्छति । तत् करवैप्रणतिमुरविद्विषिसर्वसपन्नजनेविहततृत्विषि ॥ वि० हर्षके ॥

मोदनम् । न० सिक्थके ॥ मोदे ॥

मोदनीय । वि० हर्षणीये । आत्मनि ॥

मोदमान । वि० आनन्दावस्थाप्राप्ते ॥ प्रमुदिते ॥ अष्टम्यासिद्धौ ॥

मोदमोदिनी । स्त्री० जम्ब्वाम् ॥

मोदयन्ती । स्त्री० वनमल्लिकायाम् । कठचेंवेली० हू०भा० ॥

मोदा । स्त्री० अजमोदायाम् ॥

मोदाख्य । पु० आम्रवृक्षे ॥

मोदाढ्य । चि० हर्षयुक्ते ॥

मोदाढ्या । स्त्री० मोहिन्याम् । अजमोदाया ॥

मोदित । चि० सुरभीकृते । हर्षिते । हृष्टे ॥ मुद्हर्षे । कर्त्तरिक्त ॥

मोदिनी । स्त्री० मल्लिकायाम् ॥ यूथिकायाम् । मदिरायाम् ॥ कस्तूरिकायाम् ॥ अजमोदाया ॥

मोरट । पु० लताप्रभेदे । कर्णपुष्पे । पीलुपर्णे । मधुस्रवे । दीर्घमूले क्षीरमोरटे ॥ न० इक्षुमूले ॥ अङ्कोठप्रसूने ॥ सप्तरात्रात्परक्षीरे ॥ नष्टदुग्धभवनीरमोरट कैय्यटोऽब्रवीत् ॥ मुरति । मुरसवेष्टने । शकादिभ्योऽटन् ॥ अङ्कोठमूले ॥

मोरटकम् । न० इक्षुमूले ॥

मोरटा । स्त्री० मूर्विकायाम् । मुरहरा०हू०भा० । टाप् ।

मोष । पु० चौरधने ॥ मुष्यते । मुषस्तेये । घञ् ॥

मोषक । पु० तस्करे ॥ मुष्णाति । मुष० । ण्वुल् ॥

मोषणम् । न० लुटने । मोसना०लूटना०हू०भा० ॥ छेदने ॥ वधे ॥

मोषिता । चि० चोरे । मोषणकर्त्तरि ।

मोह । पु० मूर्च्छायाम् ॥ दुःखं ॥ देहादावात्मबुद्धौ ॥ यत्र कुण्ठीभवेद्बुद्धि समोहकृतिलौकिका ॥ चित्तविभ्रमे ॥ अविद्यायाम् । विपर्यये । अस्मितायाम् । तम कार्ये ।

भ्रमे । हिताहितविवेकासामर्थ्ये । तमसि । अज्ञानकृतविपर्यये । निर्णयासामर्थ्ये । व्याकुलताहेताव विवेके ॥ मोहेनभवतिभेद क्लेशा सर्वेपितन्मूला ॥ अस्याष्टविधोभेद । देवाद्यष्टविधमैश्वर्यमासाद्यामृताभिमानिन अणिमादिकमात्मीय शाश्वतमभिमन्यन्तइति सोयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविध ॥ मोहनम । मुग्धवैचित्त्ये । घञ् ॥ धर्मविमूढत्वे ॥ मोहोधर्मविमूढत्व मानस्वात्माभिमानिता ॥ मोहवृक्षोयथापाद्मे । सुमनोवाच । श्रूयतामभिधास्यामिसर्वसन्देहनाशनम् । स्वरूपमुपदेशस्यसर्वविज्ञानदर्शनम् ॥ लोभ पापस्यबीजोऽयमोहमूलन्तु तस्यहि । असत्य तस्य स्कन्धोमायाशाखासुविस्तर ॥ दम्भकौटिल्यपत्राधिकुकृत्यापुष्पि । सदा । पैशुन्य तस्यसौगन्ध्यमज्ञान फलमेवहि ॥ छद्मपाषण्डचौराश्चकूटा क्रूराश्चपापिन । पक्षिणोमोहवृक्षस्यमायाशाखासमाश्रिता । अज्ञानन्तुफलतस्यरसोऽधर्म । फलस्यहि । भावोदकेनसंवृद्धस्तस्यसत्त्वास्यतुप्रिय । अधर्मस्तस्यसुरभिकोदस्वमधुरायते । तादृशैस्स्वफलैश्चस्यसुफलोलोभपादप ॥ तस्यच्छायांसमाश्रित्ययेनर परिवर्त्तते । फलानितस्ययेऽश्नातिसुपक्वानिदिनेदिने ॥ फलानान्तुरसेनैवअधर्मणतुपोषित । सुसम्पुष्टोभवेन्मर्त्य पतनायप्रयच्छति ॥ इति ॥

मोहकलिलम् । न० अविवेकात्मकालुष्ये । अहमिदममेदमित्यज्ञानविलसिते ॥ रजस्तमोमले ॥

मोहन । पु० कामदेवस्यबाणविशेषे ॥ धूस्तूरवृक्षे । गर्वे । न० ग्राम्यधर्मे । सुरते ॥ होममन्त्रौषध्यादिद्वारामुग्धताकरणे । त्रि० मोहकारके ।

मोहनलीला । स्त्री० सुरक्रीडायाम् ।

मोहना । स्त्री० त्रिपुरमालीपुष्पे । मकन्मालायाम् । पृक्कायाम् ।

मोहनी । स्त्री० उपोदक्याम् ॥ वटपत्र्याम् ॥

मोहपथ । पु० विपर्ययसंशयतर्कमानप्रमादभयशोकेषु ॥ मोहस्यपथ ॥

मोहरात्रि । स्त्री० जन्माष्टम्याम् । कृष्णजन्मतिथिप्रोक्तामोहरात्रिस्ससा मता ॥ अपिच । जन्माष्टमीमहेशानिमोहरात्रि नप्रलये ॥ यथा । एवपञ्चाशदब्द गतेतुब्रह्मणोनृप । दैनन्दिनस्तुप्रलयविशेषु परिकीर्त्तितम् । मोहरात्रिश्च साप्रोक्तावेदविद्भि पुरातनै । तत्रसर्वेप्रणष्टाश्चचन्द्रार्कादिदिगी

ह्वरा ॥ इत्यादिब्रह्मवैवर्त्तपुराणम् ॥ महाप्रलये॰ इ॰ कश्चित् ॥

मोहशास्त्रम् । न॰ अविद्याजनकग्रन्थे ॥

मोहान्धकार । पु॰ अज्ञानध्वान्ते ॥

मोहित । त्रि॰ विवेकायोग्यत्वमायाहिते। निर्णयासामर्थ्यप्राप्ते १ मोह सञ्जातोऽस्य । तारकादित्वादितच् ॥ अनात्मसु देहेन्द्रियादिष्वात्माभिमानरूपयुक्ते पुरुषे ॥

मोहिनी स्त्री॰ त्रिपुरमालिकापुष्पे॥ पृक्कायामोषधौ ॥ शास्त्रीयज्ञानभ्रमहेतुभूतायाप्रकृतौ ॥ समुद्रमथनकालेदेवानाममृतपानायासुराणांमोहनायचभगवदवतारविशेषे॥ स्वर्वेश्याविशेषे

मौक्तिकम् । न॰ मुक्तायाम् । सुन्दरत्वे । मुक्ता,फल । मोती॰ इ॰ भा॰ ॥ मौक्तिकंशीतलंवृष्यं चक्षुष्यं बलपुष्टिदम् ॥ अपिच । मौक्तिकञ्च मधुर सुशीतलं दृष्टिरोगशमनं विषापहम् । राजयक्ष्मपरिकोपनाशनं क्षीणवीर्यबलपुष्टिवर्द्धनम् ॥ अस्यलक्षणयथा । नक्षत्राभंसुवृत्तमत्यन्तमुत्तास्निग्धं स्थूलंनिर्मलंनिर्व्रणञ्च । न्यस्तं धत्तेगौरवंयत्तु लग्नं तन्निर्मौल्यं मौक्तिकसौख्यदायि ॥ अस्यदोषलक्षणयथा । शक्तिच्छायंमौक्तिकञ्च श्चायंशुक्तिस्पर्शं रक्तांचातिधत्ते । मत्स्याक्ष्यञ्च रूक्षमुल्लानमत्यन्तंतथार्थं धीमतादोषदायि ॥ अष्टधामौक्तिकयथा । मातङ्गोरगमीनपोत्रिशिरसत्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्चमौक्तिकमपि स्पष्टं भवत्यष्टधा॥ मौक्तिकविशेषोयथा । छायापाटलनीलपीतधवलास्तत्रापिसामान्यतस्तासांनावहुशोनलब्धिरितिचेच्छौक्तिकतुल्यम् ॥ अस्यपरीक्षायथा । लवणक्षारचोद्दिनिपात्रेऽजगोमूत्रपूरितेक्षिप्तम् । मर्दितमपिशालितुषैर्यद्विकृततन्मौक्तिकजात्यं । मुक्तौ च । विनयादिभ्यष्ठक् ।

मौक्तिकतण्डुल । पु॰ धवलयावनाले॥

मौक्तिकदाम । न॰ वर्णवृत्तप्रभेदे ॥ यथा । पयोधरमत्रचतुष्कमवेहिविलाघवतो किलषोडशदेहि । भुजङ्गपतेहृदिमौक्तिकदामसुवृत्तमिदंशृणु मौक्तिकदाम ॥ यथा । मयातवकिञ्चित्कारिकदापिविलासिनिरासमनुस्मरतापि । तथापिमनस्तववनान्तरसनायव्रजामिकयंभवतीमपहाय॥

मौक्तिकप्रसवा । स्त्री॰ शुक्तौ ॥

मौक्तिकयोनि । पु॰ शुक्तिशङ्खाद्यष्टसु ॥ यथा । शुक्ति शङ्खोगज क्रोड फणीमत्स्यश्चदर्दुरः । वेणुरेतेसमाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥ अगस्त्योप्याह । जीमूतकरिमत्स्याहिवंशशङ्खवराहजा । शुक्त्युद्भवाश्च विज्ञेयाअष्टौमौक्तिकयोनयः । इति।

मौनेय । पु॰ गन्धर्वगणविशेषे ॥

मौरजिक । त्रि॰ मार्दङ्गिके । मुरजवादके ॥ मुरज लक्षणयातद्वादनशिल्पमस्य । शिल्पमितिठक् ॥

मौर्ख्यम् । न॰ जाड्ये ॥ मूर्खस्यभाव । वर्णदृढादिभ्य ष्यञ् चेतिष्यञ् ॥

मौर्वम् । न॰ काण्डे ॥ भस्मनि ॥ मूर्वाया विकार अवयवोवा । अण् ॥

मौर्वी । स्त्री॰ ज्यायाम् धनुर्गुणे ॥ मूर्वायाविकार । अवयवोवा । पूर्वोक्तोऽण् । ङीप् । अ ...

मौल । पु॰ वंशपरम्पराक्रमेणागते-शास्त्रस्थायिनि ॥ भूम्यादेर्मूलज्ञातरि । गोडल । यथा । यपरम्परयामौला सामन्ता स्वामिनविदु । तदन्वयसमागतपुरातनस्यागोचलैर्महौ । तस्तच्चयया । ये तत्रपूर्वसामन्ता पश्चाद्देशान्तरगता । तन्मूलत्वात् ते मौलास्तेऽपिभिपरिकीर्त्तिता ॥ मन्विद्वद ॥ मूलादागत । मूलेभवोवा । अण् ॥

मौलि । पु॰ स्त्री॰ किरीटे । धम्मिल्ले संयतकेशे ॥ चूडायाम् ॥ मूर्द्धनि ॥ पु॰ अशोकपादपे ॥ स्त्री॰ भूमौ ॥ मूलस्यादूरभव । सुतङ्गमादित्वादिञ् ॥ यद्वा । मूलस्यापत्यम् । अतइञ् ॥

मौषलम् । न॰ मुषलतुल्ये ॥ यथा । गङ्गायामौषलस्नानमहापातकनाशनम् । महाभारतस्यपर्वविशेषे ॥

मौष्टा । स्त्री॰ क्रीडाविशेषे ॥ मुष्टि प्रहरणमस्यांक्रीडायाम् । तदस्यां प्रहरणमितिण । टाप् ॥

मौहूर्त । पु॰ ज्योतिर्विदि । दैवज्ञे । मुहूर्त्तमधीते॰ वेदवा । तदधीतेत॰ देत्यण् ॥

मौहूर्त्तिक । पु॰ गणके । ज्योतिर्विदि । मुहूर्त्तमधीते॰ वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

म्रक्ष । पु॰ स्वदोषगूहने ॥ म्रक्षणे ॥

म्रक्षणम् । न॰ स्नेहने । अभ्यङ्गे ॥ तैले ॥ स्निग्धतायाम् । उपयज्यादिव्या ... सधीची ।

म्रदिमा । पु॰ मार्दवे । मृदुत्वे ॥ म्रदिमन् । पृथ्वादिभ्यइमनिज्वा ॥

म्रदिष्ठ । त्रि॰ म्रदीयसि ॥ मृदुतम् ॥

म्रदीयान् । त्रि॰ अतिमृदुतरे । अतिशयेनमृदु ॥ ईयसुन ॥ ... ।

म्लातकम् । न॰ कैवर्त्तीमुस्तके ॥

म्लियमाण । त्रि॰ मरणासन्ने ॥

म्लुक्तम् । न॰ चोरिते ॥

म्लान । त्रि॰ मलिने । कातरे । म्लै गतौ हर्षक्षये । क्त । संयोगादेरातोधातोर्यण्वतइतिनिष्ठातस्यन ॥

म्लाना । स्त्री॰ रजस्वलायाम् ॥ म्लायति स्म स्त्री॰ । गत्यर्थेतिक्त । संयोगादेरितितस्यन । टाप् ॥

### श्रीएकलिंगोविजयते

शम्भुर्जगत्सुखकर प्रभुरेकलिङ्ग
शैलप्रधानशिखरस्थसुशैवपुर्य्याम् ॥
रम्यद्रुपुष्पितलताङ्कुरशोभितायां
सराधितोद्विजगणैरवतात्सुवंशम्
॥ १ ॥
सुमेदपाटप्रवरोनृपोय शिवावतार
परिगृह्यराज्यम् ॥ करोतितस्मा
द्दिरमागतस्थन् शिवार्चनपुत्रवदात
नोति ॥ २ ॥
भूप श्रीसज्जनेशो जगतिगुणगण
वर्द्धयन्राजतेयसद्वाविद्यासु मृग्य
सकलजनमनो गह्वरशोभयन्त्य
द्रष्टुचक्षुर्नृपाल भवतुसुनगरे
सर्वविद्याप्रधानो यस्मिन्कार्येव
रिष्ठस्तदखिलसुमत सर्वराज्येप्र
वीण ॥ ३ ॥
श्रीमत्श्रीसज्जनेशस्सकलहितकरो
राज्यकार्ये षुदक्ष स्वीय हस्त
विचिन्वन्निखिलगुणचय वर्द्धयि
ष्यु सहिष्णु । तिष्ठन्गच्छन्स
दायो नयजनसहितोभव्यकर्मप्रव
त्त कोशाटौसेतिहासविवरिषति
धियास्वीयवाछानुकूल ॥ ४ ॥

### स्ववंशवर्णनम्

श्रीबाप्पो योहि वापा सकल जन
मतो रावलेति प्रसिद्धो येनेदचित्र
कूट विदित सुनयतोभूपमानाद्य
मौर्यात् ॥ नेस्ततश्चभूपागजयत
वातमेवै नरावलीयास्ते सर्वेभाग्य

### स्ववंशवर्णनम्

वन्तोवहुवलिगुणिनो राज्यकार्येसु
दक्षा ॥ ५ ॥
श्री विक्रमीय शतके युगचन्द्रवर्षे
श्री राहपो नरपति र्बहुभाग्य
शाली ॥ तेनादि रावल पदाद्धि
धृताद्धिराणातत् संज्ञया नृपतय.
प्रथिता भवन्ति ॥ ६ ॥
तेषांहि वंशे जयसिंह भूप श्रील
क्ष्मणोसावजयो नृपेश ॥ नाम्ना
ऽरि हम्मीर नृपा वभूताम् श्रीक्षेत्र
सिंहोऽवनिपोवभूव ॥ ७ ॥
श्रीलक्षसिंहो वहुवीर योद्धावीर-
प्रतापोसकलारिहन्ता । पश्चान्नृपो
मोकल ववीरधर्मा धर्मार्थकामादि
कक्रमकर्ता ॥ ८ ॥
शून्याऽङ्काऽब्धीन्दु वर्षे सचिव
जनहित कुम्भकर्णो भिषिक्तो
राज्ये श्रीमोकलीये नयपद रचना
दक्ष वीर प्रतापी ॥ येनस्वीयेन ना
म्ना वरतम नगर कुम्भलो मेरुदु
र्ग देशेस्मिन् स्थापितो सोतद
वनिप यश कीर्तयन् भाति
साम्ब ॥ ९ ॥
पञ्चाब्धिन्दु वर्षे उदय पतिनृपो
राज्यसिंहासनस्थ । सस्वीये नैव
दुष्टा चरण पदहतो भूत्कनिष्ठ .
स्थितोभ ॥ शून्यचोब्धिन्दुवर्षेसक
लजनमतो रायमल्लोवभूव सयाम
स्तस्यपुत्रोरसच्चतुरश्चेराज्यसिंहा

सनस्थ ॥ १० ॥
मायाष्टे च्चिन्दुवर्षे निखल जन
हितो रत्नसिंहो बभूव नन्दाष्टे
च्चिन्दु वर्षे सुनयन रुचिरो विक्रम
स्तस्यभाता । दृग्ङ्के च्चिन्दौ
हत्वा समय नरपतिबाणवीर
कुदासो वेदाङ्के च्चिन्दु वर्षे उदय
नरपति स्तनिराकुल्यभूप ॥ ११
षट् चन्द्र त्विन्दु वर्षे बृहदुदय
महा सागरस्याख्यपुर्या प्रारम्भे
महीप ' सम भवततुल स्तत्पूर्वी
चकार ॥ वेदघूङ्केन्दु वर्षे उदय
नरपतिश्चित्रकूटे उपेत्य चेन्द्रप्रस्थे
थमाप्तो अकबर यवन सजिगा
यातियुद्धे नागघूङ्केन्दुवर्षेनवतपन
सम श्रीप्रतापादिसिंह ॥ १२
चौप्वङ्केन्दौमितिब्दे अमरनरपतौ
राज्यसिंहासनस्थ ग्रास्वाघूङ्केन्दु
वर्षेनव तरणि सम कर्णसिंहो
हितस्थौ ॥ वेदाष्टत्विन्दु वर्षेनय
निपुणजगत्सिंहभूपोद्युदारोनन्दा
श्वान्द्रीन्दु वर्षे सकल जनसुहृद्
राजसिंहस्सरेजे ॥ १३ ॥
सुमेदपाटे रचितं सरोवरम् स्वराज
सामुद्रिकनामशब्दितम् ॥ सुराज
सिंहेन कृतार्थं कर्मणा सुरम्य
कूलेभवने सुशोभितम् ॥ १४ ॥
सप्तत्यद्रीन्दु वर्षे शुभगुणनिरत
श्रीजयाख्यादिसिंहो येन स्वीयेन

नाम्ना बहुजल निलये निर्मितं
दिव्यखातम् ॥ षट् पश्चाद्रीन्दु
वर्षे ह्यपर नरपति राज्यदक्षो
द्वितीय सप्तत्वद्रीन्दु वर्षे सकल
सुखदसंग्रामसिंहोन्यभूप ॥ १५ ॥
शून्या ऽक्षा ऽद्रीन्दु वर्षे अपरनृप
जगत्सिंहभूपश्च तस्थौ ॥ सप्ताश्वाष्टे
न्दु वर्षे सुगुणपरनृप श्रीप्रतापा
दिसिंह ॥ १६ ॥
शून्ये नवष्टेन्दु वर्षे अपरनरपतो
राजसिंहो नृपाली नागेनूष्टेन्दु
वर्षे कुजन कुपथहन्तारिसिंहोबद्दा
न्य ॥ १७ ॥
नन्दवाष्टेन्दुवर्षेऽपरनरपतिहमीर
सिंहोनृपालो वेदत्र्यष्टेन्दु वर्षे बहु
बलचपलोभीमसिंहोनरेश ॥ बा
णाष्टाष्टेन्दु वर्षे रुचिरवचनयुक्
श्रीजवानादिसिंह पश्चाद्बाष्टेन्दु
वर्षेसकलजनहितोभूपसर्दारसिंह
॥ १८ ॥
नन्दाङ्काष्टेन्दु वर्षे प्रबलभटहित
श्रीस्वरूपादिसिंहोभूपोदानीयशस्वी
सकल जनहितो लोक विख्यात
कीर्तिः ॥ शीघ्र त्यागी स्वराज्य
गज हय धनत पूर्णयन् सर्वसा
र सर्वराज्ये प्रबधनयनिपुणधिया
प्राकृतोदार शील ॥ १९ ॥
नागेनङ्काङ्केन्दु वर्षे गुणिजनसुखद
शम्भुसिंहोबभूव भोगीदानीकृपालु

श्री १०८ श्रीसज्जनसिंह

बहुविध रसिको रूप लावण्य युक्त । अल्पायुर्भोगभोक्तानिखिलजनहितो धर्मशील स्वलोकाच्च भुभूं मौखलीलां निखिलसुखकरीं सविधायाप्युयात ॥ २० ॥

इन्द्वत्यङ्कन्दुवर्षे सकल सुखकरे सर्वस पन्निधाने श्रीमच्छ्रीसज्जनेश स्तु जनसचिवयुक् राज्यसि हासनस्थ । सर्वंकार्यंविजानन्सुनयगुणधिया स्वल्पकालेन पूर्वं पश्चाच्चात्मयोग्यानखिलजनहितान्व्यापयन्राजतेयम् । २१ ।

स्तीयान्राज्यार्थदक्षान् सचिवनयगुणान् स्वासवीच्य सर्वान रास्त्राचिन्तानुकूलनिखिल समयक प्रेमपूर्वानु भाषम् ॥ नित्यानन्द प्रकाश कविगुणकविताकर्मस स्फापूर्ति भावा भावप्रकार प्रकटयति भरोय समेषास्ति मन्त्री ॥ २२ ॥

भूपालाश्च तिकिंचित्सुखरसरता स्वार्थभाजश्चभाज किंचिद्धितानुरक्ता स्वपुरजनधनकर्षयन्तोयतत सम्यग् रीत्यासुनीत्या निखलजनपदपालयन् लालयन्श्रीमान् श्रीसज्जनेशो भुवनसुखकरोभाति लोकेयमेक ॥ २३ ॥

लोकेकार्येसमस्त कठिनमतिधिया स्वाङ्गपूर्वानुकूलं तन्नयो राजकीर्यं स्वधनजनपदश्च सत्ताभैकमूलम् ।

यावदार्यंकुलकमलमन्त्री

तत्कार्यंदक्षभूपोनयनिपुणजनेशो यतेभूपसङ्घात् सोयश्रीसज्जनेशो निखिलमतिमता राजतेमध्यवर्ती ॥ २४ ॥

श्रीमच्छ्रीसज्जनेशो नवनिधिसहितग्राष्टसिद्धैकपूर्वं तस्यद्वौमन्त्रियौ मिहिरविधुनिभौ स्वामिकर्मानुकूलौ ॥ एकश्रीश्यामलाख्योनिखिल जनमनो भारती भावदक्ष पन्नालालोद्वितीय सकलविभवयुग् राज्यसर्वाधिकारो २५ ( *++* लोभान्मोहबहिरक्तो निखिलजनहितो राज्यलाभानुरोधी सपद्यापद्यकृष्टोनयपथकुशलो मन्त्रिमुख्योहियोग्य ॥ देशेऽस्मिन्मेदपाटे रणकरणभटे सर्वशस्याढ्यभूमौसो यश्रीश्यामलाख्यो निपुणकविवरो वर्ततेमन्त्रिराज ॥ २६ ॥

काव्यालंकारवेत्ता सचिववरकविवर श्यामलोवीरसिंह । शास्त्रव्यासंग सक्तोगुणिगणरसिक पूर्णाभिलाषी ॥ कोयंशब्दार्थचिन्ताम विमतिफलद सनिरीक्ष्यासमाप्त हृत्तयथस्य सर्वं बहुधनविषय पृष्टवा न्क्षीयमित्रात् ॥ २७ ॥

प्रविश्यपादप्नातम्

सप्ताष्टाष्टेन्दुवर्षे उदयपुरपुरे श्री जवानाख्यभूपे स्वर्गाधीशेन्द्रतुल्ये सकलजनपदश्रासतिख्यातकीर्तौ ।

## कोशविषयकप्रश्नो

दैवादागत्यगौड द्विजकुलतिलक
श्रीसुखानन्दनाथ कोशशब्दार्थचि
ता मयिमतिफलद ह्यत्रसरव्यवा
न्स ॥ २८ ॥

पञ्चाशद्वर्णभागा अतिगहनतरा
शास्त्रग्रन्थस्यनून तेषामेकैकवर्णो
स्वरपदरचने दीर्घकालोव्यतीत ।
शब्दान्ख्यातान् विचिन्वन्नतिवि
दिततरे कोशसंघेहिदृष्ट्वा चेत्थ
चि शम्मिताब्दा श्रमसुरचनया
सगता कोशपूर्तौ ॥ २९ ॥

(केनप्रकारेणकुत्रकोशस्य भागद्व-
यम्मुद्रित मित्यत्रोच्यते)

श्रीमन्यदिपृच्छतिकोशवृत्त विस्ता
रपूर्वंक्रमतोयथावत् ॥ वात्सल्यमे
वानुवदेयमेत द्विस्तारत सबद
बोधनार्थम् ॥ ३० ॥

सुखानन्दनाथेन मात्प्रत्यलेखिभव-
द्भि स्वमुद्रालये कोषएष ॥
सुसमुद्रणीयश्च्युत प्रीतिभावात्त
दावोत्तर तन्मया सव्यलेखि ॥ ३१ ॥

भवच्छीलपापूर्णपत्र सुलब्धम् पठ
स्तन्निजानन्दपूर्णोलिखामि ॥ मदी
याद्दिशक्तिर्नवित्तस्यहृष्ट्या सहाये-
स्त्विशक्तिस्ततोदीर्घभूता ॥ ३२ ॥

तदारब्धचिता सुकोशार्थमेषामदी
येहृदिव्यापिनीभव्यभावा ॥ कथमी
नक्कमावन संप्रयाचे जगत्यालिके
पूरिता शेम्वहित्वम् ॥ ३३ ॥

## श्रीघासीरामकथनम्

दैवात्सुरम्ये यमुनानिकूले चया
दिपौरस्थितताजगञ्जे ॥ श्रीघासि
रामस्य सुहृद्वरस्य यशोधरस्यास्य
समागमोऽभूत् ॥ ३४ ॥

मित्र प्रसन्ना ननभृत्यसेव्य सानन्द
मायान्त ममदगत्या ॥ अस्यामि
दानीं भरतस्यभूमौ दृष्टाहितुल्या
नहिदानशूरा ॥ ३५ ॥

श्रीमन्सखेकि कथितभवद्भि सर्वं
स्थितस्वल्पमनल्पमस्याम् ॥ कस्या
पिबाहुल्यमतीव चास्तिन्यूनत्वम
न्यस्य जगत्प्रभावात् ॥ ३६ ॥

श्रीमन्सखेकिं कथितभवद्भि शूरा
नसतीदमसत्यवाक्यम् ॥ शौर्यंच
कश्चि द्दनतोहिकश्चिन्न वचित
क कातरोहिशूर ॥ ३७ ॥

शूरधनाच्चेच्छसि कार्यदत्त मत्तो
यदाज्ञापयतत्करिष्ये ॥ श्रीमत्कृ
पातोधनत समर्थो ह्यतावकीनो
निजभृत्यमुख्य ॥ ३८ ॥

जानामिसन्मित्र मुदारभाव त्वासा
दरप्राप्यवदामिहृद्यम् ॥ कृन्द्रस्यपु
र्यांतवमातुलोस्ति विद्वद्वरोधी तस
मस्तविद्य ॥ ३९ ॥

तेनैककोशो रचितोद्भुतोसौ चिश
न्मिताब्दे नवहुप्रयासात् ॥ द्रव्य-
व्ययीलोक हितार्थकारिन् तन्मु
द्रणकारयभोसमर्थ ॥ ४० ॥

श्रीमन् सखेस्मिन् सुकृते हिकार्यें

द्रव्यंकियत्त्व मितमत्रयोग्यम् ॥ श्रु-
त्वातद्दाविंशतिकसहस्र देयभवद्भि
र्नततोधिकञ्च ३९ ॥
एतन्मितद्रव्य सुदानकार्ये शक्तिर्म
दीयाभवत प्रसादात् । प्रात स
मागत्यमदीयगेहे द्रव्यंगृहीत्वाकुरु
मासनाथम् । ४० ॥
प्रातर्घासीय रामस्थलमति रमुल
प्राप्यहृष्ट कृतञ्चस्त मांसवीच्यश्री
घ्रान्निजजनसहितत्रासमादुत्थितस्ता
न् ॥ गाढव्यालिंग्यमोदाद्दतिनमन
तयास्थापयनदत्तभागेस्थित्वाग्रेवहस्त
स्त सगदतिधनदस्तत्रनस गृहाण
॥ ४१ ॥ हस्तगृहीत्वातधनस्थकोशे
यत्रस्थिता सन्निधनस्यपेटा ॥
नीत्वाऽवदत्स्वीकुरुतद्विचित्तम् वा
छाढ्ननेतद्धृदयेनवाञ्छा ॥ ४२ ॥
घासीरामकथनात्पण्डितवंशीधर
स्येन्द्रपुर्य्यागमनम् ॥
इत्यविचार्येयन्द्रिशक्रपुर्य्यां गत्वाभ
वन्तनयग्रन्थकारम् ॥ यास्यामि
सकल्पकारस्तदङ्कि वित्ताञ्छितपत्र
मवाप्ययात । ॥ ४३ ॥
इन्द्रप्रस्थेसुरम्येबहुदिनवशतोमुख्य
मित्रैघषाय चायान्तदूरदेशाद्विबु
धवरसुखानन्दनाथोनिरीच्य ॥ च
भ्युत्थानञ्चिदत्वानिजजनसहित स्था
पयन्नग्रभागे धन्योस्मित्वीय मित्र
निज भवनगत वीक्षयामि प्रस



न्नम् ॥ ४४ ॥
धन्योस्मिवीच्य कुशलाङ्गसमस्तदे
ह श्रीमन्नमयद्दयथासहगच्छचा
यम् ॥ कोशस्यमुद्रणविधींकुरुयत्न
माशु वित्तप्रदास्यतिपरतवभागि
नेय ॥ ४५ ॥
सिद्धि कृता भगवता खिलवित्तरू
पा तस्मात्समेत्य कृपयागमनार्थमे
काम् ॥ पत्रसुप्रेषयततोनिजकर्मकृ
त्वा याश्याम्यहजवतयाभवदन्निकू
लम् ॥ ४६ ॥
कृत्वापण स्वपुरतस्तव भागिनेया
द्यातोस्मिकार्यमभिधायजवाद्भवी
यम् ॥ दास्यामिचायदिवसेनिज
हस्तपत्रगच्छामितत्रवहुकालसमा
गम स्यात् ॥ ४७ ॥ घासीयराम
सुहृदस्वसुपत्रहस्त मावीच्यपत्रनि
खिलाशयमाभिगम्य ॥ सानन्दतो
ह्यभिवदन् किमुकार्थ मद्यपत्र
सुप्रेषययतत्सबुध प्रयातु ॥ ४८ ॥
पत्र विलिख्य ददतेस्म सुडाकगेहे
ततप्राप्यपण्डितवरस्स समागतोच
सर्वं सुसाधन मयत्वरया गृहीत्वा
कोशस्यकार्यमचलत् प्रतिवासरत
त् ॥ ४९ ॥
दत्ताधुना द्धिकदाम सुमुक्त्यभावे
कोशस्यकार्यमरुधन्तितदर्द्धजाते ॥
पश्चादनी सहिबुधोपि परत्रगत्वा
शोकस्तयो स्वामभवन्नगरस्य मध्ये

जनगणादेशर्द्दगात् प्रयान्तिभाग्या तृसर्वेमनुष्या न्नृपवरविहिताजीवि कांसलभते ॥ ६१ ॥
भूपालाभाव्यवन्त स्सुखरसपरा स्वेननाम्नाद्यकार्षू रम्यस्थान सम न्तात् निजमहिमधिया वर्तयन्त स्वदेशे ॥ यत्स्थान तीर्थभूत बहु समयवशात्केनदृष्टिर्नदृष्टा तत्सर्वे सज्जनेशो विपुलधनचयान्नव्यवत्स विधत्ते ॥ ६२ ॥
पद्मक्लिन्नार्ति भ्रष्टोदयपुरनगरीये- महद्द पुरायस्तस्मिन्सर्वंचवीथ्यावि विधनगलताद्दश्यतेसर्वभागे ॥ ए स्था सवाङ्गशुद्दा पुलिस जनगणै वीक्ष्यतेसर्वकाले श्रीमच्छ्रीसज्जने न्द्रप्रनियत नियम।स्स निरीक्ष्याति ह्वष्ट ॥ ६३ ॥

दत्तानिपदानि प्रतिष्ठाया श्रीमेदपाट प्रभुणाप्रराज्ञ्य ह्वर्ति ना ॥ पदद्दत्तप्रतिष्ठाया कवि श्यामलधीमते ॥ ६४ ॥
कविराजपदचैक मभ्युत्थानद्वितीय कम् । तृतीयस्यर्शन चाङ्के चतुर्थं पादभूषणम् ॥ ६५ ॥
हेमादिकंचतत्सर्वेबोटीदानंचपञ्च मम् ॥ सुासनस्थास्करत षष्ठद ताहिमुद्रिका ॥ ६६ ॥

मुद्रिकाशय .

राणा श्री सज्जनेन्द्रस्य चरणाब्ज प्रसादत ॥ कविराज पदख्यात श्यामलस्यैवमुद्रिका ॥ ६७ ।
इत्याद्यन्या पदव्योपि बहुसम्मान सूचिका । दत्ता श्रीसज्जनेन्द्रे णकविश्यामलधीमते ॥ ६८ ॥
श्रीनरेशस्यहिप्रीतिर्यथाश्यामलधी मति । विश्वासभूतासत्याङ्गीनत थान्यत्रदृश्यते ॥ ६८ ॥
श्रीमच्छ्रीसज्जनेन्द्रादरनियमवशा त्श्यामलप्रेरणात कीश शब्दा र्थचिन्तामणिगुणनिकर । स्यश क पूर्तिमागात् ॥ अम्राब्दाङ्के न्दुवर्षे बहरसिकतरेफाल्गुनेशुक्ल पक्षेदेवाचार्येतिथ्यासकलसुख करेसार्द्धवर्षद्वयेन ॥ ६९ ॥
श्रीभूप सज्जनेशो निखिल जन हिते।राज्यकार्यप्रवीणो । विद्याशा स्त्रेकदक्ष सुभटसद्दिवयुक् सर्व दाकार्यदर्शी ॥ स्वाद्दीर्घायुर्निरो ग शिवविधिकमला स्वामितुष्टो व बाली मार्कण्डेयोऽस्य जीवी वर वरदशिवाराधनाद्दीर्घजीवी ॥ ७० ॥
श्रीमच्छ्री सज्जनीयेबहुलबलतया वीरलक्ष्मीश्चनाको जिह्वाया दत्त वाणीस्फुरतुदिननिशनर्तनकारय न्ती । राज्यश्रीद्रव्ययुक्ता सकलवि भवश्रीश्चगेहेप्रपूर्णाचेत्थधान्यैर्धं नौघैर्निखिलजनचय पूर्णवित्तवि धेहि ॥ ७१ ॥

कोशशब्दार्थचिन्तामणौ तृतीयोभाग

दृग्भादि गौडकुलोत्पन्ना डी॰दाना प्रधाना॰ पनाम तुलाराम मिश्रात्मज श्रीधनपति मिश्रापरनामा श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राज आचार्य श्री मद्गिरि र नन्द नाथ भारती शिष्येण ब्राह्मावधत श्री सुखानन्दनाथा परनामधेयन विरचिते शब्दार्थचिन्तामणौ पवर्ग तृतीयोभाग समाप्तिङ्गत

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्राह्मावधूत श्री जगदानन्दनाथ प्रीतिकामे , श्रीमन्महा राजाधिराज रविकुलाव तंस महीमहेन्द्र यावदार्यकुलकमल दिवाकरै मेदपाटदेशाधीशे अखिल भूपाल मौलिमणिभि श्री १०८ श्रीयुत सज्जनसिंहे संस्थापिते उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास प्रेरणया पण्डितवाजपेयि वंशीधरेण अकिञ्चनाजितदेव शर्मणाचशोधित जीवनराम शम्भुनाथ श्यामसुन्दर गुलाबराम लक्ष्मीनाथ प्राणिनाथ लालसिंघ प्रभृतिभिर्द्विजै वर्णक्रमेणदर्भित सर्दारवेग यवनेन परमानन्द ब्राह्मणेन मुद्रित

एकोनविंशत्यधिकचत्वारिंशत्तमे १९४० वैक्रमाब्दे राजधा न्युदयपुरे सज्जनयन्त्रालये श्रीमेदपाटेश्वर कोशधनव्ययात् वाजपेयिवंशीधरस्य प्रबन्धतोमुद्रित

## शुद्धाशुद्धविषयकचिन्हानि

०—।—०

॥ नम श्रीगुरवेनम मुद्रीकृता अनेकेषाकर्त्तृत्वाद्बुद्धिविभ्रमात् । मनसोऽस्थिरहूपत्वात्स्यादेवाशुद्धिसम्भव १ अतोमुद्रीकृतेग्रन्थे ह्यपिपण्डितशोधिते । अशुद्धोद्घाटकस्यास्यपत्रस्यावश्यकमतम् २ तदेतस्यमुद्रितस्य शब्दार्थचिन्तामणिकोश शुद्धाशुद्धसूचनापत्रलेख तत्राशुद्धिर्द्विधा । शब्दाशुद्धि १ शब्दव्याख्यानाशुद्धिश्च २ इति ॥ सोभयत्रपञ्चधा । यथा । मात्राशुद्धि १ वर्णाशुद्धि २ न्यूनाक्षरा ३ अधिकाक्षरा ४ वर्णविपर्यासा ५ चेतिभेदात् । अत्रशब्दाशुद्धौसर्वत्रपूर्वस्मिन्नेवचिह्नमेतत्० । व्याख्यानाशुद्धौतुपूर्वत्रचिह्नमिति—ज्ञेयम् । ततोमात्रावर्णाशुद्ध्योस्तु । अशुद्धिलेखपङ्क्तावेकमेवाशुद्धमक्षरलिख्यते । अग्ये । शुद्धलेखेतुसमस्ता शब्दालिख्यन्ते । तत्र । मात्रायांशुद्धाक्षरस्योपरिलक्षणमेव—क्रियते वर्णेतुशुद्धाक्षरस्याधशून्यम् ॥ न्यूनाधिकाक्षराशुद्ध्योस्तु ॥ अशुद्धौपूर्वपर पार्श्ववर्णयोर्वायत्पूर्वपरमुत्थितरेखादिस्यात्तस्यतस्यलेख तत्रमध्येलक्ष्मचेति—पतितरेखाया । शुद्धिलेखेतुन्यूनवर्णाधस्ताच्चिह्नमित्यमध —पतितरेखाया । अधिकवर्णाशुद्धौतुपूर्वपरवर्णमध्यलिखिताधिकवर्णस्योर्द्ध्वमेवम ऽ अशुद्धिलेखेचिह्नकृतम् । शुद्धलेखेतुयथार्थस्यैवलेख . ॥ अपिच । न्यूनानेकाक्षराशुद्धौतुपूर्ववदशुद्धलेखेपूर्वपरलेखमध्ये—एतद्रेखालेख . । शुद्धिलेखेतुलिखितन्यूनाक्षराणामधोदेशे देव देवदत्त अनेन प्रकारेण वर्णसमानातावतीदीर्घा

—— ——

रेखाकृष्यते । अनेकवर्णाधिक्येतु । अशुद्धलेखएवाधिकाक्षराणालेख . । नीचैस्तावतीदीर्घारेखाच । शुद्धौतुशून्यादि ॥ वर्णव्यत्यासाशुद्धौतु । अशुद्धलेखेवर्णयोरुपरिहंसकाङ्कयो ' क्षेप . २ १ । शुद्धलेखेतुयथायोग्यमेवेतिदर्शनीयम् ॥ अग्रे पृष्ठाङ्क प्रथम द्वितीयस्तम्भपङ्क्त्यङ्कानांक्रमेणलेख . । तत्र स्तम्भलेखे प्र० द्वि० इतिपूर्ववर्णयोर्लेखेयावत्प्रथममधोध ' शून्यमेवलिख्यतेतथायावद्द्वितीयम् ॥ अतोविशेषप्रकाराशुद्धौतु तत्रतत्रविशेषोलेख कृतोदर्शनीय ॥ यदिसज्जिरेकवार पुस्तकवर्ज्ज क्रियेतशुद्धमिदम् ॥ दर्शं दर्शं शुदधा शुद्धा दर्शं भवेत्तदिति सुक्तम् ॥ १ ॥

